ध्येयानामुत्तमं ध्येयं, जिनैः श्रीकल्प उच्यते ॥ ७ ॥ आचारात्तपसा कल्पः, कल्पः कल्पद्रुमा... ...र्दीपनः ॥ ८ ॥ वाचनात् साहाय्यदानात्, सर्वाक्षरश्रुतेरपि । विधिनाऽऽराधितः कल्पः, शिवदोऽन्तर्भवाष्टकम् ॥ तं सम्यक्, कल्पस्तत्त्वा- ...ना जिण- सासणंमि, पभावणापूअपरायणा जे । तिसत्तवार निसुणंति कप्पं, भवन्नवं गोयम ते तरंति ॥ १० ॥"

एतादृक्सुन्दरस्वरूपे सदुपदेशे श्रद्धासुविशुद्धहृदयत्वेन शङ्कासाम्राज्यं न सूत्रयन्ति, किन्तु स्वश्रेयःसाधकत्वेन समामनन्ति, यथा-सामर्थ्यं समाचरितुं समुत्सहन्ते च ।

सदृब्धं चैतत् सर्वाक्षरसन्निपातविचक्षणेन चतुर्दशपूर्वविदा युगप्रधानेन श्रीमद्भद्रबाहुस्वामिनेति तु सुनिश्चितं पर नाय भगवान् केवल-मेतस्यैव प्रणायकः किन्तु श्रीमदावश्यकादिसिद्धान्तप्रतिबद्धनिर्युक्तिकल्पदशाश्रुतस्कंधाद्यनेकसूत्रसूत्रणसूत्रधारोऽपि निर्युक्तिनिर्माणविषये तु सुविहितहितैकरसिकः स एव भगवान् स्वय प्रतिजानीते तथाहि—

"आवस्सगस्स दसकालिअस्स तह उत्तरज्झमायारे। सूयगडे निज्जुत्तिं, वुच्छामि तहा दसाणं च ॥ १ ॥ कप्पस्स य निज्जुत्तिं, ववहार-स्सेव परमनिउणस्स । सूरिअपण्णत्तीए, वुच्छं इसिभासिआणं च ॥२॥ एतेसिं निज्जुत्तिं, वुच्छामि अहं जिणोवएसेणं । आहरणहेउकारण-पयनिवहमिणं समासेण ॥ ३ ॥"

एव कल्पसूत्रं ( बृहत्कल्पः पंचकल्पश्च ) व्यवहारसूत्र चाप्ययमेव महर्षिमूर्द्धन्यो भगवान् निर्मितवान् तथा च बृहत्कल्पवृत्तिपी-ठिकायां श्रीमलयगिरिसूरिपादाः—

"इह पूर्वेषु यन्नवमं प्रत्याख्याननामकं पूर्व तस्य तृतीयमाचाराख्यं वस्तु तस्मिन् विंशतितमे प्राभृते मूलगुणेषूत्तरगुणेषु वाऽपराधेषु दशविधमालोचनादिकं प्रायश्चित्तमुपवर्णितं कालक्रमेण च दुःषमानुभावतो धृतिवीर्यबुद्ध्यायुःप्रभृतिषु परिहीयमानेषु पूर्वाणि दुरवगाहानि

|| न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ||

श्रीआत्मानन्दजैनग्रन्थरत्नमालाया एकसप्ततितमं ( ७१ ) रत्नम् ।

महोपाध्यायश्रीमद्धर्मसागरगणिविरचितकिरणावलीवृत्त्या युक्तं श्रुतकेवलिश्रीभद्रबाहुस्वामिप्रणीतम्

# ॥ श्रीकल्पसूत्रम् ॥

न्यायाम्भोनिधिश्रीतपागच्छाचार्यश्रीमद्विजयानन्दसूरिपुरन्दरशिष्यमहोपाध्यायश्रीमद्वीरविजयशिष्यपन्न्यासदानविजयगणिसंशोधितम् ।

श्रीतपागच्छगगनाङ्गणदिनमणिश्रीविजयानन्दसूरीश्वरपट्टपूर्वाचलमार्तण्डश्रीविजयकमलसूरीश्वरशिष्यरत्नव्याख्यान-
वाचस्पतिश्रीलब्धिविजयस्य सदुपदेशात् माणसावास्तव्यश्रेष्ठिवर्य-श्रीदोलतरामात्मजस्वरूपचन्द्रद्रव्यसाहाय्येन

प्रकाशयित्री भावनगरस्था श्रीआत्मानन्दसभा ।

इदं पुस्तकं मोहमय्यां वल्लभदास त्रिभुवनदास गांधी सेक्रेटरी श्रीजैनआत्मानन्दसभा इत्यनेन निर्णयसागरमुद्रणालये
कोलभाटवीथ्यां २३ तमे गृहे रामचंद्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसवत् २४४८, आत्मसवत् २६, विक्रमसवत् १९७८, सन १९२२.

तिविस्तरभयेन नास्त्यत्र स्थानं परं समालोचयिष्ये प्रायः सम्प्राप्य स्थानान्तरम्, निर्लोठयिष्ये च प्रमाणपरिशून्यं तस्य सर्वमपि कथनम्, एवं सत्यपि जैनधर्मविषये बहु व्यवसितं तेनेति त्वहमपि मन्ये, कियत् सत्यमपि प्रकाशितं, नाऽत्र केनाऽपि जैनधर्मानुरागिणा धन्यवादमृते किमप्यन्यद्वक्तव्यमासीत् ।

सूत्रकारस्यास्य महापुरुषस्य सत्तासमयस्तु सुनिश्चित एव निरस्तसकलदोषान्निष्कलङ्काच्छ्रीमन्महावीरदेवाधिदेवात् पष्ठयुगीनत्वेन द्वितीयशतके निरचायि चाऽस्य भगवतः श्रुतकेवलित्वं "केवली चरमो जम्बु, स्वाम्यथ प्रभवप्रभुः ॥ १ ॥ शय्यम्भवो यशोभद्रः, सम्भूतिविजयस्तथा । भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनो हि षट् ॥ २ ॥" इति सर्वतन्त्रस्वतन्त्रकलिकालसर्वज्ञश्रीमद्धेमचन्द्राचार्यवचनात्सुस्पष्टं, तच्च सम्पूर्णचतुर्दशपूर्वधराणामेव, त एव पञ्चमज्ञानीव देशनाविधाने श्रुतज्ञानबलेन सामर्थ्यशालिनो नान्ये, तथाविधज्ञानाभावात् ।

महापुरुषप्रणीतत्वेन मङ्गलमयसकलतत्त्वाधारभूतत्वेन च परममङ्गलमेतत्सूत्रं, तत्रभवता श्रमणानां विशेषतश्चावस्थाने वर्षावासस्य, तस्य कषायनिवारणप्रत्यलसांवत्सरिकप्रतिक्रान्तिसकलकर्मक्षयक्षमसुविशुद्धतपःकर्मप्रभृतिप्रचुरतरधर्माधारत्वात्, अत एव समाचारोऽयं शास्त्रीयो यदुत–यदा भवति श्रमणानां भगवता वर्षावासस्य सुयोग्ये क्षेत्रे सुदृढा वर्षावासीया समीहा, तदा पञ्चसु निशासु निशीथवर्णितविधानेन समस्तसाधुमध्यगता गीतार्था कुर्युः कल्पकर्षणम्, भवत्येव तेन प्रशस्तपरिणामानां पुरुषप्रवराणां निःशङ्कं विघ्नव्रातस्य विलयः, सुविशुद्धाचारशालिना साध्वीनां च श्रावणं दिवापि, परमेतत् कर्षणादिक विहितयोगानुष्ठानानामर्हति, यतो न समस्ति सार्वज्ञमते केवलं ज्ञानादेव साध्यसिद्धिस्तत्र तु क्रियाया अपि प्राधान्यम्, योगानुष्ठानेषु हीनश्रद्धानास्तु शासनबाह्या एव, श्रद्धाशून्या अपि ते स्वकीयशासनान्तर्वर्त्तित्वज्ञापनार्थं समाश्रयन्ति कुटान्याहाराशुद्ध्यादीन्यालम्बनानि परं तानि तु तेषां दुष्टाभिनिवेशवशवर्तित्व ख्यापयन्ति, यतः केनाऽपि न व्यादिष्टं नोपदिष्टं च यद्रक्षणीयमेतत् भविष्यत्यन्यथा महान् प्रत्यवायो विधि-

एतेन केचिद्दुर्विदग्धाः गृहस्थानामप्यस्य वाचनं श्रावणं च समर्थयन्ति तत्तु दूरोत्सारितमेव, परं ये स्वयं पण्डितंमन्या श्रमणवत् साध्वीनामपि पट्टमधिरुह्योपदेशप्रदानं समर्थयन्ति तेऽपि नैव विदन्त्याप्तागमस्यैदम्पर्य्यमित्यपि सुनिश्चितम्, यतो न जिनशासने स्त्रीप्राधान्य किन्तु पुरुषप्राधान्यमेव, अत एव तत्त्वज्ञैरेकोनविंशतितमतीर्थपतिश्रीमल्लिनाथाधिपत्यमप्याश्चर्यान्तर्गततयैव प्रतिपादितम्।

अस्य सूत्रस्य भगवत उपरि जातेष्वपि चूर्णिटिप्पणान्तर्वाच्यादिषु प्रतिपर्युषणं वाचने श्रवणे चापि न तथाविध आनन्दो वाचकानां श्रोतॄणां च, यतस्सुन्दरमपि सक्षिप्तं स्थूलशेमुषीणां नैव भवति संतोषप्रदं, विस्तररुचीनां विस्तरत एव सद्बोधात्, अत एव वाचकपुङ्गवश्रीमद्धर्मसागरगणिभिर्विहितेयं कल्पकिरणावलीनामा सविस्तरा सुरम्या च वृत्तिः, समयश्चास्याः सप्तदशीयो वैक्रमशतक इति प्रान्ते तैरेव स्थापितेन—

"व्याख्योपयोगीनिश्शेष-वाच्यरुच्या वचस्विना। स्फूर्त्तिकर्त्री सदस्येषा, श्रीकल्पकिरणावलिः ॥ १ ॥

विक्रमादष्ट्युक्पट्क-शशाङ्काङ्कित( १६२८ ) वत्सरे। दीपोत्सवदिने दृब्धा, राजधन्यपुरे पुरे ॥ २ ॥ युग्मम्"

अनेन श्लोकयुग्मेन सुस्पष्टं निश्चीयते। एतस्यामप्येतेषां समभूदनुपयोगसाम्राज्यम्, अत एव श्रीऋषभदेवचरित्रे "भगवतो भक्त्याऽहमेव युवाभ्यां दास्यामीति भणित्वाऽष्टचत्वारिंशत्सङ्ख्याका विद्याः" इत्युक्तं, स्थविरावल्यां चार्यरक्षमित्रानामार्यरक्षितानां चरित्रमुपन्यस्तम्, अन्यथा नैव युज्यत एतत्, यत आवश्यकवृत्त्यादिषु तासामष्टचत्वारिंशत्सहस्रसङ्ख्याकत्वं प्रोक्तम्, श्रीतोसलिपुत्राचार्यशिष्येभ्यः श्रीवज्रस्वामिपार्श्वेऽधीतसाधिकनवपूर्वेभ्यः श्रीआर्यरक्षितेभ्यः श्रीआर्यरक्षाणा श्रीवज्रस्वामिभ्यः शिष्यप्रशिष्यादिगणनया नवमस्थानभावित्वेन च स्पष्टैव भिन्नता। अथैभिः पूज्यप्रवरैर्मरीचिवचनस्योत्सूत्रमिश्रत्वसम्पादनाय संसारस्य कोटाकोटिसागरपरिमितस्य हेतुत्वमाख्यायि परं तदपि न रमणीयम्,

अर्हम्

# प्रस्तावना ।

## नमः सदा विगतद्विषे विश्ववेदिने वीराय ।

कः खलु सार्वज्ञशासनसुवासितस्वान्तसरोजः सकलशास्त्रशिरोमणित्वेन सम्पूर्णसमीहितसम्पादकत्वेन च सुविश्रुतस्यास्य श्रीकल्पसूत्रस्य भगवतस्सुप्रसिद्धमहिम्ना न समस्ति सुपरिचितः ? स्वमहिम्नाऽधरीकृतसुरद्रुमसुरधेन्वादिसकलवाञ्छितसम्पादकवस्तुस्तोमस्यास्य समुपादेयत्वं समुपास्यत्वं सुतरामावश्यकत्वं च प्रतिवर्षं श्रेयोनिःश्रेयसासाधारणसाधनसम्यगदर्शनज्ञानचारित्रनिदानपर्वाधिराजपर्युषणापर्वणि समाकर्ण्यमानतया सुविज्ञातं श्रद्धासंशुद्धशेमुषीशालिनां शिशूनामपि, यतस्ते—

"यथा द्रुमेषु कल्पद्रुः, सर्वकामफलप्रदः । यथौषधीषु पीयूषं, सर्वरोगहरं परम् ॥ १ ॥ रत्नेषु गरुडोद्गारो, यथा सर्वविषापहः । मन्त्राधिराजो मन्त्रेषु, यथा सर्वार्थसाधकः ॥ २ ॥ यथा पर्वसु दीपाली, सर्वात्मसु सुखावहा । कल्पः सद्धर्मशास्त्रेषु, पापव्यापहरस्तथा ॥ ३ ॥ कल्पः पर्युषणाभिधः कलिमलप्रध्वंसबद्धादरः, कल्पः सर्वसमीहितोदयविधौ कल्पद्रुकल्पः कलौ । ये कल्पं परिवाचयन्ति भविकाः शृण्वन्ति ये चादरात्, ते कल्पेषु विहृत्य मुक्तिवनितोत्सङ्गे सदा शेरते ॥ ४ ॥ श्रीमद्वीरचरित्रबीजमभवच्छ्रीपार्श्ववृक्षाङ्कुरः, स्कन्धो नेमिजिन[illegible]द्रुमं ॥ ५ ॥ दिमजिनव्याख्या च शाखाचयः । पुष्पाणि स्थविरव्रजस्य च कथोपादेयहेयं तथा, सौरभ्यं फलमत्र निर्वृतिरिति पुण्यं, श्रुतानामुत्तमं श्रुतम् । नार्हतः परमो देवो, न मुक्तेः परमं पदम् । न श्रीशत्रुंजयात्तीर्थं, श्रीकल्पान्न परं श्रुतम् ॥

तदभावादेव । साधुमाश्रित्य तु प्रथमान्तिमतीर्थकृत्तीर्थे श्वेतमानाद्युपेतवस्त्राणां जीर्णप्रायत्वात् तादृग्वस्त्रधारित्वेऽप्यचेला एवोच्यन्ते वाचंयमाः, न चैतदयुक्तं, तथाविधविशिष्टनेपथ्याभावादचेलकत्वव्यवहारस्य सार्वजनीनत्वात्, नञः कुत्सार्थत्वेऽपि युक्तियुक्तत्वाच्च । यदाह—"जह जलमवगाहंतो, बहुचेलो वि सिरवेढियकडिल्लो । भन्नइ नरो अचेलो, तह मुणओ संतचेलो वि ॥ १ ॥ तह थोवजुण्णकुच्छिअ—चेलेहि वि भण्णइ अचेलो त्ति । जह तंतुसालिअ लहुं, दिसु पोत्तिं नग्गिआ मो त्ति ॥ २ ॥" अजितादिद्वाविंशतितीर्थकृत्तीर्थसाधूनां ऋजुप्रज्ञत्वान्महामूल्याऽनियतवर्णाद्युपेतवस्त्रपरिभोगानुज्ञानात् तादृग्वस्त्रधारित्वेन सचेलकत्वमेव केषाञ्चित्, केषाञ्चित्तु श्वेतमानाद्युपेतवस्त्रधारित्वेनाचेलकत्वमपीति विकल्पभागेवाचेलक्यं, इत्याचेलक्यकल्पः प्रथमः ॥ १ ॥

तथा "उद्देसिअं तु कम्मं" इति वचनात्, उद्दिश्य—साधूनङ्गीकृत्य क्रियते यत्तदौद्देशिकमिति व्युत्पत्त्याऽऽधाकर्म्मेत्यर्थो विवक्षितः, तच्चाऽऽधाकर्म्मिकं प्रथमचरमतीर्थकृत्तीर्थयोर्यं कञ्चन मुनिमुद्दिश्य कृतमशनादिकं सर्वेषामपि संयतानामकल्प्यं, यदाह—"संघादुद्देसेणं, ओहाईहिं समणाइअहिगिच्च । कडमिह सव्वेसिं चिअ, न कप्पइ पुरिमचरिमाणं ॥१॥ ति" । सङ्घाद्युद्देशेन—सङ्घोपाश्रयालम्बनेन, "ओहाईहिं त्ति" सामान्यविशेषाभ्यां, तत्र सङ्घार्थमिति विकल्पः सामान्यं, विशेषस्तु प्रथमजिनसङ्घार्थं चरमजिनसङ्घार्थं वेत्यादि विकल्पः । एवमुपाश्रयमाश्रित्यापि । "समणाइअहिगिच्च त्ति" श्रमणान् श्रमणीश्चाधिकृत्येत्यर्थः, द्वाविंशतिजिनतीर्थेषु पुनः यं सङ्घादिकमुद्दिश्याधाकर्म्म कृतं (तत्) तस्यैवाकल्प्यं शेषसाधूनां तु कल्प्यं, यतः—"मज्झिमगाणं तु इमं, जं कडमुद्दिस्स तस्स चेव त्ति । नो कप्पइ सेसाणं,

वाचंयमैः पर्युषितव्यमिति । एवं व्यावर्णितस्वरूपो दशधापि कल्पो दोषाभावेऽपि क्रियमाणस्तृतीयरसायनकल्पो भवति, अतस्तदन्तर्गतः प्रस्तुतपर्युषणाकल्पोऽपि तत्कल्प एव । तृतीयरसायनस्वरूपं त्वेवं—केनापि राज्ञा निजपुत्रस्यानागतचिकित्सायां कार्यमाणायां त्रयो वैद्याः समाहूताः, तेष्वाद्यः सन्तं व्याधिमपनयत्यसति चाभिनवं वितनोति इति स्वकीयरसायनस्वरूपं निरूपयन्नेव निवारितोऽलमनेन सुप्तसिंहोत्थापनकल्पेनेति । द्वितीयस्तु संतमपनयत्यसति च न किञ्चिदुपद्रवयति इति ब्रुवाणोऽप्युपेक्षितः कृतमनेनापि भस्मनि हुतकल्पेनेति । तृतीयस्तु सन्तमपनयत्यसति च शरीरसौन्दर्यवीर्य–तुष्टि–पुष्टिप्रभृत्यनेकगुणसंपादकमितिभणन्नेव सत्कारितः, कारितं च तदीयरसायनं स्वतनयं प्रतीति । तद्वदयमपि कल्पः सन्तं दोषं शोषयति पोषयति च तदभावे चारित्रगुणान्, यतो यद्यपि संयताः समित्यादिषु यतमाना एव सर्वकालं भवेयुः, वह्वी च निर्जरा विहारे, तथापि विशेषतो वर्षासु वसुमत्या बहुप्राणाकुलितत्वेन सम्भावितप्राणबाधया एकत्रावस्थानेनैव यतनापरायणैर्भाव्यं, न पुनः शीतोष्णकालयोरिव ग्रामानुग्रामगमनादिमद्भिः, यतो गमनागमने पथि बहुप्राणबाधासम्भवेन चारित्रगुणानामपि बाधा स्यात् । श्रूयते च त्रिखण्डभोक्ता श्रीकृष्णनरेन्द्रोऽपि प्रतिदिनं प्रणामार्थं बहुगजाश्वादिनिखिलपरिवारपरिकलितषोडससहस्रमुकुटबद्धनरेन्द्राणां गमनागमनेन कुन्थुपिपीलिकाद्यनेकजन्तूनामुपघातो मा भूयादिति धिया जीवदयानिमित्तमेव वर्षाचतुर्मास्यां निजास्थानसभायामपि न समुपाविशदिति । ततो देवशयनैकादशी इति लोकरूढिरपीति । एवमन्यैरप्युत्तमैर्वर्षासु बहुसावद्यव्यापारदूरग्रामान्तरकरणपरिहारेण यतनापरायणैर्भाव्यम् । तस्मात्सर्वसावद्यवर्जकैः

जातानि ततो मा भूत्प्रायश्चित्तव्यवच्छेद इति साधूनामनुग्रहाय चतुर्दशपूर्वधरेण भगवता भद्रबाहुस्वामिना कल्पसूत्रं व्यवहारसूत्रं चाकारि।"

कल्पसूत्रग्रहणेन पंचकल्पोऽपि गृहीतस्तत्र किं प्रमाणमिति चेत् ? मङ्गलप्रतिपादिकायां पंचकल्पभाष्यसत्कायाम् "वंदामि भद्दबाहुं, पाईणं चरिमसगलसुयणाणीं। सुत्तत्थकारगमिसि, दसाणकप्पे य ववहारे ॥ १ ॥" अस्यामार्यायां कथं भगवान् भद्रबाहुस्वामी नमस्कृतः ? इत्यारेकानिरासार्थं व्यवसितं स्वयमेव भाष्यकारेण तथाहि—"तित्थगरणमोक्कारो, सत्थस्स तु आइए समक्खाओ। इह पुण जेणज्झयणं, निज्जूढं तस्स कीरति तु ॥ १ ॥" पंचकल्पचूर्णावपि "अधुनाऽस्मिन्नामनिक्षेपे पंचकल्पसंज्ञके येनेदं दशाकल्पव्यवहारसूत्रं प्रवचनहितार्थाय पूर्वादाहृतं तस्य नमस्कारं करोमि, वंदामि भद्दबाहुं" इति। एतेन पञ्चकल्पचूर्णिकारोल्लेखेनैतदपि निश्चीयते यदुत श्रीदशाश्रुतस्कन्धोऽप्यनेनैव भगवता सूत्रितः। इदं कल्पसूत्रं तु तस्यैवाष्टमाध्ययनतया व्यरचि तेन भगवतेति तु सुतरां संसिद्धम्। अनेन निर्लोठिता लुम्पकमतानुयायिनोऽपि, यतो वदन्ति ते नेदमष्टमाध्ययनं दशाश्रुतस्कन्धस्येति, सन्ति साधनानि लुम्पकशिक्षणार्थमन्यान्यपि, यतो विलोक्यते दशाश्रुतीयायां चूर्णावपि विवृतमेतत्, प्राप्यन्ते प्रतयोऽप्यनेका अष्टमाध्ययनतोल्लेखिन्यः, दृश्यते च श्रीमति स्थानाङ्गसूत्रेऽप्यस्याष्टमाध्ययनतया स्पष्टोल्लेखः, अत एव श्रीधर्मसागरोपाध्याया अपि निःशङ्कतया निम्नलिखितमवतरणमवतारितवन्तः—

"प्रणेता तावत् सर्वाक्षरसन्निपातविचक्षणश्चतुर्दशपूर्वविद्युगप्रधानः श्रीभद्रबाहुस्वामी दशाश्रुतस्कन्धस्याष्टमाध्ययनरूपतया प्रत्याख्यानप्रवादाभिधाननवमपूर्वात् पर्युषणाकल्पसूत्रमिदं सूत्रितवान्।"

एतदवतरणं दृष्ट्वा 'डॉ हर्मन जेकोबी' नामक जर्मनविदुषा 'तद्दोपदुष्टम्' इत्युक्त्वा तत्सिद्ध्यर्थं श्रमो विहितः, परमुपर्युक्तप्रमाणपरिकरेण स निरर्थक एवेति तु निश्चयो सर्वेषामपि शास्त्रानुसारिणां नाऽत्र विवादस्थानमपि, परं भविष्यति सर्वेषामप्येषाऽऽशङ्का यदुत तेन जर्मनविदुषा कुत्र तादृशः श्रमो विहितः ? श्रूयतां समाधानं, लिखिता तेन विदुषा श्रीकल्पसूत्रोपरि सविस्तरा प्रस्तावनाऽऽङ्ग्लभाषायां,

बलादयश्चारित्रकाङ्क्षिणो नानुकम्पिता भवेयुः । तादृग्निबन्धबद्धस्य तैरध्येतुमशक्यत्वात् । अत एव गणभृतोऽपि सुधर्मादयस्तेषां सुखाध्ययनादिप्रतिपत्त्यर्थमेवाल्पाक्षरं महार्थं चापि सिद्धान्तं प्राकृतनिबन्धबन्धुरमेव ग्रथितवन्तः, उक्तञ्च—"बालस्त्रीमन्दमूर्खाणां नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥१॥" प्राकृतरचनापि चतुरचेतसश्चेतश्चमत्करोति न त्वज्ञानावृतचेतसश्चेतोऽपि, उक्तञ्च—"नेच्छन्ति प्राकृतं मूर्खा मक्षिका चन्दनं यथा । क्षीरान्नं शूकरा यद्वद् घूका इव रविप्रभाम् ॥ १ ॥" इति । अथानधिकारिणा हि कृतं साङ्गमपि कर्म्म नोक्तफलाव्यभिचारि भवतीत्यत्र वाचनायां श्रवणे च केऽधिकारिण इत्याकाङ्क्षायां मुख्यतः साधवः साध्व्यश्चाधिकारिणः, तत्रापि कालतो रात्रौ कृतोद्देशसमुद्देशादियोगानुष्ठानो वाचनोचितो वाचयति, तदितरे तु शृण्वन्ति, साध्वीश्रावणादिकारणे पुनर्निशीथचूर्ण्याद्युक्तविधिना दिवापि तयोरधिकारः । सम्प्रति तु श्रीवीरनिर्वाणादशीत्यधिकनवशत ९८० वर्षातिक्रमे क्वचिच्च त्रिनवतिनवशत ९९३ वर्षातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्तस्य समाधिसाधातुमानन्दपुरे सभासमक्षं समहोत्सवं श्रीकल्पसूत्रं वाचयितुमारब्धम्, अतःप्रभृति चतुर्विधसङ्घोऽप्यधिकारी श्रवणे, वाचनायां तूक्तलक्षणः साधुरेवेति दृश्यत इति बोध्यम् ॥ तथा सम्प्राप्ते पर्युषणापर्वण्यतुलफलाव्यभिचारिकल्पसूत्रश्रवणवच्चैत्यपरिपाटी १, समस्तसाधुवन्दनं २, सांवत्सरिकप्रतिक्रमणं ३, मिथः साधर्मिकक्षामणकं ४, अष्टमं तपश्चेति ५, पञ्च कृत्यान्यपि विधिज्ञैर्विधेयानि । एतेषामपि कल्पसूत्रश्रवणवदवश्यकर्त्तव्यतापन्नत्वादभीष्टफलदातृत्वाव्यभिचाराच्च । तत्राष्टमं तपो नागकेतुवद् विधेयम्, तथाहि—

प्रसिद्धस्तस्या अनुवादः पूनात्रिमासिकपत्रद्वारा, ज्ञायते तेन यदुत तेन विदुपा तत्प्रस्तावनायां बहु व्यवसितं, परं प्रायो न समभूत् तस्य विदुपः सम्यक्परिचयः शास्त्रवेदिभिः सार्धमत इच्छाविरहेणापि विजृम्भित तत्र दोपबाहुल्य, परमत्र नैव यतिष्यते तदाविष्करणाय निराकरणाय च, यतस्तत्करणे भवति महान् निबन्धोऽत एव न विद्यतेऽत्र तत्करणे समीहा । तेन विदुपा विश्वस्मिन्नपि विश्वे विजयशालिनं शाश्वतं भगवन्तं श्रीस्याद्वादसिद्धान्त समुद्दिश्य—

“कारण के ते ( भगवान् महावीर ) गभीर अने सर्वांगपूर्णशोध ( गवेपणा ) करवाने वदले मात्र सूक्ष्म अने श्रमसाधित भेदो ( विकल्पो ) उभा करे छे. आ सिध्धान्तनु नाम स्याद्वाद छे”

अयमप्युल्लेखो विहितो निःशङ्कतया निर्भीकतया च, विज्ञायते तेन सुस्पष्ट यदुत विदुपाऽपि तेन विश्वविश्रुतेऽप्येतद्विपये किमपि न विचारित विचारणीयमपि, नात्राशङ्कालवोऽपि यतो भगवन्तं स्याद्वाद विनाऽनन्तधर्मात्मकस्योत्पादव्ययध्रौव्यात्मकस्य च वस्तुनः स्वरूपसम्प्राप्तिरपि कुतः ? विश्वव्यवस्थाऽपि तदायत्तैव नान्यथा, अत एवानिच्छुभिरपि परतीर्थिकैः सनातन तमेव शरणीकृत्य क्वचित् क्वचित् वस्तुतत्त्वविपये व्यवस्था कृता, यत्र यत्र च न स्वीकृतं श्रीमत्स्याद्वादशरणं तत्र तत्र सम्प्राप्ता एव ते परां पराभूतिम्, अत एव प्रायेण सर्वैरपि सिद्धान्तरहस्यवेदिभिर्विश्वविख्यातैर्निर्ग्रन्थचूडामणिभिः पुरुपप्रवरैः परां स्तुतिमुपनीतो भगवान् स्याद्वादसिद्धान्तः । तथाहि—

“आदीपमाव्योमसमस्वभावं, स्याद्वादमुद्रानतिभेदि वस्तु । तन्नित्यमेवैकमनित्यमन्य-दिति त्वदाज्ञाद्विपतां प्रलापाः ॥ १ ॥
य एव दोपाः किल नित्यवादे, विनाशवादेऽपि समास्त एव । परस्परध्वंसिपु कण्टकेपु, जयत्यधृष्य जिन शासनं ते ॥ २ ॥
नैकान्तवादे सुखदुःखभोगौ, न पुण्यपापे न च बन्धमोक्षौ । दुर्नीतिवादव्यसनासिनैवं, परैर्विलुप्तं जगदप्यशेपम् ॥ ३ ॥”

( अन्ययोगव्यवच्छेदाभिधद्वात्रिंशिकायां श्रीमद्धेमचन्द्रसूरयः )

राजनीतिरियमस्माकं यदपुत्रिणो धनं गृह्यते, ततो धरणेन्द्रो बभाण, अस्य पुत्रो जीवन्नेवास्ति, क्वास्तीति राज्ञोक्ते क्षितौ निखातोऽस्तीत्यभाणि धरणेन्द्रेण, ततस्तं समुत्खन्यानीतमदीधयत्तन्माता, धरणेन्द्रोऽपि स्वकीयस्वरूपं प्रादुष्कृत्य, तस्य पूर्वभवादि वृत्तान्तं राज्ञे निवेद्य, बालाय च हारं दत्वा, तिरोदधे । राजा च तद्वृत्तान्तविस्मितोऽयं यत्नेन परिपाल्य इत्यादिश्य स्वगृहं जगाम । श्रीकान्तस्य च मृत्युकर्मणि कृते निजकैः शिशोर्नागकेतुरितिसंज्ञा संजज्ञे । ततः प्रभृत्ययमष्टमीचतुर्दश्योश्चतुर्थं, चतुर्मासके षष्ठं, पर्युषणायां चाष्टमं कुर्वाणो यौवनेपि जितेन्द्रियो जिनपूजासाधूपासनपरायणः पौषधानुष्ठानतत्पर एवावतिष्ठते। एकदा सज्जनोऽपि चौरकलङ्कतो विजयसेनेन हतो दुर्ध्यानेन मृतो व्यन्तरीभूयावधिना विज्ञातात्मीयवृत्तान्तोऽदृश्यरूपभृदागत्य सभासीनं राजानं पार्ष्णिनाऽऽहत्य रुधिरं वमन्तमेव भूमावपातयत्। सभालोकोऽपि किमेतकमिति जातः । ततश्च स नगरप्रमाणां शिलां विकृत्य गगनस्थो दुर्गिरा लोकं भापयामास । नागकेतुस्तु चतुर्विधसङ्घजिनविम्बागमौकसां क्षयो मा भूत् इत्याशयतः प्रासादमारुह्य पतन्तीं शिलां तपःशक्त्या पाणिना दध्रे । व्यन्तरस्तु तत्तपःशक्तिसहनाशक्तः शिलां संहृत्य नत्वा च नागकेतुं तद्वचसा च राजानं पटूकृत्य निजस्थानमगात् । ततः प्रभृति राजमान्यः सन्नेकदा जिनेन्द्रभवने जिनपूजां कुर्वन् पुष्पमध्यस्थितसर्पदष्टाङ्गुलिरपि जिनेन्द्रमूर्त्तेः पुरतो निश्चलध्यानलीनः समूलघातं कपितघातिकर्मा उज्ज्वलं केवलज्ञानमासवान् । ततः शासनदेव्यार्पितयतिलिंगोऽनेकभव्यान् प्रतिबोधयन् भूतले विहरति स्मेति । तपसा दुःसाध्यमपि सुसाध्यमितिमाहात्म्यमवगम्यान्यैरपि तपसि यत्नपरायणैर्भाव्यम् । इति नागकेतुकथा ॥

"स्याद्वादमुद्रामपनिद्रभक्त्या, क्षमाभृतां स्तौमि जिनेश्वराणाम्। सन्न्यायमार्गानुगतस्य यस्यां, सा श्रीस्तदन्यस्य पुनः स दण्डः ॥१॥"
( रत्नाकरावतारिकायां श्रीरत्नप्रभसूरयः )

"अहो ! चित्रं चित्रं तव चरितमेतन्मुनिपते ! स्वकीयानामेषां विविधविषयव्याप्तिवशिनाम्।
विपक्षापेक्षाणां कथयसि नयानां सुनयतां, विपक्षक्षेप्तॄणां पुनरिह विभो दुष्टनयताम् ॥ १ ॥" ( स्तुतिद्वात्रिंशति )

"निःशेषांशजुषां प्रमाणविषयीभूयं समासेदुषां, वस्तूनां नियतांशकल्पनपराः सप्त श्रुतासङ्गिनः।
औदासीन्यपरायणास्तदपरे चांशे भवेयुर्नया—श्चेदेकान्तकलङ्कपङ्ककलुषास्ते स्युस्तदा दुर्नयाः ॥ १ ॥" ( पञ्चाशत्यपि )

"आकस्मिकत्वमपि तस्य भयाय न स्यात्, स्याद्वादमन्त्रमिह यस्तव सम्भणीति।
यत्साधनं यदपि साधनमन्यदीयाः, कुर्वन्ति तत्तव पितुः पुरतः शिशुत्वम् ॥ १ ॥
स्याद्वादनाम्नि तव दिग्विजयप्रवृत्ते, सेनापतौ जिनपते ! नयसार्वभौम।
नश्यन्ति तर्कनिवहाः किमु नाम नेष्टा-पत्तिप्रभूतबलपत्तिपदप्रचारात् ॥ २ ॥
स्याद्वाद एव तव सर्वमतोपजीव्यो, नान्योऽन्यशत्रुषु नयेषु नयान्तरस्य।
निष्ठाबलं कृतधिया क्वचनापि न स्व-व्याघातकं छलमुदीरयितुं च युक्तम् ॥ ३ ॥
कुतर्कैर्ध्वस्तानामतिविषमनैरात्म्यविषयै स्तवैव स्याद्वादस्त्रिजगदगदङ्कारकरुणा।
इतो ये नैरुज्यं सपदि न गताः कर्कशरुज—स्तदुद्धारं कर्तुं प्रभवति न धन्वन्तरिरपि ॥ ४ ॥"
( श्रीमहावीरस्तवे श्रीमद्यशोविजयवाचकचन्द्राः )

क्तकालान्तर्गत एव परमनिकृष्टकालविशेषः, यद्वा हेतौ तृतीया, ततश्च पूर्वन्यायादेव यौ कालसमयौ श्रीऋषभादिजिनैः श्रीवीरस्य पण्णां च्यवनादीनां वस्तूनां हेतुतया प्रतिपादितौ । न च च्यवनादीनां वस्तुत्वेन व्याख्यानमनागमिकं, चूर्ण्यादिषु तथैव व्याख्यानात्, यतः—"जो भगवता उसभसामिणा सेसतित्थगरेहि अ भगवतो वद्धमाणसामिणो चवणाईणं छण्हं वत्थूणं कालो णातो दिट्ठो वागरिओ अ । तेणं कालेणं तेणं समएणं ति ।" इति पर्युषणाकल्पचूर्णौ तथा श्रीदशाश्रुतचूर्णौ च । तेन हेतुभूतेन कालेन समयेन च समणे त्ति श्रमूच् खेदतपसोरिति श्राम्यति तपस्यतीति श्रमणो—घोरतपोनुष्ठायीत्यर्थः—यद्वा समणे त्ति पदं मूलातिशयचतुष्टयसूचकं तथाहि—"अनुत्तरसुरसंशयनिरासार्थं सत्यपि केवलज्ञाने मनसः प्रयोगात् सह मनेन—मनसा, वर्त्तत इति समना इत्यनुत्तरसुरसंशयनिरासकत्वेन ज्ञानातिशयः १ रागाद्युपद्रवशमकत्वाद् भगवानपि शमन इत्यपायापगमातिशयः २ सम्यग् यथास्थितं अणति ब्रूत इति समणो—अबाधितसिद्धान्तगतिरिति वचनातिशयः ३ सह मानेन सुरासुरनरेश्वरादिकृतपूजया वर्तत इति समान इति पूजातिशयः ४ ह्रस्वत्वं च प्राकृतत्वात् । भगवान्—समग्रैश्वर्यादिसंयुक्तः । महावीरः—कर्मशत्रुजयादन्वर्थनामान्तिमो जिनः । पंचहत्थुत्तरे त्ति, हस्तादुत्तरदिशि वर्तमानत्वात् हस्त उत्तरो यासां वा हस्तोपलक्षिता वा उत्तरा हस्तोत्तरा—उत्तरफल्गुन्यः ताश्च पञ्चसु—पञ्चस्थानेषु यस्य स पञ्चहस्तोत्तर इति भगवद्विशेषणं, निर्वाणस्य स्वातौ जातत्वात्, होत्थत्ति अभवत् । यद्यप्यग्रे निर्वाणस्याप्यवश्यं वक्तव्येनादावपि—"उसभे णं अरहा कोसलिए पञ्चउत्तरासाढे अभिइछट्ठे होत्थ त्ति" सूत्रवत् "समणे भगवं महावीरे पञ्चहत्थुत्तरे साइछट्ठे होत्थ त्ति" ।

“व्यालाश्चेद् गरुडं प्रसर्पिगरलज्वाला जयेयुर्जवाद्, गृह्णीयुर्द्विरदाश्च यद्यतिहठात् कण्ठेन कण्ठीरवम् ।
सूरं चेत् तिमिरोत्कराः स्थगयितुं व्यापारयेयुर्बलं, बध्नीयुर्बत दुर्नयाः प्रसृमराः स्याद्वादविद्यां तदा ।। १ ।।

( श्रीस्याद्वादकल्पलतायां त एव वाचकेन्द्राः )

“अनेकान्तत एवातः, सम्यग्मानव्यवस्थितेः । स्याद्वादिनो नियोगेन, युज्यते निश्चयः परम् ।। १ ।।”

( श्रीशास्त्रवार्त्तासमुच्चये श्रीमद्धरिभद्रसूरयः )

अलमधिकेनैतावतैव भविष्यति निश्चयो, यदुत नास्ति गतिरप्यविकला भगवन्तं स्याद्वादसिद्धान्तं विना, परं स पाश्चात्यपण्डितो नैव संतुष्ट एतावता, तेन तु स्वकीयं पण्डितप्रकाण्डत्वं प्रतिभाप्रकर्षत्वं च प्रदर्शनार्थं स्वीकृत्य भगवतो महावीरस्य सर्वज्ञत्वं समुल्लिखितम्—

“ तेमनुं ( भगवान् महावीरनु ) तत्त्वज्ञान अथवा परमार्थ ( अध्यात्म ) स्वरूपविषयक ज्ञान न्यायशास्त्रनी पूर्वापर संगतिनी दृष्टिए उत्कृष्ट जणातुं नथी धार्मिक विषयोना संबन्धमां तेमनी ( भगवान् महावीर देवनी ) बुद्धिशक्ति हती खरी, परंतु बुध्धमां जेवी प्रतिभाशक्ति निःसंशयरीते मानी शकाय छे, तेवी तो तेमनामां न हती ”

एतदपि, नैतन्निरासाय विधेयं किमप्यन्यत्, यतः श्रूयन्त एतद्विषयेऽप्यनेकेऽप्रतीमा विद्वत्प्रवादाः । निदर्शनभूताः पुनरिमे—

“कुहेतुतर्कोपरतप्रपञ्च–सद्भावशुद्धाप्रतिवादवादम् । प्रणम्य सच्छासनवर्द्धमानं, स्तोष्ये यतीन्द्रं जिनवर्द्धमानम् ।। १ ।।
न काव्यशक्तेर्न परस्परेर्ष्यया, न वीरकीर्तिप्रतिबोधनेच्छया । न केवलं श्राद्धतयैव नूयसे, गुणज्ञपूज्योऽसि यतोऽयमादरः ।। २ ।।
परस्पराक्षेपविलुप्तचेतसः, स्ववादपूर्वापरमूढनिश्चयान् । समीक्ष्य तत्त्वोत्पथिकान् कुवादिनः, कथं पुमान् स्याच्छिथिलादरस्त्वयि।।३।।

मासे तथेति समुच्चये शुद्धत्रयोदश्येवेति द्वितीयं २ चैवेत्यवधारणे, तथा मार्गशीर्षकृष्णदशमीति तृतीयं ३ वैशाखशुद्धदशमीति चतुर्थं ४ कार्त्तिककृष्णे चरमा पञ्चदशीति पञ्चमं ५ । एतानि किमित्याह गर्भादिदिनानि—गर्भजन्मनिष्क्रमणज्ञाननिर्वाणदिवसा यथाक्रमं—क्रमेणैवैतानि—अनन्तरोक्तान्येषां च मध्ये हस्तोत्तरयोगेन—हस्त उत्तरो यासां हस्तोपलक्षिता वा उत्तरा—उत्तरफल्गुन्यस्ताभिर्योगश्चन्द्रस्येति हस्तोत्तरयोगस्तेन करणभूतेन चत्वार्याद्यानि भवन्तीति, तथेति समुच्चये, स्वातिना—स्वातिनक्षत्रयोगेन युक्तः 'चरमो त्ति' चरमकल्याणकदिन इति प्राकृतत्वात् इति गाथाद्वयार्थः ॥ अत्र पञ्चानामेव कल्याणकानां मासाः पक्षास्तिथयो नक्षत्राणि चोक्तानि । तत्र यदि गर्भापहारोऽपि कल्याणकतयाऽऽराध्योऽभविष्यत्तर्हि तद्वत्तस्यापि मासाद्यकथयिष्यत्तच्च नोक्तमतो न गर्भापहारः कल्याणकमिति । यत्तु क्वचिदन्यत्रावचूर्णौ कल्याणकषट्कव्याख्यानमुपलभ्यते तत्तत्कर्तुस्तदंशे प्रवचनानुपयोगे सति संदेहविषौषध्यनुसरणमेव शरणम् । प्रवचनानुपयोगस्तु महतामपि संभवति । यदुक्तम्——"नहि नामानाभोगः, छद्मस्थस्येह कस्यचिन्नास्ति । ज्ञानावरणीयं हि, ज्ञानावरणप्रकृति कर्म ॥ १ ॥" न चैवं क्वचिदंशे श्रुतानुपयोगो महतां लाघवाय, गौतमस्वामिनोऽपि श्रुतानुपयोगस्याऽऽगमप्रसिद्धत्वादिति न किञ्चिदनुपपन्नम् । तथा चानाभोगादन्यत्र तीर्थसम्मतपुरुषासम्मतस्य व्याख्याने प्ररूपणे च तीर्थाशातना तीर्थबाह्यता चानिवार्यैव । न चैवमासाकीनानामपि षट्कल्याणकव्याख्यानं तत्प्ररूपणं चानाभोगादेवेति वक्तव्यम् । तत्रानाभोगगन्धस्याप्यभावात् । तत्कथमिति चेत्? शृणु, षष्ठकल्याणकप्ररूपणामूलं तावच्चित्रकूटे चण्डिकामठस्थितौ नवीनमतव्यवस्थापनहेतवे जिनवल्लभवाचनाचार्य एव,

अलब्धनिष्ठाः प्रसमिद्धचेतस–स्तव प्रशिष्याः प्रथयन्ति यद्यशः । न तावदप्येकसमूहसंहताः, प्रकाशयेयुः परवादिपार्थिवाः ॥ ३ ॥
सुनिश्चितं नः परतन्त्रयुक्तिषु, स्फुरन्ति याः काश्चन सूक्तसंपदः । तवैव ताः पूर्वमहार्णवोत्थिता, जगत्प्रमाणं जिन वाक्यविप्रुषः ॥ ४ ॥
जगत्संभवस्थेमविध्वंसरूपै–रलीकेन्द्रजालैर्न यो जीवलोकम् । महामोहकूपे निचिक्षेप नाथः, स एकः परात्मा गतिर्मे जिनेन्द्रः ॥ ५ ॥"

( द्वात्रिंशद्द्वात्रिंशिकायां श्रीसिद्धसेनदिवाकरपादाः )

"अनन्तविज्ञानमतीतदोषमबाध्यसिद्धान्तममर्त्यपूज्यम् । श्रीवर्द्धमानं जिनमाप्तमुख्यं, स्वयम्भुवं स्तोतुमहं यतिष्ये ॥ १ ॥
वाग्वैभवं ते निखिलं विवेक्तु-माशास्महे चेद् महनीयमुख्य ! । लङ्घेम जङ्घालतया समुद्रं, वहेम चन्द्रद्युतिपानतृष्णाम् ॥ २ ॥

इदं तत्त्वाऽतत्त्वव्यतिकरकरालेऽन्धतमसे, जगन्मायाकारैरिव हतपरैर्हा विनिहितम् ।
तदुद्धर्तुं शक्तो नियतमविसंवादिवचन–स्त्वमेवातस्त्रातस्त्वयि कृतसपर्याः कृतधियः ॥ ३ ॥"

( अन्ययोगव्यवच्छेदाभिधद्वात्रिंशिकायां श्रीमद्धेमचन्द्रसूरिपादाः )

स्तुत्या गुणाः शुभवतो भवतो न के वा, देवाधिदेव ! विविधातिशयर्द्धिरूपाः ।
तर्कावतारसुभगैस्तु वचोभिरेभि–स्त्वद्वागगुणस्तुतिरनुत्तरभाग्यलभ्या ॥ ४ ॥

( न्यायखण्डखाद्ये श्रीमद्यशोविजयवाचकपुङ्गवाः )

भगवतो महावीरदेवस्य गर्भापहारविषये, मातापित्रोर्विषये च निराधारं कल्पनासाम्राज्यं सूत्रयता तेन विदुषा विश्ववल्लभवीरदेवेन विश्वहिताय व्याख्यातस्य विश्वविस्मयकरस्य विविधव्रतव्रातस्य विशिष्टत्वं विरोधशून्यत्वं चानालोच्यैव "ब्राह्मणधर्मना संन्यासीओनां जे पांच व्रतो हतां तेनोज स्वीकार करेलो छे" एवं विकल्पितम्, अन्यदपि प्रमाणशून्यं बहु प्रलपितं तस्यां, तस्य सर्वस्याऽपि समालोचनस्या-

पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २ ॥

व्याख्या—तेणमित्यादितो गब्भत्ताएवक्कंते त्ति यावत्, तत्र 'तेणं ति' प्राग्वत् तस्मिन् काले तस्मिन्समये श्रमणो भगवान् महावीरः कुक्षौ गर्भतया व्युत्क्रान्त इति संबन्धः, 'जे से त्ति' यः सः, 'गिम्हाणं ति' आर्षे ग्रीष्मशब्दः स्त्रीलिङ्गो बहुवचनान्तश्च ततो ग्रीष्मस्येत्यर्थः । 'छट्ठीपक्खेणं ति' अहोरात्रस्य दिवारात्रिभ्यामुभयपक्षात्मकत्वात् षष्ठ्याः पक्षे—षष्ठ्यास्तिथे रात्रौ, णमिति पूर्ववत् । क्वचित् 'छट्ठीदिवसेणं ति' पाठः स च दिवसशब्दस्य तिथिवाचकत्वेन व्यक्त एव, महाविजयेत्यादि महान् विजयो यस्मिन् तच्च तत्पुप्फोत्तरं च—पुष्पोत्तरसंज्ञं च तदेव प्रवरेषु—प्रधानेषु पुण्डरीकं सर्वविमानेष्वतिश्रेष्ठत्वात् तस्मात् क्वचिच्चैतदनन्तरं 'दिसासोवत्थिआओ वद्धमाणाओ त्ति' पाठस्तत्र दिक्ष्ववस्थितात् आवलिकागतविमानमध्यस्थात् वर्द्धमानाच्च सर्वप्रकारेणेत्यर्थः । आउक्खएणमित्यादि आयुः—देवायुर्भवो—देवगतिः, स्थितिः—आहारो वैक्रियशरीरेऽवस्थितिर्वा, तेषां क्षयेण, अनन्तरं—अव्यवहितं चयं—च्यवनं चित्वा—कृत्वेत्यर्थः, अथवाऽनन्तरं—देवभवसंबन्धिनं चयं—देहं त्यक्त्वा—विमुच्य इहेवेति देशतः प्रत्यासन्ने न पुनर्जम्बूद्वीपानामसंख्येयत्वादन्यत्रेत्यर्थः । 'सागरोवमकोडाकोडीए' इत्यादिना चतुर्थारकस्य प्रमाणमवगन्तव्यम्, 'पंचहत्तरीए' इत्यादि, सार्धाष्टकमासाधिकैः पञ्चसप्तत्या वर्षैः शेषैः को भावः—श्रीवीरनिर्वाणात् सार्धाष्टमासाधिकैस्त्रिभिर्वर्षैश्चतु-

सिआ हरिसवसविसप्पमाणहिअया धाराहयकयंबपुप्फगं पिव समुस्ससिअरोमकूवा सुमिणुग्गहं करेइ, सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरिअमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव उसभदत्ते माहणे तेणेव उवागच्छइ, उवागच्छित्ता उसभदत्तं माहणं जएणं विजएणं वद्धावेइ, वद्धावित्ता भद्दासणवरगया आसत्था वीसत्था सुहासणवरगया करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५ ॥

व्याख्या—तएणमित्यादितो वयासीति पर्यन्तम्, तत्र हृष्टतुष्टा—अत्यर्थं तुष्टा, अथवा हृष्टा—विस्मिता, तुष्टा—तोषवती, चित्तेनानन्दिता चित्तानन्दिता, यद्वाऽऽनन्दितं चित्तं यस्याः सा तथा, मकारः प्राकृतत्वात्, अथवा हृष्टं—विस्मितं तुष्टं—तोषवच्चित्तं यत्र तत् यथा स्यात्तथाऽऽनन्दिता, प्रीतिः—आप्यायनं मनसि यस्याः सा प्रीतिमनाः, परमं सौमनस्यं जातमस्याः सा परमसौमनस्यिता, हर्षवशेन विसर्पत्—विस्तारयायि हृदयं यस्याः, धाराभिः—धाराधरप्रादुर्भूताभिराहतं हतं वा यत्कदम्बपुष्पं तदिव समुच्छ्वसितानि—उद्धुपितानि रोमाणि कूपेषु—रोमरन्ध्रेषु यस्याः, यद्यप्येतान्यर्थतो न भूयो भेदभाञ्जि तथापि स्तुतिरूपत्वात् प्रमोदप्रकर्षप्रतिपादनार्थत्वाच्च नायुक्तानीति। 'सुमिणुग्गहं ति' स्वप्नानामवग्रहं—स्मरणं करोति, विशिष्टफलं-लाभारोग्यराज्यादिकं विभावयतीत्यन्ये, अतुरियमित्यादि अत्वरितं—मानसौत्सु-

विलोपश्च, यथा यज्ञनियुक्तानामामिषाऽभक्षणे प्रतिपादितः प्रत्यवायो विधिविलोपश्च, नैतावदेव प्रत्युतात्र तु शुद्धिसम्पादनाय प्रतिपादितं प्रायश्चित्तमपि। समस्ति सार्वज्ञमते सुनिपुणानामपि योगापेक्षा न श्रुतमेतत् यदुत पदानुसारिलब्धिधारिणामपि श्रीमतां वज्रस्वामिपादानामयोगित्वेन गुरुभिर्वाचनाचार्य्यपदप्रार्थनाऽपि स्पष्टत्वेन प्रतिषिद्धा ? श्रुता चेत् ? नैव विधेयं श्रेयोर्थिभिर्योगहीनत्वालम्बनं, विचारणीयं च मुहुर्मुहुर्भगवदुपदिष्टं, नात्र प्रमदितव्यम्, परोपकाररसिकैः परोपकारलिप्सया विधानादिकमपि प्रदर्शितं, योग्यतासम्पादनाय च सर्वत्र समयप्रमाणमपि संदर्शितं, अस्य सूत्रस्यापि समाराधने प्रतिपादितः पञ्चवर्षीयः प्रव्रज्यापर्यायः, यतः श्रीमति व्यवहारसूत्रे "पंचवासपरियागस्स समणस्स कप्पति दसाकप्पव्ववहारा नामज्झयणे उद्दिसित्तए" एतदुल्लेखेन विज्ञायत एतद् यदुत—दशाश्रुतस्कन्धस्य समाराधने पंचवर्षीयः प्रव्रज्यापर्यायोऽपेक्षितस्तदाऽस्य तु तस्यैवाष्टमाध्ययनतया सुतरामेव तावान् समयोऽपेक्षितोऽत एवास्य सूत्रस्य भगवतः वाचने श्रावणे च विहितयोगानुष्ठानाः सुविशुद्धसाधव एवाधिकारिणः, श्रवणे तु पूर्वं साधुसाध्वीनाम्, पश्चाच्च श्रीवीरनिर्वाणादशीत्यधिकनवशत ( ९८० ) वर्षातिक्रमणे मतान्तरेण च त्रिनवतियुतनवशत ( ९९३ ) वर्षातिक्रमे पुत्रमरणार्त्तस्य श्रीध्रुवसेनराज्ञः समाधिमाधातुमानन्दपुरे सभासमक्षं समहोत्सवं वाचयितुमारब्धं ततःप्रभृति चतुर्विधस्यापि श्रीसंघस्याधिकारः, तथाचोपाध्यायश्रीमद्धर्मसागरपादाः—

"अथानधिकारिणा हि कृतं साङ्गमपि कर्म्म नोक्तफलाव्यभिचारि भवतीत्यत्र वाचनायां श्रवणे च केऽधिकारिण इत्याकाङ्क्षायां मुख्यतः साधवः साध्व्यश्चाधिकारिणः, तत्राऽपि कालतो रात्रौ कृतोद्देशसमुद्देशादियोगानुष्ठानो वाचनोचितो वाचयति, तदितरे तु शृण्वन्ति, साध्वीश्रावणादिकारणे पुनर्निशीथचूर्ण्याद्युक्तविधिना दिवापि तयोरधिकारः। सम्प्रति तु श्रीवीरनिर्वाणादशीत्यधिकनवशत ९८० वर्षातिक्रमे क्वचिच्च त्रिनवतिनवशत ९९३ वर्षातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य समाधिमाधातुमानन्दपुरे सभासमक्षं समहोत्सवं श्रीकल्पसूत्रं वाचयितुमारब्धम्, अतःप्रभृति चतुर्विधसङ्घोऽप्यधिकारी श्रवणे, वाचनायां तूक्तलक्षणः साधुरेवेति दृश्यत इति बोध्यम्"।

सुच्चा निसम्म हट्ठतुट्ठ जाव हिअए धाराहयकयंबपुप्फगं पिव समुस्ससियरोमकूवे सुमिणुग्गहं करेइ, करित्ता ईहं अणुपविसइ, अणुपविसित्ता अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, करित्ता देवाणंदं माहणिं एवं वयासी ॥ ८ ॥

व्याख्या—एएसि णमित्यादितो वयासीति पर्यन्तम्, तत्र मन्ये इति वितर्कार्थो निपातः, को–नु कल्याणः फलवृत्तिविशेषो भविष्यति, सुच्च त्ति श्रुत्वा–आकर्ण्य, निशम्य–हृदयेनावधार्य, स्वप्नानामवग्रहमर्थावग्रहतः तत ईहा–तदर्थपर्यालोचनलक्षणामनुप्रविशति, 'अप्पणो त्ति' आत्मसम्बन्धिना सहजेन–स्वाभाविकेन मतिपूर्वेण–आभिनिबोधप्रभवेन बुद्धिविज्ञानेन मतिविशेषजातौत्पत्तिक्यादिबुद्धिरूपपरिच्छेदेन, अथवा "मतिरप्राप्तविषया, बुद्धिः साम्प्रतदर्शिनी । अतीतार्था स्मृतिर्ज्ञेया, प्रज्ञा कालत्रयात्मिका ॥ १ ॥" इति वचनात्, बुद्धिः–साम्प्रतदर्शिनी विज्ञानं–पूर्वापरार्थविभावकमतीतानागतवस्तुविषयं तयोः समाहारे बुद्धिविज्ञानेन अर्थावग्रहं–स्वप्नफलनिश्चयं करोति 'वयासि त्ति' अवादीत् ॥८॥

उराला णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, कल्लाणा णं सिवा धन्ना मंगल्ला सस्सिरीआ आरुग्गतुट्ठिदीहाउकल्लाणमंगल्लकारगा णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, तं जहा–अत्थलाभो देवाणुप्पिए भोगलाभो देवाणुप्पिए पुत्तलाभो देवाणुप्पिए सुक्खलाभो देवाणुप्पिए एवं खलु तुमं देवाणुप्पिए नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणराइंदिआणं विइक्कंताणं सुकुमा-

तएणं सा देवाणंदा माहणी उसभदत्तस्स माहणस्स अंतिए एअमट्ठं सुच्चा निसम्म हट्ठतुट्ठ-जावहयहिअया करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु उसभदत्तं माहणं एवं वयासी ॥ १२ ॥

व्याख्या—तएणमित्यादितो वयासि त्ति यावत्सुगमम् ॥ १२ ॥

एवमेअं देवाणुप्पिआ तहमेयं देवाणुप्पिआ अवितहमेयं देवाणुप्पिआ असंदिद्धमेअं देवाणुप्पिआ इच्छिअमेअं देवाणुप्पिया पडिच्छिअमेअं देवाणुप्पिया इच्छिअपडिच्छिअमेअं देवाणुप्पिया सच्चे णं एस मट्ठे से जहेयं तुब्भे वयह त्तिकट्टु ते सुमिणे सम्मं पडिच्छइ पडिच्छित्ता उसभदत्तेणं माहणेणं सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणा विहरइ ॥ १३ ॥

व्याख्या—एवमेअमित्यादितो विहरइ त्ति यावत्, तत्र एवमिति पत्युर्वचने प्रत्ययाविष्करणं एतदेव स्पष्टयति तहमेयमित्यादि तथैतद्यथा यूयं वदथेत्यनेनान्वयतस्तद्वचने सत्यतोक्ता, अवितथमेतदनेन तद्व्यतिरेकाभावोऽसूचि, असन्दिग्धमनेन सन्देहाभावोऽत एवेष्टमीप्सितं वाऽस्माकमेतत् 'पडिच्छिअमेअं ति' प्रतीष्टं प्रतीप्सितं वा युष्मन्मुखात्पतदेव गृहीतं 'इच्छिअपडिच्छिअमेअं ति' धर्मद्वययोगोऽत्यन्तादरख्यापकः सच्चो हितः सत्यः प्राणिहितोऽयमर्थः, इति कृत्वा—इति भणित्वा भोगार्हा भोगा भोगभोगास्तान् प्राकृतत्वान्नपुंसकत्वं भुञ्जाना विहरति—तिष्ठति ॥ १३ ॥

यत उत्सूत्रभाषकाणामनन्तसंसारस्यैव वृद्धिरिति तु न नियमः, निह्नवशिरोमणेरपि जमालेः परिगितभवदर्शनात्। न दुर्लभः खलु छद्मस्थानामनाभोगो ज्ञानावृतिमत्त्वात्, अत एव तेषामाप्तवचनमेव शरणम्, सत्यायनाभोगे यद्यनाग्रहो न तर्हि तथाविधा हानिरिति ध्येयं धीमद्भिः।

यत्त्वेतैः पूज्यैः प्रोक्तम्—स्वर्गगते श्रीवज्रस्वामिनि "तुर्यं संहननं च व्युच्छिन्नं" तत्तु सत्यमेव, कथमिति चेत्? श्रीमद्धरिभद्रसूरीश्वरादिभिरावश्यकवृत्त्यादिषु तथैवोक्तत्वात्, तथाहि—

"तंमि य भगवंते अद्धनारायसंघयणं दसपुव्वाणि य वोच्छिण्णा"

इत्यावश्यकवृत्तौ श्रीमद्धरिभद्रसूरिपादाः

"दुष्कर्मावनिभिद्वज्रे, श्रीवज्रे स्वर्गमीयुषि। व्युच्छिन्नं दशमं पूर्वं, तुर्यं संहननं तथा"

इति परिशिष्टपर्वणि श्रीहेमचन्द्रसूरिपादाः

"महागिरिसुहस्त्याद्या, भूरयः सूरयस्ततः। गणभृद्वज्रपर्यंता, भाविनो दशपूर्विणः॥
दशपूर्व्या व्यवच्छेद-स्तुर्यसंहननस्य च। षोडशाब्दोनषट्वर्ष-शत्या तत्र भविष्यति॥"

इति श्राद्धदिनकृत्यवृत्तौ श्रीमद्देवेन्द्रसूरिपादाः

सुविख्यातैरेभिरतो भिन्ना अपि विरचिताः प्रवचनपरीक्षा—श्रीवीरद्वात्रिंशिका—पर्युषणाशतक—औष्ट्रिकमतोत्सूत्रदीपिका—इरियापथिकाषट्त्रिंशिका—जम्बूद्वीपप्रज्ञप्तिवृत्ति—तपगच्छपट्टावलि—कुमतिखण्डन—तत्त्वतरङ्गिण्यादयोऽनेके ग्रन्थाः। विज्ञायत एतेषां श्रीपूज्यानां शासनप्रभावकत्वं निम्नसंस्थापितसूक्ताभ्यामपि—



व्याख्या—'इमं च णमित्यादेरेवं वयासीति' पर्यन्तम्, तत्र 'केवलकप्पं ति' केवलः—परिपूर्णः स चासौ कल्पश्च—कार्यकरणसमर्थो ऽथवा परिपूर्णतासाधर्म्यात् केवलकल्पः—केवलज्ञानसदृशः 'आभोएमाणे त्ति' आभोगयन्—पश्यन्, नन्दितः-समृद्धितां प्राप्तः, परमानन्दितो—अतीव समृद्धिभावं गतः, धाराहयेत्यादि धाराहतं यत्कदम्बस्य—नीपस्य सुरभिकुसुमं तदिव 'चंचुमालइअ त्ति' पुलकितः अत एव 'ऊसविअ त्ति' उच्छ्रितरोमकूपश्च यः स तथा विकसितानि—भूतलावतरणोद्भूतप्रभूतप्रमोदादुत्फुल्लानि वरकमलवदाननं च नयने च यस्य स तथा प्रचलितानि—भगवद्गर्भोत्पत्तिदर्शनजनितसम्भ्रमातिरेकात् कम्पितानि 'पलंबिअ त्ति' पाठे तु प्रकर्षेण लम्बितानि वराणि—प्रधानानि कटकानि च—कङ्कणानि, त्रुटिताश्च—बाहुरक्षकाः, केयूराणि च—अङ्गदानि बाहुमूलभूषणानि, मुकुटं च—किरीटं, कुण्डले च—कर्णाभरणे यस्य स तथा हारविराजद्वक्षाः तदनु पदद्वयस्य कर्मधारयः, प्रालम्बो—झुम्बनकं मुक्तामयं प्रलम्बमानं—लम्बमानं घोलच्च—दोलायमानं यद्भूषणं—आभरणं तद्धारयति यः स तथा ससम्भ्रमं—सादरं त्वरितं—सौत्सुक्यं चपलं—वेगवच्च यथा स्यात्तथा प्रत्यवरोहति—अवतरतीत्यर्थः, वैडूर्येण मध्यवर्त्तिना वरिष्ठे—प्रधाने रिष्टाञ्जने—रत्नविशेषौ ययोस्ते तथा निपुणेन—कुशलेन शिल्पिना 'उविअ त्ति' परिकर्मिते अत एव 'मिसिमिसिंत त्ति' चिकिचिकायमाने मणिभिः—चन्द्रकान्तादिभिः रत्नैश्च—कर्केतनादिभिः मण्डिते ये ते तथा ततः पदत्रयस्य कर्मधारयः, एवंविधे पादुकेऽवमुञ्चति, 'एगसाडिअं ति' एकखण्डशाटकमयं उत्तरासङ्गं—वैकक्षं अञ्जलिना—अञ्जलिकरणतो मुकुलितौ—मुकुलाकृती कृतावग्रहस्तौ येन स तथा 'अंचेइ त्ति' आकुञ्चयति—उत्पाटयति 'साहट्टु त्ति' संहृत्य—निवेश्य त्रिःकृत्वः



''तेषां विजयिनि राज्ये, राजन्ते सकलवाचकोत्तंसाः । श्रीधर्मसागराह्वा, निखिलागम–कनककषपट्टाः ॥ १ ॥
कुमतिमतमतङ्गजकुम्भ–स्थलपाटनपाटवेन सिंहसमा । दुर्दमवादिविवादा–दपि सततं लब्धजयवादाः ॥ २ ॥''

प्रोक्तान्यत्र त्रीण्यपि वाचनानि सुन्दरपद्धत्या परं वादिमुखभंजकैरेभिः पूज्यैर्वादस्थानानि तु प्रायः सर्वाण्यपि सविस्तरं वर्णितानि, श्रीजिनवल्लभोपज्ञ षट्कल्याणकमतं तु सर्वाभिमताभियुक्तश्रीमद्धरिभद्रसूर्यभयदेवसूरिपादवचनदर्शनेन निर्लोठितं सम्यक्तया, नूतनमेवैत-न्मतम्, श्रीजिनवल्लभेनाभिनिवेशबलेनैव समर्थितं न त्वनाभोगेनेत्यादिक सर्वमपि साधितं जिनदत्ताचार्यकृतगणधरसार्धशतकस्य वृत्त्याधा-रेण जिनदत्ताचार्यकृतोत्सूत्रपदोद्घाटनकुलकाधारेण च सयुक्तिकम्, ''हतूण सव्वमाण, सीसो होऊण ताव सिक्खाहि । सीसस्स हुंति सीसा, न हुंति सीसा असीसस्स ॥ १ ॥'' इत्यागमवचनेन प्रतिषिद्धं तस्य सुविहिताग्रणीत्वम्, कथमिति चेत् ? प्रोक्तं तैरेव–''चैत्यवासं परित्यज्य कस्याऽपि सुविहितस्य पार्श्वे चारित्रस्याऽग्रहात्, नवीनमतप्रवर्त्तनेन सङ्घबाह्यत्वात्'' स यदि सङ्घबाह्यो नो चेत् कथमुपन्यस्तेन—

''सङ्घात्राकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यतः, तन्मुद्राद्दढपाशबन्धनवतः शक्तस्य न स्पन्दितुम् ।
मुक्त्यै कल्पितदानशीलतपसोऽप्येतत्क्रमस्थायिनः, सङ्घव्याघ्रवशस्य जन्तुहरिणव्रातस्य मोक्षः कुतः ॥ १ ॥''

अनेन स्वकीयसङ्घपट्टकसूत्रसत्केन त्रयस्त्रिंशत्तमकाव्येन तत्कालवर्तिनं श्रीसङ्घं व्याघ्रोपमयोपावर्णयिष्यत्, कथं वा तस्य तट्टीकाया ऐदंयुगीनसङ्घप्रवृत्तिपरिहारेण 'सङ्घबाह्यत्वप्रतिपादनममीषां भूषणं न तु दूषणं' इति रीत्या सङ्घबाह्यता व्याख्यास्यत् ? अधिकमासीयाऽपि चर्चा सम्यक् विहिता, स्थापितं च भाद्रपदसितचतुर्थ्यामेव युक्तं पर्युषणापर्वेति ।

संशोधितमेतत् सर्वमपि न्यायाम्भोनिधि–सत्सिद्धान्तरहस्याविर्भावोन्मूलितानल्पजनशङ्कासन्दोहस्वकीयसुधासदृशस्याद्वादपूर्णसदुपदेशसं-प्रीणितसकलश्रोतृसमुदय–सन्न्यायानुगतसत्पथप्रदर्शनप्रबोधितपांचालस्थलुम्पकमतमुग्धभव्यसत्त्वसमूह–सकलकुमतमतमतङ्गजकुम्भस्थलपाट-

गतिः । प्रतिष्ठन्त्यस्यामिति प्रतिष्ठा संसारगर्त्तपतत्प्राणिगणस्याधार इति । 'अप्रतिहतवरज्ञानदर्शनधरेभ्यः' अप्रति-
हते कटकुट्यादिभिर्वरे—क्षायिके ज्ञानदर्शने—विशेपसामान्यावबोधरूपे धरन्तीति तेभ्यः । ईदृशं ज्ञानदर्शनधारित्वमा-
वरणाभावात् सम्पद्यत इत्याह—'व्यावृत्तछद्मभ्यः' व्यावृत्तं छद्म—घातिकर्म्माणि संसारो वा येभ्य इति तेभ्यः ।
तदभावस्तु रागादिजयादित्याह—'जिनेभ्यो' रागादिजेतृभ्यो, रागादिजयश्च तज्जयोपायज्ञानपूर्वक एवेत्यत आह—
'ज्ञायकेभ्यः' जानन्तीति ज्ञायकास्तेभ्यो, यद्वाऽन्यभव्यसत्त्वै रागादीन् सदुपदेशदानादिना जापयन्तीति जापका-
स्तेभ्यः । अत एव 'तीर्णेभ्यो' भवार्णवं ज्ञानादिपोतेन । 'तारकेभ्यो' अन्यानप्युपदेशवर्त्तिनः । अज्ञाननिद्राप्रसुप्ते ज-
गति स्वसंविदितज्ञानेन जीवादितत्त्वं बुध्यन्ते स्मेति बुद्धास्तेभ्यः । अन्यानपि बोधयन्तीति बोधकास्तेभ्यः । बाह्या-
भ्यन्तरपरिग्रहबन्धनात् कर्म्मबन्धनाद्वा मुक्ता इति तेभ्यः, अन्यानपि तद्द्वयान्मोचयितृभ्यः । एतानि विशेषणानि
भवावस्थामाश्रित्योक्तानि, अथ सिद्ध(द्धा)वस्थामाश्रित्योच्यते, सर्वज्ञेभ्यः—जीवस्वाभाव्यात् सर्वं वस्तुजातं प्रधान-
विशेपं गौणीकृतसामान्यं च केवलज्ञानेन जानन्तीति सर्वज्ञास्तेभ्यः । सामान्यप्रधानं गौणीकृतविशेषं च सर्वं केव-
लदर्शनेन पश्यन्तीति सर्वदर्शिनस्तेभ्यः । प्रथमं सर्वज्ञेभ्य इति विशेषणं च केवलिनामाद्यसमये ज्ञानं द्वितीये (च) दर्श-
नमिति सूचनार्थं, उभयमपि च वस्तु विपयीकुर्वद्वस्तुनिरपेक्षमेव केवलिनां, छद्मस्थानां तु उभयं सापेक्षं निरपेक्षं
च, क्रमोऽपि प्रथमं दर्शनं पश्चाद् ज्ञानमिति प्रसङ्गाद् बोध्यमिति । सिवमयलमित्यादि, शिवं—निरुपद्रवं, अचलं
स्वाभाविकप्रायोगिकचलनाभावात्, अरुजमाधिव्याध्यभावात्, अनन्तमनन्तार्थविपयकज्ञानमयत्वात्, अक्षयं—अनाशं

नपञ्चानन—समस्तसूरिगुणगणसमलङ्कृत—सौम्यत्वतारापति—श्रीमद्विजयानन्दसूरीश्वरशिष्यावतंस—सुधानिःस्यन्दसदुपदेशसंशोधितभव्यसत्त्वस्वान्त—अप्रतिमानवद्यस्वपरसिद्धान्तरहस्याविर्भावनदक्षधीपणवाचकपुङ्गवश्रीमद्वीरविजयविनेयरत्न—आर्हतधर्मोन्नतिकरणैकजीवनसार—अनुयोगाचार्य्य—अस्मद्गुरुगुरुवर्य्यश्रीमद्दानविजयगणिभिर्महता श्रमेण, विधाय चेमं परिश्रमं करुणापाराकूपारैरेभिः पूज्यप्रवरैरनुगृहीतः खल्वयं सकलोऽप्यार्हतसमाज इति नातिरिक्तं वचः ।

संशोधितेऽपि सम्यक्तया 'मनुष्यसहभुवो भ्रान्तयो दुर्निवारा" इति नियमेन वर्णनियोजकप्रमाददोषेण वा याः काश्चनाऽशुद्धयः स्थिता भवेयुः, ताः संशोधयन्तु कृपां विधाय स्वभावसुन्दराः सज्जनाः, तानेव 'क्षन्तव्यं यदि मतिमोहादिनाऽत्रोक्तं चेदलीकं कृपाभिलापुके मयि विधाय कृपां' इति सम्प्रार्थ्य प्रस्तावनामिमां परिसमाप्तिं नयति—

पूज्यपाद—परमगुरु—श्रीमद्विजयकमलसूरीश्वरसाम्राज्यवर्ति-

प्रशमपीयूषपाथोनिधिमुनिराजश्रीमत्प्रेमविजयगणिपादपद्ममधुव्रतो

मुनि—**रामविजयः ।**



यात्प्रतिनिवृत्त्य भगवत्पादौ शरणं प्रपेदे, शक्रोऽप्यवधिज्ञानावगततद्व्यतिकरस्तीर्थकराशातनाभयाच्छीघ्रमागत्य वज्र-मुपसंजहार बभाण च मुक्तोऽस्यहो भगवतः प्रसादान्नास्ति ततस्ते भयमिति ८। तथाऽष्टाभिरधिकं शतमष्टशतं अष्ट-शतं च ते सिद्धाश्च-निर्वृता अष्टशतसिद्धा इदमप्यनन्तकालजातमित्याश्चर्यम्। परमेतदुत्कृष्टावगाहनामाश्रित्य, मध्य-मावगाहनायां पुनरनेकशोऽष्टोत्तरशतं सिद्ध्यन्तीति नाश्चर्यम्। तच्चैवम्-"रिसहो रिसहस्स सुआ ९९, भरहेण विव-ज्जिआ उ नवनवई। अट्ठ य भरहस्स सुआ ८, सिद्धिगया एगसमयम्मि ॥ १ ॥' तथा च वसुदेवहिंडौ श्रीसङ्घदासगणयोऽप्याहुः—"उसहो अभीइणा नक्खत्तेणं एगूणपुत्तसएहिं अट्ठ य नत्तुसहिएहिं एगसमयम्मि नि-व्वुए। सेसाण वि अणगाराणं दस सहस्साणि अट्ठसय १०८ ऊणगाणि तम्मि नक्खत्ते निव्वुआणि त्ति" ९। तथा असंयता-असंयमवन्त आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणस्तेषां पूजा-सत्कारोऽसंयतपूजा, सर्वदा हि किल संयता एव पूजार्हा, अस्यां त्ववसर्प्पिण्यां विपरीतं जातमित्याश्चर्यमत एवाह १० दशाप्येतानि अनन्तेन कालेनानन्तकाला-त्संवृत्तान्यस्यामवसर्प्पिण्यामिति, एवं च कालसाम्यात् शेषेष्वपि भरतैरावतेषु दश दश आश्चर्याणि बभूवांसि, उक्तं च-"दससु वि वासे सेवं दस दस अच्छेरयाइं जाणाहि त्ति।" परं सर्वत्र चमरोत्पाताभावात् कृष्णस्य धातकीखण्डगमन-मिव तत्रत्यवासुदेवस्यात्रागमनाभावाच्च प्रकारान्तरेणेत्यर्थाद्बोध्यम्। दशानामप्याश्चर्याणां तीर्थव्यक्तिस्त्वेवम्-"उसभे अट्ठहिअसयं सिद्धं, १ सीअलजिणंमि हरिवंसो २। नेमिजिणे वरकंकागमणं कण्हस्स संपत्तं ३ ॥ १ ॥ इत्थी तित्थं मल्ली ४, पूआ अस्संजयाण नवमजिणे ५। अवसेसा अच्छेरा, वीरजिणिंदस्स तित्थम्मि ॥ २ ॥" नामगुत्तस्स

मुण्डः शिरसि शिखा च भवतु, तथा श्रमणाः सकलप्राणिवधाद्विरता अहं तु नेत्यतः स्थूलप्राणिवधादेव मे विरतिरस्तु, तथा निष्किञ्चनाः किल साधवो नाहमेवमप्यतो मे मार्गाविस्मृतये पवित्र्यादिकं किञ्चनमस्तु, तथा शीलसुगन्धाः साधवो नाहमिति मे गन्धचन्दनादिग्रहणमस्तु, तथा व्यपगतमोहा मुनयोऽहं तु नेत्यतो मे मोहाच्छादितमतेश्छत्रकं चिन्हमस्तु, तथा अनुपानत्काः श्रमणा मम चोपानहौ भवतः, तथा शुक्लाम्बरा निरम्बराश्च जिनकल्पिकादयः कषायाकलुषितमतयो यतयो नाहमेवमतो मे कषायकलुषितस्य धातुरक्तानि वस्त्राणि भवन्तु, तथा-वद्यभीरवः साधवो बहुजीवसमाकुलजलारम्भवर्जका नाहमेवमतो मे परिमितेन जलेन स्नानं पानं चास्तु, एवं निजमत्यैव विकल्प्य पारिव्राज्यं प्रव्रजितः । ततस्तं विसदृशरूपं विलोक्य भूयो लोको धर्मं पृच्छति, तत्पुरश्च साधुमार्गं प्ररूपयति । किमिति भवता साधुमार्गो नाश्रीयत इति प्रश्ने श्रमणास्त्रिदण्डविरता अहं तु त्रिदण्डवानित्यादिप्रागुक्तमेव प्रादुष्करोति, एवं च स्वदेशनारञ्जितानेकराजपुत्रादिजनान् भगवन्तं शिष्यतया समर्पयति विहरति च भगवतैव सार्द्धम् । अन्यदा च भगवान् विहरन् मरीचिना सममयोध्यायां बहिः समवसृतः, तत्र च वन्दनार्थमागतेन भरतेन पृष्टो भगवान्, हे प्रभोऽस्ति कश्चिदप्येतावत्यां पर्षदि भरतक्षेत्रे भविता तीर्थकृदित्युक्ते प्रभुराह—'हे भरत ! मरीचिरेवायं स्वाध्यायध्यानासक्तोऽस्यामेवावसर्पिण्यां वीरनामा चतुर्विंशतितमस्तीर्थकृत् १ महाविदेहे मूकाराजधान्यां प्रियमित्रनामा चक्रवर्त्ती २ अत्रैव भरते त्रिपृष्टनामा पोतनाधिपतिः प्रथमो वासुदेवश्च ३ भविष्यति' इतिप्रभूक्तमाकर्ण्य भरतः पुलकितवपुः प्रभुं प्रणम्य मरीचिमभिवन्दितुं याति, गत्वा च विनयेन त्रिःप्रदक्षिणी-

॥ अर्हम् ॥

। न्यायाम्भोनिधि–श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ।

विबुधवरोपाध्यायश्रीमद्धर्मसागरगणिविहितकिरणावल्यभिधानवृत्त्युपेतं

श्रुतकेवलियुगप्रधानभगवच्छ्रीमद्भद्रबाहुस्वामिप्रणीतं

# कल्पसूत्रम् ।

प्रणम्य प्रणताशेष–वीरं वीरजिनेश्वरम् । स्ववाचनकृते कुर्वे, कल्पव्याख्यानपद्धतिम् ॥ १ ॥

इह हि तावच्चतुर्मासकमासीना मुनयो मङ्गलनिमित्तं कल्पद्रुकल्पं पर्युषणाकल्पाभिधमध्ययनं पञ्च दिनानि वाचयन्ति । तत्र कल्पः–साध्वाचारः, स च दशधा, तद्यथा—“आचेलक्कु १ देसिअ २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८, मासं ९ पज्जोसवणकप्पे १० ॥ १ ॥” व्याख्या—अविद्यमानं चेलं वस्त्रं यस्यासावचेलकस्तद्भाव आचेलक्यं, तच्च तीर्थंकरमाश्रित्य चतुर्विंशतेरपि, तेषां देवेन्द्रोपनीतदेवदूष्यापगमे

धनञ्जय(स्य)राज्ञो धारिण्या देव्याः कुक्षौ चतुरशीतिलक्षपूर्वायुश्चक्रवर्त्ती, स च पोट्टिलाचार्यसमीपे प्रव्रज्य कोटिवर्षप्रव्रज्यापर्यायः २३, चतुर्विंशतितमे भवे महाशुक्रकल्पे सर्वार्थनाम्नि विमाने सप्तदशसागरोपमस्थितिकोऽमरः २४, ततश्च्युतः पञ्चविंशतितमे भवे इहैव भरतक्षेत्रे छत्रिकायां नगर्यां जितशत्रुनृपतेर्भद्रादेव्याः कुक्षौ पञ्चविंशतिलक्षवर्षायुर्नन्दनो नाम पुत्रः, स च पोट्टिलाचार्यपार्श्वे राज्यं सन्त्यज्य गृहीततपस्योऽनवरतं मासोपवासैर्विंशत्या स्थानैस्तीर्थकरनामगोत्रं निकाचयित्वा प्रव्रज्यापर्यायं चैकं वर्षलक्षं परिपाल्य मासिकया संलेखनयालोचितप्रतिक्रान्तो मृत्वा २५ षड्विंशतितमे भवे प्राणतकल्पे पुष्पोत्तरावतंसकविमाने विंशतिसागरोपमस्थितिको देवः २६, ततश्च्युतः सप्तविंशतितमे भवे ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य देवानन्दायाः पत्न्याः कुक्षौ समुत्पन्नः २७ । इत्येवं सप्तविंशतिभवापेक्षया तृतीये मरीचिसम्बन्धिनि भवे स्वदेशनाप्रतिबुद्धः कपिलः साधुपार्श्वे प्रव्रजनाय द्विरुक्तोऽपि किं भवत्समीपे सर्वथा धर्मो नास्त्येवेति प्रतिवचः पुरस्सरं साधुपार्श्वमगच्छन् पापात्मा मदुचितोऽयं भवतु मन्निश्रित इति विचिन्त्य कपिला इत्थंपि इहयंपि त्ति प्रागुक्तरीत्योत्सूत्रमिश्रितवचसा कोटाकोटिसागरसंसारसत्ताको मृत्वा ब्रह्मलोके सुरः, ततश्च्युतः परिव्राजक, इत्यादिना क्रमेण यावत् किञ्चित्सावशेषनीचैर्गोत्रसत्ताको दशमदेवलोकाद्देवानन्दायाः कुक्षाववातरदिति । जोणीजम्मणनिक्खमणेणं ति योन्या जन्मार्थं निष्क्रमणेन निक्खमिंसु वेत्यादि, निरक्रामन् निष्क्रामन्ति निष्क्रमिष्यन्ति ॥ १९ ॥

विधं यत्सुगन्धदानं—मदवारि तेन वासितं कपोलयोर्मूलं यस्य स तथा तं, देवराय त्ति देवराजः—शक्रस्तस्य कुञ्जर ऐरावणस्तद्वद्वरं—शास्त्रोक्तं प्रमाणं—देहमानं यस्य स तथा तं, सजलघण त्ति सजलो—जलसंयुक्तो घनो—निविडो विपुलो—विस्तीर्णो यो जलधरो—मेघः तस्य यद्गर्जितं तद्वत् गम्भीरश्चारुश्च—प्रधानो घोषः—शब्दो यस्य स तथा तं, सव्वलक्खण त्ति सर्वलक्षणानां कदम्बं समूहस्तज्जातं यस्य स तथा तं, वरोरुं ति वरः—प्रधानः सन्नुरुः—विशालस्तम् ॥ १ ॥ ३३ ॥

तओ पुणो धवलकमलपत्तपयराइरेगरूवप्पभं, पहासमुदओवहारेहिं सव्वओ चेव दीवयंतं, अइसिरिभरपिल्लणाविसप्पंतकंतसोहंतचारुककुहं, तणुसुद्धसुकुमाललोमनिद्धच्छविं, थिरसुबद्धमंसलोवचिअलट्ठसुविभत्तसुंदरंगं, पिच्छइ, घणवट्टलट्ठउक्किट्ठतुप्पग्गतिक्खसिंगं, दंतं, सिवं, समाणसोभंतसुद्धदंतं, वसहं, अमिअगुणमंगलमुहं । २ । ३४ ॥

व्याख्या—तओ पुणो धवलकमलेत्यादितोऽमिअगुणमंगलमुहमित्यन्तं, तत्र ततः पुनर्वृषभं पश्यति, कीदृशं? धवलेत्यादि, धवलानां कमलानां यानि पत्राणि तेषां प्रकरः—समूहस्तस्मादतिरेका—अधिकतरा रूपप्रभा यस्य स तथा तं, पहासमुदओ त्ति प्रभासमुदयः—कान्तिकलापस्तस्योपहारा—विस्तारणानि तैः सर्वतो दशापि दिशो दीपयन्तं, पुनः कीदृशं? अइसिरि त्ति यद्यपि ककुदं स्वभावेनैवोल्लसति तथाऽप्युत्प्रेक्ष्यते नेदं स्वभावतः किन्तु अति-

तं कप्पइ एस मेर त्ति ॥ १ ॥" एषा मर्यादेत्यर्थः, इत्यौद्देशिककल्पो द्वितीयः ॥ २ ॥

तथा शय्यया—वसत्या तरतीति शय्यातरो वसतिस्वामी, पिण्डशब्दस्योभयत्र सम्बन्धात्तस्य पिण्डोऽशन १ पान २ खादिम ३ स्वादिम ४ वस्त्र ५ पात्र ६ कम्बल ७ रजोहरण ८ सूची ९ पिप्पलक १० नखरदन ११ कर्णशोधन १२ लक्षणो द्वादशविधः, यदाह—"असणाई वत्थाई, सूईआई चउकथा तिन्नि। त्ति" स सर्वेषामपि तीर्थेषु साधूनामकल्प्यः प्रसङ्गगुरुदोषसद्भावात्, यतः—"सज्जायरो त्ति भण्णइ, आलयसामी उ तस्स जो पिंडो। सो सव्वेसिं न कप्पइ, पसंगगुरुदोसभावाओ ॥ १ ॥ त्ति।" प्रसङ्गे तद्ग्रहणप्रसक्तौ ये गुरवो महान्तो दोषास्तेषां भावो भवनं तस्मादित्यर्थः, दोषाणां गुरुत्वं च सन्निहितसाधुगुणानुरागेण पारणकप्रथमालिकाद्यर्थं पुनः पुनः प्रवेशेन चानेषणीयाहारसम्भवात् मिष्टान्नपानादिलोभेन तत्कुलापरित्यागात् कारणवशात् दूरगतस्यापि पुनरागमनात् विशिष्टाहारोपधिभ्यां शरीरोपध्योरलाघवात् येन वसतिर्देया तेनाहाराद्यपि देयमिति गृहिणां भयोत्पादनात् तद्दानभयाच्च वसतेर्दौर्लभ्यात् वसत्यभावाच्च भक्तपानशिष्यादिव्यवच्छेदाच्चेति तीर्थकृत्प्रतिषिद्धत्वादेवेति बोध्यं। तत्परित्यागे तु अहो! निःस्पृहा एतेऽतो वसत्यादि दानतः पूज्या इति भावोत्पादनेन शय्यातरस्य श्रद्धावृद्धिः प्रवचनगौरवं च इत्यादिगुणाः। एवं सत्यपि यदि रात्रेश्चतुरोऽपि यामान् शोभनानुष्ठानाः साधवो जाग्रति प्राभातिकं चाऽऽवश्यकमन्यत्र कुर्वन्ति तदा मूलोपाश्रयस्वामी शय्यातरो न भवति, भवति च तत्र सुप्ते कृते चाऽऽवश्यके प्राभातिके, अथ शय्यातरगृहे सुप्त्वा प्राभातिकं चाऽऽवश्यकमन्यत्र कुर्वन्ति तदा यस्यावग्रहे सुप्तं यस्याऽवग्रहे च प्राभातिकं

एवं खलु अहं सामी अज्ज तंसि तारिसगंसि सयणिज्जंसि वण्णओ जाव पडिबुद्धा तं जहा गयवसहगाहा। तं एएसिं सामी उरालाणं चउद्दसण्हं महासुमिणाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ॥ ५० ॥

व्याख्या—एवं खलित्यादितो भविस्सइ त्ति पर्यन्तम्, तत्र वण्णओ त्ति प्रागुक्तवर्णना मन्ये इति–वितर्कार्थो निपातः को–नु कल्याणः फलवृत्तिविशषो भविष्यति ॥ ५० ॥

तए णं से सिद्धत्थे राया तिसलाए खत्तियाणीए अंतिए एयमट्ठं सुच्चा निसम्म हट्ठ तुट्ठ जाव हियए धाराहयनीवसुरहिकुसुमचुंचुमालइयरोमकूवे ते सुमिणे ओगिन्हइ, ते सुमिणे ओगिन्हित्ता, ईहं अणुपविसइ, अणुपविसित्ता अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविन्नाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ, करित्ता तिसलं खत्तियाणिं ताहिं इट्ठाहिं जाव मंगल्लाहिं मियमहुरसस्सिरीयाहिं वग्गूहिं संलवमाणे संलवमाणे एवं वयासी ॥ ५१ ॥

व्याख्या—तए णं से सिद्धत्थेत्यादितो वयासीति पर्यन्तम्, तत्र श्रुत्वा श्रोत्रेण निशम्य हृदयेनावधार्य तान् स्वप्नानवगृह्णाति अर्थावग्रहतः, ईहामनुप्रविशति सदर्थपर्यालोचनलक्षणां, ततः अत्तणो इत्यादि प्राग्वद् व्याख्येयम् ॥५१॥

कृतं तौ द्वावपि शय्यातरौ भवतः । तृण–डगल–भस्म–मल्लक–पीठ–फलक–शय्या–संस्तारक–लेपादिवस्तूनां ग्रहणे सोपधिकशिष्यप्रव्राजने चाऽऽज्ञया कल्प्यत्वाच्छय्यातरो न भवति, इति शय्यातरकल्पस्तृतीयः ॥ ३ ॥

तथा राजा तावदुदितोदितकुलप्रसूतो बद्धमुकुटराज्ञाऽभिषिक्तः, सेनापति १ पुरोहित २ श्रेष्ठ्य ३ मात्य ४ सार्थवाह ५ लक्षणैः पञ्चभिः सार्द्धं राज्यं भुञ्जानश्चक्रवर्त्यादिस्तस्य यः पिण्डोऽशनादिचतुष्कं ४ वस्त्रं ५ पात्रं ६ कम्बलं ७ रजोहरणं ८ चेत्यष्टविधः, स च प्रथमचरमतीर्थकृत्तीर्थयोर्व्याघातादिदोषदूषितत्वादकल्प्यः, यदाह—"मुदितादिगुणो राया, अट्ठविहो तस्स होइ पिंडु त्ति । पुरिमेयराणमेसो, वाघायाईहिं पडिकुट्ठो ॥ १ ॥ त्ति" । व्याघातादयः पुनरेवं,—"ईसरपभिईहिं तहिं, वाघाओ खद्धलोहुदाराणं । दंसणसंगो गरहा, इअरेसि न अप्पमायाओ ॥ १ ॥" अस्या अर्थः—ईश्वरप्रभृतिभिर्युवराजतलवरमाडम्बिकादिभिः सपरिकरैः प्रविशद्भिर्निर्गच्छद्भिश्च तस्मिन् राजकुले व्याघातः–स्खलना साधोः प्रवेशनिर्गमयोः, ततश्च भिक्षास्वाध्यायादीनामपि व्याघातः, अथवा सम्मर्दादमङ्गलबुद्ध्या वा कायपात्रप्रभृतीनां व्याघातो–हननं स्यात्, "खद्धलोह त्ति" खद्धे–प्रभूतेऽन्नादौ लभ्यमाने लोभो–लुब्धता, तथा उदाराणां–हस्त्यश्वस्त्रीपुरुषादीनां दर्शने–अवलोकने सङ्गो–अभिष्वङ्गः स्यात्, ततश्चात्मविराधनादि-चारक-चोर-कामुकादिसम्भावनया राजकोपात् कुल-गण–सङ्घाद्युपघातश्च स्यात्, तथा गर्हा–निन्दा, यथा–अहो ! एते गर्हणीयमपि राजप्रतिग्रहं स्वीकुर्वन्ति, गर्हणीयता च तस्य स्मार्त्तैरेवमूचे—"राजप्रतिग्रहदग्धानां, ब्राह्मणानां युधिष्ठिर ! । छिन्नानामिव बीजानां, पुनर्जन्म न विद्यते ॥ १ ॥" अथवा अनभिष्वङ्गा मुनयो मता

तिलको भूपकत्वात्, कीर्त्तिः—ख्यातिस्तत्करणात् कीर्त्तिकरः, क्वचिद्वृत्तिकर इति पाठस्तत्र वृत्तिः—निर्वाहः, दिनकरो—ऽतिप्रकाशकत्वात्, आधारः पृथिवीवत्, नन्दिः—वृद्धिः, यशः—सर्वदिग्गामि, पादपो—वृक्षः आश्रयणीयच्छायकत्वात्, विवर्द्धनं—विविधैः प्रकारैर्वृद्धिरेव, सुकुमालेत्यादि पूर्ववत् ॥ ५२ ॥

से वि य णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुप्पत्ते सूरे वीरे विक्कंते विच्छिन्नविउलबलवाहणे रज्जवई राया भविस्सइ ॥ ५३ ॥

व्याख्या—से वि अ णमित्यादितो भविस्सइ त्ति यावत्, तत्र सूरो दानतोऽभ्युपगतनिर्वाहतो वा, वीरः सङ्ग्रामतः, विक्रान्तो महामण्डलाक्रमणतः, विस्तीर्णादपि विपुले—ऽतिविस्तीर्णे बलवाहने—सेनागवादिके यस्य राज्यपती राजा—स्वतन्त्र इत्यर्थः ॥ ५३ ॥

तं उराला णं तुमे जाव दुच्चंपि तच्चंपि अणुवूहइ, तए णं सा तिसला खत्तियाणी सिद्धत्थस्स रन्नो अंतिए एयमट्ठं सुच्चा निसम्म हट्ठ तुट्ठ जाव हयहियया करयलपरिग्गहियदसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५४ ॥

व्याख्या—तं उराला णमित्यादितो वयासीति पर्यन्तम् तत्र द्विरपि त्रिरपि अनुबृंहति—प्रशंसति ॥ ५४ ॥

एवमेयं सामी! तहमेयं सामी! अवितहमेयं सामी! असंदिद्धमेयं सामी! इच्छियमेयं सामी!

एते त्वदृष्टकल्याणवत् कथं? गजाश्वादिषु सङ्गं कुर्वन्तीत्येवंरूपा, अथैते दोषा मध्यमजिनमुनीनामपि भवेयुरिति कथं तदग्राह्यता? इत्याह—"इयरेसि न अप्पमायाउ त्ति" इतरेषां मध्यमजिनमुनीनां न—नैवैते दोषा भवन्ति, कुतः? अप्रमादात्, यतस्ते ऋजुप्रज्ञत्वाद् विशेषेणाप्रमादित्वेनोक्तदोषपरिहारपरायणाः, इतरे पुनः ऋजुजडवक्रजडत्वेन न तथा, इति राजपिण्डकल्पश्चतुर्थः ॥ ४ ॥

तथा कृतिकर्म—वन्दनकं, तद्विधा, अभ्युत्थानं वन्दनकदानं च। द्वितयमप्येतत् सर्वजिनतीर्थेषु साधुभिर्यथापर्यायादिना परस्परं विधेयं, साध्वीभिस्तु सर्वाभिरपि पुरुषोत्तमो धर्म्म इति कृत्वा सर्वे साधवोऽभिवन्दनीयाः, न पुनः पर्यायाद्यपेक्षणीयं, यदुक्तं—"वरिससयदिक्खिआए, अज्जाए अज्जदिक्खिओ साहू। अभिगमणवंदणनमं—सणेण विणएण सो पुज्जो ॥ १ ॥ धम्मो पुरिसप्पभवो, पुरिसवरदेसिओ पुरिसजिट्ठो। लोए वि पहू पुरिसो, किं पुण लोगुत्तमे धम्मे? ॥ २ ॥" स्त्रीवन्दने च बहवो दोषाः, तथाहि—"तुच्छत्तणेण गव्वो, जायइ नो संकई परिभवेणं। अन्नो वि हुज्ज दोसो, थिआसु माहुज्जहिज्जासु ॥ १ ॥ त्ति" माधुर्यहार्यास्वित्यर्थः। योग्यस्य च यथार्हं वन्दनाऽकरणेऽहङ्कृतेर्नीचैर्गोत्रकर्मणो बन्धो, नूनमत्र प्रवचने विनयो नाभिधीयत इति प्रवचनाखिंसा, अज्ञा वा एते लोकरूढिमपि नानुवर्त्तयन्तीति निन्दापि, ततश्च बोधिदुर्लभता संसारवृद्धिश्चेति दोषाः, इति कृतिकर्मकल्पः पञ्चमः ॥ ५ ॥

तथा व्रतानि—महाव्रतानि तान्येव कल्पो व्रतकल्पः, स च तत्त्वतोऽभेदेऽपि प्रथमचरमजिनतीर्थयोः पञ्चमहाव्रतलक्षणः, शेषाणां तु चतुर्व्रतलक्षणो, यतो नापरिगृहीतानां स्त्रीणां परिभोगः सम्भवतीति तद्विरतौ तासामपि विरतिरे-

रक्ताशोकस्य तरोः प्रकाशश्च किंशुकं च-पलाशपुष्पं शुकमुखं च गुञ्जाया अर्द्धश्चेति द्वन्द्वस्तेषां यो रागस्तथा बन्धुजीवकं च-पुष्पविशेषः, पारापतस्य चरणौ नयने च, परभृतस्य-कोकिलस्य सुरक्ते-सुशब्देन कोपाविष्टत्वोपलक्षणात् कोपारक्ते लोचने च, जासुअणकुसुमरासि त्ति जपापुष्पप्रकरश्च हिङ्गुलकनिकरश्च-सुवर्त्तितकुरुविन्दगुटिका ततो रागान्तादिपदानामितरेतरद्वन्द्वे एतेभ्योऽतिरेकेणाधिक्येन राजमानः सन् सदृशस्तस्मिन्, अरुणत्वमात्रेण सदृशः विशिष्टदीप्त्या त्वतिरिक्त इति भावः। कमलाकराः-पद्मोत्पत्तिस्थानभूता ह्रदादयस्तेषु यानि खण्डानि-नलिनवनानि तेषां विबोधके-विकाशके उट्ठिअंमि त्ति उत्थिते-उद्गते सूरे-रवौ सहस्रं रश्मयो यस्य दिनकरे-दिनकरणशीले तेजसा ज्वलति सति तस्य च कराः-किरणास्तेषां तैर्वा प्रहारो-ऽभिघातस्तेनापराद्धे-विनाशितेऽन्धकारे पहर त्ति प्राकृतलक्षणेन ह्रस्वः, बालातपः कुङ्कुममिव तेन खचिते इव-पिंजरिते इव जीवलोके-मध्यजगति शयनीयादभ्युत्तिष्ठति ॥६०॥

सयणिज्जाओ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता जेणेव अट्टणसाला तेणेव उवागच्छइ, उवागच्छित्ता अट्टणसालं अणुपविसइ, अणुपविसित्ता अणेगवायामजोग्गवग्गणवामद्दणमल्लजुद्धकरणेहिं संते परिस्संते, सयपागसहस्सपागेहिं सुगंधवरतिल्लमाइएहिं पीणणिज्जेहिं दीवणिज्जेहिं मयणिज्जेहिं विंहणिज्जेहिं दप्पणिज्जेहिं सव्विंदियगायपल्हायणिज्जेहिं अब्भंगिए समाणे, तिल्लचम्मंसि निउणेहिं पडिपुन्नपाणिपायसुकुमालकोमलतलेहिं अब्भंगणपरिमद्दणु-

वेति ऋजुप्रज्ञानां प्रज्ञा, न तु शेषाणां, परमयं द्वेधाऽपि स्वस्वतीर्थेषु स्थित एवावगन्तव्यः, इति व्रतकल्पः षष्ठः ॥ ६ ॥

स्थापनात एवारभ्य, शेषाणां तु निरतिचारत्वात् प्रव्रज्यात एवेति । अथ पितापुत्रादीनां द्वयोर्युगपदुपस्थाने कथं

तथा ज्येष्ठो—रत्नाधिकः स एव कल्पो ज्येष्ठकल्पो ज्येष्ठत्वव्यवहार इत्यर्थः, स च प्रथमपश्चिमजिनयतीनामुप-

ज्येष्ठता व्यवहार ? इत्याह—"पितिपुत्तमाइआणं, समगं पत्ताण जिट्ठपितिपभिई । थेवंतरे विलंबो, पन्नवणाए उवट्ठवणा ॥ १ ॥" व्याख्या—पितापुत्रादीनां-जनकसुतप्रभृतीनां आदिशब्दात् राजाऽमात्य—मातादुहितृ—राज्य-

मात्यादिग्रहः, समकं युगपत्प्राप्तानां-विवक्षिताध्ययनाधिगमेनोपस्थाप्यतायोग्यतामवाप्तानां ज्येष्ठाः पितृप्रभृतयः

स्युः, आदिशब्दात् राजामात्यराज्यादिग्रहः, अथ पुत्रादिः प्राप्तो न पित्रादिस्तदा को विधिः ?, इत्याह—स्तोके-

ऽल्पेऽन्तरे विशेषे दिनद्वयादितः पित्रादिरपि प्राप्स्यतीत्येवंरूपे विलम्बः—प्रतीक्षणं कार्यः, पित्रादौ प्राप्ते सति युग-

पदेव पितापुत्रादिरुपस्थापनीयः, माऽभूत् पुत्राद्यपेक्षया लघुताकरणेन पित्रादेरसमाध्युत्पत्तिर्निःक्रमणादेरिति ।

अथ वह्वन्तरं तदा को विधिः ?, इत्याह—प्रज्ञापनया—पित्रादिसम्बोधनया तव पुत्रो विवक्षितां श्रियं प्राप्नोति अन्येषां

च ज्येष्ठतरो भवति तवैवाभ्युदयस्ततो न त्वयाऽस्य विघ्नो विधेय इत्यादि लक्षणया उपस्थापना—व्रतादिरोपणा

कार्या, अथ प्रज्ञाप्यमानोऽपि यदि न प्रतिपद्यते तदा प्रतीक्षणीयं यावदसौ प्राप्नोति, द्वये राजादयो युगपद्यदा

तूपस्थाप्यन्ते तदा यथासन्नं ज्येष्ठता, इति ज्येष्ठकल्पः सप्तमः ॥ ७ ॥

तथा प्रतिक्रमणं—षड्विधाऽऽवश्यककरणं तच्चातिचारो भवतु मा वा पुनरुभयसन्ध्यमवश्यं कर्त्तव्यमिति प्रथम

प्रतीतार्थानां करणे ये गुणविशेषास्तेषु निर्म्मातैः—सदभ्यस्तैः, छेकैः—अवसरज्ञैः, द्विसप्ततिकलापण्डितैरिति च वृद्धाः, दक्षैः—कार्याणामविलम्बितकारिभिः,प्रष्ठैः—वाग्मिभिः अथवा प्रष्ठैः—अग्रगामिभिः,कुशलैः—साधुभिः सम्बाधनाकर्म्मणि, मेधाविभिः—अपूर्वविज्ञानग्रहणशक्तिनिष्ठैः, निउणसिप्पोवगएहिं त्ति क्वचित्तत्र निपुणानि-सूक्ष्माणि यानि शिल्पानि—अङ्गमर्दनादीनि तान्युपगतानि—अधिगतानि यैः, जितपरिश्रमैः छेएहिं त्ति क्वचित्तत्र छेकैः—प्रयोगज्ञैः, दक्षैः—शीघ्रकारिभिः, पत्तट्ठेहिं त्ति प्रासार्थैः—अधिकृतकर्मणि निष्ठां गतैः, अस्थ्नां सुखहेतुत्वादस्थिसुखा तया एवं शेषाण्यपि पदानि। सुखा—सुखकारिणी परिकर्म्मणा—ऽङ्गशुश्रूषा तया, तस्याश्च बहुविधत्वात् कतमयेत्याह—सम्बाधनया संवाहनया वा विश्रामणया अवगतपरिश्रमः, क्वचिद् अवगयखेअपरिस्समे त्ति पाठस्तत्र खेदो—दैन्यं श्रमो—व्यायामजः शरीरास्वास्थ्यम्॥६१

अट्टणसालाओ पडिनिक्खमित्ता जेणेव मज्जणघरे तेणेव उवागच्छइ, उवागच्छित्ता मज्जणघरं अणुपविसइ, अणुपविसित्ता समुत्तजालाकुलाभिरामे विचित्तमणिरयणकुट्टिमतले रमणिज्जे न्हाणमंडवंसि नाणामणिरयणभत्तिचित्तंसि न्हाणपीढंसि सुहनिसन्ने पुप्फोदएहि य गंधोदएहि य उण्होदएहि य सुहोदएहि अ सुद्धोदएहि य कल्लाणकरणपवरमज्जणविहीए मज्जिए तत्थ कोउयसएहिं बहुविहेहिं कल्लाणगपवरमज्जणावसाणे पम्हलसुकुमालगंधकासाइअलूहियंगे अहयसुमहग्घदूसरयणसुसंवुडे सरससुरभिगोसीसचंदणाणुलित्तगत्ते सुइमालावण्णगवि-

चरमतीर्थकृत्तीर्थयोः साधूनां सप्रतिक्रमणश्चारित्रधर्म्मः, शेषाणां तु समुत्पन्ने प्रतिक्रमणार्हे कारणे प्रतिक्रमणं नान्यथा, इति प्रतिक्रमणकल्पोऽष्टमः ॥ ८ ॥

तथा प्रथमान्तिमतीर्थकरयोस्तीर्थे मासकल्पः स्थित एव प्रतिबन्धादिदोषसम्भवात्, यदाह—"पडिबंधो लहुअत्तण, न जणुवयारो न देसविण्णाणं । नाणाराहणमेए, दोसा अविहारपक्खम्मि ॥ १ ॥ त्ति ।" प्रतिबन्धः शय्यातरादिवस्त्वभिष्वङ्गः, लघुत्वं च कथमेते स्वगृहं परित्यज्यान्यगृहेषु व्यासक्ताः, अनुपकारश्च विचित्रदेशस्थितजनानामुपदेशदानाभावेन "न देसविण्णाणं ति" न—नैव देशेषु—विविधमण्डलेषु सञ्चरतां यद्विज्ञानं—विचित्रलोकलोकोत्तरज्ञानं, "नाणाराहण त्ति" नाऽऽज्ञाऽऽराधना, आज्ञा चैवं—"मोत्तूण मासकप्पं, अन्नो सुत्तम्मि नत्थि उ विहारो । त्ति ।" एते दोषा अविहारपक्षे। कदाचित् संयमबाधाकारिदुर्भिक्षग्लान्यादिकारणवशात् द्रव्यतो मासकल्पाभावेन भावतो वसतिपाटकपरावर्त्तनेनान्तःशयनभूमिपरावर्त्तनेनापि चाऽयमवश्यं विधेय एव, यदुक्तं—"कालाइदोसओ पुण, न दव्वओ एस कीरए नियमा । भावेण उ कायव्वो, संथारगवच्चयाईहिं ॥ १ ॥ त्ति ।" संस्तारकव्यत्ययादिभिरित्यर्थः, शेषाणां तु ऋजुप्रज्ञत्वादुक्तदोषासम्भवादस्थितः, इति मासकल्पो नवमः ॥ ९ ॥

तथा परि सामस्त्येनैकत्रावगृहीतक्षेत्रमात्रे वसनं पर्युषणा, एवं व्युत्पन्नोऽपि पर्युषणाशब्दः क्वचिच्चातुर्मासकाद्यवगृहीतकालावस्थानविशेषा(षस्या)भिधायकः, क्वचिच्च सांवत्सरिकप्रतिक्रमणाद्युपलक्षितपर्वदिनस्यापि, स च कालकसूरेरर्वाग् भाद्रसितपञ्चम्यां, तदनु भाद्रसितचतुर्थ्येवेति बोध्यं, तत्र प्राचीनपक्षे सैव कल्पः पर्युषणाकल्पः, स च द्विधा, सालम्बनो निरा-

तलं—बद्धभूर्यत्र पुष्परसमिश्रैरुदकैः गन्धोदकैः—श्रीखण्डादिरसमिश्रैः, उष्णोदकैः—अग्नितप्तोदकैः, शुभोदकैः—पवित्रस्थानानीतैस्तीर्थोदकैः, सुखोदकैर्वा-नात्युष्णैः, शुद्धोदकैश्च—स्वाभाविकैः, कथं मज्जित इत्याह—तत्थ त्ति तत्र स्नानावसरे कौतुकानां रक्षादीनां शतैः कल्याणानि कायत्याकारयति कल्याणकं यत्प्रवरमज्जनं तस्यावसाने पम्हल इत्यादि पक्ष्मला-पक्ष्मवती अत एव सुकुमाला गन्धप्रधाना काषायिका—कषायरक्तशाटिका तया लूषितं—विरूक्षितमङ्गं—शरीरं यस्य स तथा, अहय त्ति अहतं—मलाद्यनुपद्रुतं सुमहार्घं—बहुमूल्यं यद् दूष्यरत्नं—प्रधानवस्त्रं तेन सुसंवृतः परिगतः, यद्वा सुष्ठु संवृतं—परिहितं येन, क्वापि 'नासानीसासवायवज्झचक्खुहरवण्णफरिसजुत्तहयलालापेलवाइरेगधवलकणगखचिअंतकम्मदूसरयणसुसंवुए त्ति' पाठस्तत्र नासानिश्वासवातेन वाह्यं श्लक्ष्णत्वाचक्षुर्हरति विशिष्टरूपत्वाचक्षुर्हरं चक्षुर्धरं वा—चक्षूरोधकं घनत्वात् वर्णस्पर्शयुक्तं—प्रधानवर्णस्पर्शं हयलालायाः सकाशात् पेलवं—मृदु अतिरेकेण—अतिशयेन धवलं यत् तत् तथा कनकेन खचितं—मण्डितमन्तयोरञ्चलयोः कर्म्म वानकलक्षणं यस्य तत्तथा तेन दूष्यरत्नेन सुसंवृतः । सरस त्ति सरससुरभिगोशीर्षचन्दनेनानुलिप्तं गात्रं यस्य, शुचिनी—पवित्रे माला च—पुष्पमाला वर्णकविलेपनं च—मण्डनकारिकुङ्कमादिविलेपनं यस्य, यद्यपि वर्णकशब्देन चन्दनमुच्यते परं 'गोसीसचंदणाणुलित्तगत्ते' इत्यनेन तस्योक्तत्वात् । आविद्धानि—परिहितानि मणिसुवर्णानि उपलक्षणत्वान्मणिसुवर्णमयभूषणानि येन, यस्य न धात्वन्तरमयं भूषणमस्तीत्यर्थः, कल्पितो—विन्यस्तो हारो—ऽष्टादशसरिकोऽर्द्धहारो—नवसरिकस्त्रिसरिकं च प्रतीतं यस्य स तथा, प्रालम्बो—मुक्तावलीझुंवनकं प्रलम्बमानो यस्य, कटिसूत्रेण—कट्याभरणेन सुष्ठुकृता शोभा यस्य, ततः पदत्रयस्य

लम्बश्च, निरालम्बोऽपि जघन्योत्कृष्टभेदभिन्नो द्विविधः, तत्र जघन्यस्तावत्सांवत्सरिकप्रतिक्रमणादारभ्य कार्त्तिक-
चतुर्मासकप्रतिक्रमणं यावत्सप्ततिदिनमानः, उत्कृष्टस्तु चातुर्मासिकः, सोऽपि गृहिज्ञाताऽज्ञातभेदाभ्यां विभज्य-
मानो द्वेधा, तत्र गृहिज्ञातस्तावत्सप्ततिदिनमानोऽनन्तरोदित एव, अज्ञातस्त्वाषाढचतुर्मासकप्रतिक्रमणात् सांव-
त्सरिकप्रतिक्रमणं यावत्पञ्चाशद्दिनमानः, परं स्वाभिगृहीतोऽपि पञ्चकवृद्ध्याऽयमेव, तथाहि—आषाढसितदशमी-
स्थिताः साधवः पूर्णिमास्यां वयमत्र स्थिताः स्म इति स्वाभिगृहीतं कुर्वन्ति, कुर्वन्तस्तु तृण–डगल–भस्म–मल्लक–
पीठ–फलक–शय्या–संस्तारकादीनि वर्षायोग्यान्युपकरणानि स्वायत्तीकुर्वन्ति, मङ्गलनिमित्तं पञ्चदिनानि यावत्
पर्युषणाकल्पं कर्षयन्ति, पृच्छतां च गृहस्थानां पुरोऽधिकरणादिदोषसम्भवशङ्कया वयमत्र स्थिताः स्म नवेति
नियमाभावमेव वदन्तीत्येष उत्सर्गः—"सेसकालं पज्जोसविताणं अववाओ त्ति" वचनात्तथाविधक्षेत्रादिसामग्र्य
भावे श्रावणकृष्णपञ्चम्यां पर्युषितव्यं, तदभावे दशम्यां, तदभावे पञ्चदश्यां, एवं पञ्चकपञ्चकवृद्धिस्तावत् क्रियते
यावद्भाद्रपदसितपञ्चमी, तस्यां तु नियमतो गृहिज्ञातमेव पर्युषितव्यं, अयं च विधिः सङ्घादेशाद् व्युच्छिन्नः,
अत इदानी स्वाभिगृहीतं गृहिज्ञातं चेत्युभयथापि भाद्रपदसितचतुर्थ्यामेव पर्युषितव्यं । तत्र दिनानां पञ्चाशदा-
षाढसितचतुर्दश्या आरभ्य भाद्रसितचतुर्थ्यन्तं, सप्ततिस्तु चतुर्थ्या आरभ्य कार्त्तिकसितचतुर्दश्यन्तं, अयं द्वेधापि
निरालम्बनः स्थविरकल्पिकानामेव, जिनकल्पिकानां तु चातुर्मासिक एवेति, उक्तं च—"चाउम्मासुक्कोसो, सत्तरि-
राइंदिआ जहन्नेणं । थेराणं जिणाणं पुण, नियमा उक्कोसओ चेव ॥ १ ॥ त्ति ।" पर्युषणाया अर्वाग् परत्र च

हट्ठतुट्ठ जाव हयहियया ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सुद्धपावेसाइं मंगल्लाइं वत्थाइं पवराइं परिहिआ अप्पमहग्घाभरणालंकियसरीरा सिद्धत्थयहरिआलिया कयमंगलमुद्धाणा सएहिं सएहिं गेहेहिंतो निग्गच्छंति, निग्गच्छित्ता खत्तियकुंडग्गामं नगरं मज्झं मज्झेणं जेणेव सिद्धत्थस्स रन्नो भवणवरवडिंसगपडिदुवारे तेणेव उवागच्छंति, उवागच्छित्ता भवणवरवडिंसगपडिदुवारे एगओ मिलंति, मिलित्ता जेणेव बाहिरिआ उवट्ठाणसाला जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहिअं जाव कट्टु सिद्धत्थं खत्तियं जएणं विजएणं वद्धावेंति ॥ ६७ ॥

व्याख्या—तएणं ते इत्यादितो वद्धावेंति इति पर्यन्तम्, तत्र स्नानानन्तरं कृतं बलिकर्म्म यैः स्वगृहदेवतानां, कृतानि कौतुकमङ्गलान्येव प्रायश्चित्तानि दुःस्वप्नादिविघातार्थमवश्यकरणीयत्वाद्यैस्ते तथा, तत्र कौतुकानि—मषीतिलकादीनि, मङ्गलानि तु—सिद्धार्थकदध्यक्षतदूर्वाङ्कुरादीनि । शुद्धात्मानः-स्नानशुचीकृतदेहाः वेसाइं ति वेषे साधूनि वेष्याणि—वस्त्राणीति योगः, अथवा शुद्धानि च तानि प्रवेश्यानि च—राजसभाप्रवेशोचितानि चेति मंगल्यानि—मङ्गलकरणे साधूनि-प्रवराणि—प्रधानानि, परिहितानि—निवसितानि, अल्पानि—स्तोकानि, महार्घाणि—बहुमूल्यानि, यान्याभरणानि तैरल-

मासवृद्धौ क्रमेण दिनानामशीतिः शतं च सम्पद्यते कथं पञ्चाशत्सप्ततिर्वा? इत्याद्याक्षेपपरिहारौ तु सामाचार्यां "अंतरा वि से कप्पइ" इत्यग्रेतनग्रन्थव्याख्यावसरे वक्ष्यामः। सालम्बनस्तु स्थविरकल्पिकानामेव, विहितमासकल्पानां तत्रैव चतुर्मासकानन्तरमपि मार्ग्गशीर्षं यावदवस्थाने पाण्मासिकोऽवगन्तव्यः। उक्तं च—"काऊण मासकप्पं, तत्थेव ठिआण तीतमग्गसिरे। सालंबणयाणं पुण, छम्मासिओ होइ जिट्ठुग्गहो ॥ १ ॥ त्ति।" एवं व्यावर्णितस्वरूपः पर्युषणाकल्पः प्रथमचरमजिनतीर्थे नियतः, शेषाणां त्वनियतः, यतस्ते दोषाभावे देशोनां पूर्वकोटिमपीच्छन्त्येकत्रावस्थितिं, इतरथा न मासमपीत्येवं विदेहेऽपि, इति पर्युषणाकल्पो दशमः ॥ १० ॥

एते दशापि कल्पा ऋषभवर्द्धमानतीर्थे नियता एव, अजितादीनां तीर्थे तु आचेलक्यौ १ द्देशिक २ प्रतिक्रमण ३ राजपिण्ड ४ मास ५ पर्युषणा ६ लक्षणाः षट्कल्पा अनियताः, शेषास्तु शय्यातर १ चतुर्व्रत २ पुरुषज्येष्ठ ३ कृतिकर्म्म ४ लक्षणाश्चत्वारो नियता एवेति। एवं दशानामपि कल्पानां नियतानियतविभागकरणे कारणं तावत् तत्तत्कालभाविनो मनुजा एव, यदुक्तं—"पुरिमा उज्जुजड्डा उ, वक्कजड्डा उ पच्छिमा। मज्झिमा उज्जुपन्ना उ, तेण धम्मे दुहा कए ॥ १ ॥ पुरिमाणं दुव्विसुज्झो उ, चरिमाणं दुरणुपालओ। कप्पो मज्झिमगाणं तु, सुविसुज्झे सुपालए ॥ २ ॥" तत्र ऋषभतीर्थे ऋजुत्वेन व्रतादिप्रतिज्ञानिर्वाहित्वेऽपि नटनर्त्तकीनृत्यावलोककसाधुदृष्टान्तेन जडत्वाद्विशुद्धिर्दुस्साध्या। तथाहि—

किल केचिदादिमजिनयतयो विचारभूमेर्गुरुसमीपमागताः पृष्टाश्च गुरुभिर्यथा—किमियच्चिराद्यूयमागताः? ऋजु-

तएणं ते सुविणलक्खणपाढगा सिद्धत्थेणं रन्ना वंदिअपूइअसक्कारिअसम्माणिआ समाणा पत्तेअं पत्तेअं पुव्वन्नत्थेसु भद्दासणेसु निसीयंति ॥ ६८ ॥

व्याख्या—तएणं ते सुविणेत्यादितो निसीयंति इति पर्यन्तम्, तत्र वन्दिताः—सद्‌गुणोत्कीर्त्तनेन, पूजिताः—पुष्पैः, सत्कारिताः फलवस्त्रादिदानेन, सन्मानिता—अभ्युत्थानादिप्रतिपत्त्या, अन्ये तु पूजिता—वस्त्राभरणादिना, सत्कारिता—अभ्युत्थानादिना, सन्मानिता—आसनदानादिना, क्वचित् अच्चिअवंदिअमाणिअपूइअ त्ति पाठस्तत्रार्चिताः—चन्दनचर्चादिना, मानिता दृष्टिप्रणामतः, शेषं प्राग्वत्। समाण त्ति सन्तः, पूर्वन्यस्तेषु भद्रासनेषु ॥ ६८ ॥

तएणं सिद्धत्थे खत्तिए तिसलं खत्तियाणिं जवणियंतरियं ठावेइ ठावित्ता पुप्फफलपडिपुण्णहत्थे परेणं विणएणं ते सुविणलक्खणपाढए एवं वयासी ॥ ६९ ॥

व्याख्या—तएणं सिद्धत्थे इत्यादितो वयासी इति पर्यन्तम्, तत्र पुष्पफलैः—सहस्रपत्रनालिकेरादिभिः प्रतिपूर्णौ हस्तौ यस्य स तथा, यतः—"रिक्तपाणिर्न्न पश्येच, राजानं दैवतं गुरुम्। निमित्तज्ञं विशेषेण, फलेन फलमादिशेत् ॥ १ ॥" इति, शेषं सुगमम् ॥ ६९ ॥

एवं खलु देवाणुप्पिया ! अज्ज तिसला खत्तियाणी तंसि तारिसगंसि जाव सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा ॥७०॥

त्वात्ते चोचुर्यथा—नटं नृत्यन्तं प्रेक्षमाणाः स्थितास्ततो गुरुस्तानशिष्यत्, यथा—मा पुनरेवं कार्पुरिति प्रतिपन्नवन्तश्च तत् ते, ततोऽन्यदा ते तथैव पृष्टा ऊचुर्यथा—नटीं नृत्यन्तीं वीक्षमाणाः स्थिताः प्रेरिताश्च गुरुणा, ते जडत्वादूचुर्भ-वद्भिर्नटस्तदा निषिद्धो न नटीति, नटे हि निषिद्धे नटी निषिद्धैवेति प्रतिपत्तुं न शकितं तैरिति ।

अन्योऽपि दृष्टान्तो यथा—

एकः कुंकणदेशजन्मा वणिग् वृद्धत्वे कुटुम्बमोहं संत्यज्य प्रव्रजितः, स चैकदेर्यापथिकीकायोत्सर्गे चिरकालं स्थितवान्, किं कारणं? इति गुरुणोक्ते जीवदया चिन्तितेत्यवदत्। कथं? इति पुनः पृष्टे गृहे वसद्भिरस्माभिः क्षेत्रे वृक्षनिसूदनादिपुरस्सरमुप्तानि धान्यानि भूयांस्यभूवन्, इदानीं मत्पुत्रा निश्चिन्ता अकुशलाश्च नैतत्करिष्यन्ति, तथा च ते वराकाः क्षुत्पीडिता मरिष्यन्तीति ऋजुत्वात् स्वाकूते कथिते गुरुभिरुक्तं जीवघातादि विना कृषि-र्नोत्पद्यते इति दुर्ध्यातमित्युक्ते मिथ्यादुष्कृतं दत्तवान्। इति कौंकणसाधुदृष्टान्तः ।

वीरतीर्थे तु वक्रजडत्वाद् व्रतादिपालनं तद्विशुद्धिश्चेत्युभयमपि दुःसाध्यं। अत्रापि दृष्टान्तद्वितयं, तत्र प्रथमो यथा—

केचित् किल चरमजिनसाधवस्तथैव पृष्टा ऊचुर्यथा—नटं वीक्षमाणाः स्थितास्ततो गुरुणा निषिद्धाः, पुनरन्यदा नटीं वीक्षमाणाः स्थिताः पृष्टाश्च, वक्रतयोत्तरान्तराणि ददुः, निर्बन्धे च नटीमुक्तवन्त, उपालब्धाश्च सन्तो जड-त्वादूचुर्यथा नट एव न द्रष्टव्य इत्यस्माभिर्ज्ञातमासीदिति ।

ऐदंपर्यालोचनात्, अत एव चाऽभिगतार्था–अवधारितार्थाः । सिद्धार्थस्य राज्ञः पुरः स्वप्नशास्त्राण्युच्चरन्त उच्चरन्त एवं वदन्ति, तत्र स्वप्नशास्त्राण्येवं यथा—

"अनुभूतः १ श्रुतो २ दृष्टः ३, प्रकृतेश्च विकारजः ४ । स्वभावतः समुद्भूत ५–श्चिन्तासन्ततिसम्भवः ६ ॥ १ ॥ देवताद्युपदेशोत्थो ७, धर्मकर्मप्रभावजः ८। पापोद्रेकसमुत्थ ९ श्च, स्वप्नः स्यान्नवधा नृणाम् ॥ २ ॥ युग्मम् ॥ प्रकारै-रादिमैः षड्भि–रशुभश्च शुभोऽपि च । दृष्टो निरर्थकः स्वप्नः, सत्यस्तु त्रिभिरुत्तरैः ॥ ३ ॥ रात्रेश्चतुर्षु यामेषु, दृष्टः स्वप्नः फलप्रदः । मासैर्द्वादशभिः षड्भि–स्त्रिभिरेकेन च क्रमात् ॥ ४ ॥ निशान्त्यघटिकायुग्मे, दशाहात्फलति ध्रुवम् । दृष्टः सूर्योदये स्वप्नः, सद्यः फलति निश्चलम् ॥ ५ ॥ मालास्वप्नोऽहि दृष्टश्च, तथाधिव्याधिसम्भवः । मलमूत्रादिपी-डोत्थः, स्वप्नः सर्वो निरर्थकः ॥ ६ ॥ धर्मरतः समधातु–र्यः स्थिरचित्तो जितेन्द्रियः सदयः । प्रायस्तस्य प्रार्थित–मर्थं स्वप्नः प्रसाधयति ॥ ७ ॥ न श्राव्यः कुस्वप्नो, गुर्वादेस्तदितरः पुनः श्राव्यः । योग्यश्राव्याभावे, गोरपि कर्णे प्रविश्य वदेत् ॥ ८ ॥ इष्टं दृष्ट्वा स्वप्नं, न सुप्यते नाप्यते फलं तस्य । नेया निशापि सुधिया, जिनराजस्तवनसंस्तवतः ॥ ९ ॥ स्वप्नमनिष्टं दृष्ट्वा, सुप्यात् पुनरपि निशामवाप्यापि । नैतत्कथ्यं कथमपि, केषांचित्फलति न स तस्मात् ॥ १० ॥ पूर्वमनिष्टं दृष्ट्वा, स्वप्नं यः प्रेक्षते शुभं पश्चात् । स तु फलदस्तस्य भवेत्, द्रष्टव्यं तद्वदिष्टेऽपि ॥ ११ ॥ स्वप्ने मानव-मृगपति–तुरङ्गमातङ्गवृषभसुरभीभिः । युक्तं रथमारूढो, यो गच्छति भूपतिः स भवेत् ॥ १२ ॥ अपहारो हयवारण-यानासनसदननिवसनादीनाम् । नृपशङ्काशोककरो, बन्धुविरोधार्थहानिकरः ॥ १३ ॥ यः सूर्याचन्द्रमसो–र्बिम्बं

द्वितीयो यथा—कश्चित् श्रेष्ठिपुत्रो दुर्विनीतः, मातापित्रादीनां प्रत्युत्तरं न देयमिति स्वजनसमक्षं शिक्षितः, कदाचित् सर्वेषु बहिर्गतेषु गृहद्वारं दत्त्वा स्थितो, द्वारागतेन श्रेष्ठिना द्वारोद्घाटनार्थं बहुशः शब्दकरणेऽप्यवदन्, भित्तेरुपरि प्रविश्य मध्यगतेन पित्रा खट्वास्थो हसन्नुपालब्धः प्राह युष्माभिरेव शिक्षितोऽहं, यत् प्रत्युत्तरं न देयमिति श्रेष्ठिपुत्रदृष्टान्तः ।

अजितादितीर्थे तु ऋजुप्रज्ञत्वादुभयमपि सुकरमेव, दृष्टान्तस्तु नटनृत्यावलोककसाधोरेव । यथा—

केचिदजितादिजिनसाधवस्तथैव पृष्टाः, ऋजुत्वादूचुर्यथा–नटं वीक्षमाणाः स्थिताः, ततो गुरुणा तथैवोक्ताः, पुनरन्यदा नटीं दृष्ट्वा प्रज्ञत्वाद् विकल्पितवन्तो, नटवन्नट्यपि न वीक्षितव्या रागहेतुत्वादिति ।

नन्वास्तां ऋजुप्रज्ञानां चारित्रं, ऋजुजडानां पुनः कथं? इति चेदुच्यते—सत्यामप्यनाभोगतः स्खलनायां ऋजुजडानां तीव्रसंक्लेशाभावाद्भावतः शुद्धत्वात्, स्थिरभावेनैव चारित्रपरिणामस्तीर्थकृद्भिर्निर्दिष्टः, तथा सहकारिवशेन कादाचित्को ह्यस्थिरभावोऽपि न चारित्रपरिणामं हन्ति, न ह्यग्निसम्पर्कादुष्णमपि वज्रं वज्रत्वमपि जहातीति। यदाहुः श्रीहरिभद्रसूरिपादाः—"एवं विहाण वि इहं, चरणं दिट्ठं तिलोगनाहेहिं । जोगाण थिरो भावो, जम्हा एएसि सुद्धो उ ॥ १ ॥ अथिरो अ होइ भावो, सहकारिवसेण ण पुण तं हणइ । जलणा जायइ उण्हं वज्जं न य चयइ तत्तं पि ॥ २ ॥" इति । नन्वेवं युक्तश्चरणानपगम ऋजुजडानामार्जवलक्षणस्य गुणस्य सद्भावात्, वक्रजडानां पुनर्दोषद्वयसद्भावात् कथमसौ? इति चेदित्यत्राप्युच्यते, यथा—ऋजुजडानामनाभोगतः स्खलना, तथा मायैव

व्याख्या—मंडलियेत्यादितो बुज्झंति इति पर्यन्तं सुबोधम् ॥ ७७ ॥

इमे य णं देवाणुप्पिया ! तिसलाए खत्तिआणीए चउद्दस महासुमिणा दिट्ठा। तं उराला णं देवाणुप्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव मंगल्लकारगा णं देवाणुप्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, तंजहा—अत्थलाभो देवाणुप्पिया ! भोगलाभो देवाणुप्पिया ! पुत्तलाभो देवाणुप्पिया ! सुखलाभो देवाणुप्पिया ! रज्जलाभो देवाणुप्पिया ! एवं खलु देवाणुप्पिया ! तिसला खत्तिआणी नवन्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणं राइंदियाणं विइक्कंताणं तुम्हं कुलकेउं, कुलदीवं, कुलपव्वयं, कुलवडिंसयं, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलाधारं, कुलनंदिकरं, कुलजसकरं, कुलपायवं, कुलतंतुसंताणविवद्धणकरं, सुकुमालपाणिपायं, अहीणपडिपुन्नपंचिंदियसरीरं, लक्खणवंजणगुणोववेयं, माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुंदरंगं, ससिसोमाकारं, कंतं पियदंसणं, सुरूवं, दारयं पयाहिसि ॥ ७८ ॥

वक्रतेति वचनात् वक्रजडाना प्रायः कालानुभावतोऽसकृन्मातृस्थानादेव, तच्च संज्वलनकषायाणामेवातिचार-
हेतुत्वात् तत्सञ्जातमेवात्र ग्राह्यं, नेतरत्, तस्य चारित्राद्युपहन्तृत्वात् । यदुक्तं—"सव्वे वि अ अइयारा, संजल-
णाणं तु उदयओ हुंति । मूलच्छिज्जं पुण होइ, बारसण्हं कसायाणं ॥ १ ॥" यच्चामीषां जडत्वं तन्मेधामधि-
कृत्यैव बोध्यं, न पुनः परकीयलक्ष्याभिप्रायावगममाश्रित्यापि यद्वा वक्रजडानां जडत्वं मायायामेवान्तर्भवति,
यतस्ते जानन्तोऽपि परप्रत्ययनार्थं माययैवासदप्यात्मीयं जडत्वमाविष्कुर्वन्ति, तस्माज्जडत्वमुपचरितं, माया तु
वास्तवीति वास्तव्येव मायाहेतुका चारित्रस्खलनेति भावः इति । केचिच्चातिचारबाहुल्यात् दुष्षमायां चारित्रमेव
न मन्यन्ते तदप्यसमञ्जसमेव । "न विणा तित्थं निग्गंथेहिं" इति वचनान्निर्ग्रन्थैर्विना तीर्थस्यैवासम्भवात्, व्यवहार-
भाष्ये त्वेवंविधवक्तॄणां महतः प्रायश्चित्तस्योक्तत्वाच्च । तथा—"जो भणइ नत्थि धम्मो, न य सामाइअं न चेव
वयाइं । सो समणसंघवज्झो, कायव्वो समणसंघेण ॥ १ ॥" इत्याद्युक्तेश्च, तस्मात् पूर्वसाध्वपेक्षया हीनहीनतर-
क्रियापरिमाणवत्त्वेऽपि नृपगोपवृक्षवृषभपुष्करिण्याद्यागमोक्तदृष्टान्तेन दुष्षमसाधूनां साधुत्वमेवेत्यादिबहुवक्तव्यं
ग्रन्थान्तरादवगन्तव्यमिति । यस्तु सप्ततिदिनमानः पर्युषणाकल्पो नैयत्येनोक्तः, स चाशिवादिकारणाभावे सतीति
बोध्यं । अशिवादिदोषसद्भावे तु अर्वागपि निर्गमने जिनाज्ञैव, यत उक्तं—"असिवे ओमोअरिए, रायदुट्ठे भए

१ 'मातृस्थानात्' कौटिल्यात् ।

इमे अ णं तुमे देवाणुप्पिए ! चउद्दस महासुमिणा दिट्ठा, तं उरालाणं तुमे जाव जिणे वा तेलुक्कनायगे धम्मवरचाउरंतचक्कवट्टी ॥ ८५ ॥

व्याख्या—इमे अ णमित्यादितश्चक्कवट्टीति प्राग्वत् ॥ ८५ ॥

तएणं सा तिसला एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ जाव हयहियया करयल जाव ते सुमिणे सम्मं पडिच्छइ पडिच्छित्ता ॥ ८६ ॥

व्याख्या—तएणं सेत्यादितः पडिच्छित्तेति यावत् प्राग्वत् ॥ ८६ ॥

सिद्धत्थेणं रन्ना अब्भणुन्नाया समाणी नाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सए भवणे तेणेव उवागच्छइ उवागच्छित्ता सयं भवणं अणुप्पविट्ठा ॥ ८७ ॥

व्याख्या—सिद्धत्थेणमित्यादितोऽणुप्पविट्ठेति पर्यन्तं प्राग्वत् ॥ ८७ ॥

जप्पभिइं च णं समणे भगवं महावीरे तंसि रायकुलंसि साहरिए तप्पभिइं च णं बहवे वेसमणकुंडधारिणो तिरियजंभगा देवा सक्कवयणेणं से जाइं इमाइं पुरा पोराणाइं महानिहा-

अ गेलन्ने । एएहिं कारणेहिं, अपत्ते होइ निग्गमणं ॥ १ ॥ काइअभूमी संथारए अ, संसत्तदुलहे भिक्खे । एएहिं कारणेहिं, अपत्ते होइ निग्गमणं ॥ २ ॥ राया सप्पे कुंथू, अगणिगिलाणे अ थंडिलस्सऽसई । एएहिं कारणेहिं, अपत्ते होइ निग्गमणं ॥ ३ ॥" तथा वर्षानतिक्रमे कालातिक्रमणऽपि जिनाज्ञा एव । उक्तं च—"वासं वा नो विरमइ, पंथा वा दुग्गमा सचिक्खिल्ला । एएहिं कारणेहिं, अइकंते होइ निग्गमणं ॥१॥" एवमशिवादिदोषाभावेऽपि संयमपरिपालनहेतवः क्षेत्रगुणा अप्यन्वेषणीयास्ते चामी—"चिक्खिल्ल १ पाण २ थंडिल ३ वसही ४ गोरस ५ जणाउले ६ विज्जे ७ । ओसह ८ निचया ९ हिवई १०, पासंडा ११ भिक्ख १२ सज्झाए १३ ॥ १ ॥" व्याख्या—यत्र क्षेत्रे न भूयान् कर्दमः १, यत्र च न भूयांसः सम्मूर्च्छिमाः प्राणाः २, स्थण्डिलमनापातमसंलोकं ३, वसतिः स्त्रीषण्ढपश्वादिदोषरहिता सुलभा च ४, यत्र गोरसः प्रचुरः ५, यत्र भूयान् जनः, सोऽप्यतीव भद्रकः ६, वैद्याश्च भद्रकाः ७, औषधानि सुलभानि ८, यत्र कौटुम्बिकानां धनधान्यनिचितानि बहूनि गृहाणि ९, यत्र राजा अतीव भद्रकः १०, यत्र ब्राह्मण–तापस–भरडक–लैङ्गिकादिभिर्मुनीनामपमानं न स्यात् ११, यत्र क्षेत्रे भैक्ष्यं सुलभं १२, यत्र स्वाध्यायो वसतावन्यत्र च शुद्ध्यति १३, इति । जघन्यतोऽपि चत्वारोऽमी गुणाः—"सुलहा विहारभूमी १, विआरभूमी २ अ सुलहसज्झाओ । ३ सुलहा भिरका ४ य जहिं, जहन्नयं वासखित्तं तु ॥१॥" शेषं तु पञ्चादिद्वादशपर्यन्तगुणान्वितं मध्यममिति । एवंविधगुणाभावे सन्नपि दोषाभावो मरुमरीचिकावदकिञ्चित्करः, . तथा गुणा अपि दोषजुषो विषमिश्रितपायसमिवाकिञ्चित्कराः इति दोषाभावजुषो गुणानालोच्य

तएणं तीसे तिसलाए खत्तियाणीए अयमेयारूवे जाव संकप्पे समुप्पज्जित्था । हडे मे से गब्भे ? मडे मे से गब्भे ? चुए मे से गब्भे ? गलिए मे से गब्भे ? एस मे गब्भे पुव्विं एयइ, इयाणिं नो एयइ त्तिकट्टु ओहयमणसंकप्पा चिंतासोगसागरं संपविट्ठा करयलपल्हत्थमुही अट्टज्झाणोवगया भूमीगयदिट्ठिया झियायइ, तं पि य सिद्धत्थरायवरभवणं उवरयमुइंगतंतीतलतालनाडइज्जजणमणुज्जं दीणविमणं विहरइ ॥ ९२ ॥

व्याख्या—तएणं तीसे इत्यादितो विहरइ त्ति यावत्, तत्र हडे इत्यादि, हृतो मम स गर्भः केनचिद्देवादिना ?, मृतः कालधर्म्मं प्राप्तः ?, च्युतः– स जीवपुद्गलपिण्डतालक्षणात् पर्यायात् परिभ्रष्टः ?, गलितो–द्रवतामापद्य क्षरितः ?, चतुर्ष्वपि पदेषु काका विकल्पप्रतिपत्तिः, एजति–कम्पते, ओहयेत्यादि उपहतः–कालुष्यकलितो मनःसङ्कल्पो यस्याः, चिन्तया–गर्भहरणादिध्यानेन यः शोकः स एव सागरः तत्र सम्प्रविष्टा, करतले पर्यस्तं निवेशितं मुखं यया, आर्त्तध्यानोपगता, भूमिगतदृष्टिका–भूमिसम्मुखमेव किंकर्त्तव्यजडतया वीक्ष्यमाणा ध्यायति । तथा हि—
सत्यमिदं यदि भविता, मदीयगर्भस्य कथमपीह तदा । निःपुण्यकभविकानामवधिरिति ख्यातिमत्यभवम् ॥ १ ॥
यद्वा चिन्तारत्नं, नहि नन्दति भाग्यहीनजनसदने । नापि च रत्ननिधानं, दुर्गतगृहसंगतीभवति ॥ २ ॥ कल्पतरुर्मरुभूमौ, न प्रादुर्भवति भूम्यभाग्यवशात् । न हि निःपुण्यपिपासित–नॄणां पीयूषपानमपि ॥ ३ ॥ हा धिग् धिग्

चिन्तयति—"किं कुर्मः कस्य वा ब्रूमो, मोहस्य गतिरीदृशी। दुषेर्धातोरिवास्माकं, दोषनिष्पत्तये गुणः ॥ १ ॥ प्रमोदाय कृतोऽप्यासी—दयं खेदाय मे गुणः। नालिकेराम्भसि न्यस्तः, कर्पूरो मृतये यथा ॥ २ ॥" इति सञ्चिन्त्य श्रीवीरः एकदेशेनाङ्गुल्यादिना एजति, एतच्च यद्भगवता मातुरनुकम्पायै कृतमपि तस्या एवाधृतितया पर्यणंसीत्, तत्त्वागामिनि काले कालस्यैव दोषाद् गुणोऽपि वैगुण्याय कल्प्स्यते इति सूचनार्थमिति वृद्धाः। ततः स्वगर्भस्य कुशलमवधार्य सहर्षा त्रिशला एवमवादीत् ॥ ९३ ॥

नो खलु मे गब्भे हडे, जाव नो गलिए, मे गब्भे पुव्विं नो एयइ, इयाणिं एयइ, त्तिकट्टु हट्ठतुट्ठ जाव हयहियया एवं वा विहरइ, तएणं समणे भगवं महावीरे गब्भत्थे चेव इमेयारूवं अभिग्गहं अभिगिन्हइ नो खलु मे कप्पइ अम्मापिऊहिं जीवंतेहिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइत्तए ॥ ९४ ॥

व्याख्या—नो खलित्यादितः पव्वइत्तए त्ति पर्यन्तम्, तत्र—"प्रोल्लसितनयनयुगला, स्मेरकपोला प्रफुल्लमुखकमला। विज्ञातगर्भकुशला, रोमाञ्चितकञ्चुका त्रिशला ॥१॥ प्रोवाच मधुरवाचा, गर्भे मे विद्यतेऽथ कल्याणम्। हा! धिग्मयकाऽनुचितं, चिन्तितमतिमोहमतिकतया ॥ २ ॥ सन्त्यथ मम भाग्यानि, त्रिभुवनमान्या तथा च धन्याऽहम्। श्लाघ्यं च जीवितं मे, कृतार्थतामाप मे जन्म ॥ ३ ॥ श्रीजिनपदाः प्रसेदुः, कृताः प्रसादाश्च गोत्रदेवीभिः।

साधुभिस्तु सुतरां कारणाभावेऽवग्रहक्षेत्रमङ्गीकृत्यैकत्रावस्थानेन जघन्यतोऽपि सप्ततिदिनमानः पर्युषणाकल्पः समाराधनीयः। तदेवं समुपस्थिते पर्युषणाकल्पे पर्युषणापर्वदिनान्तं मङ्गलनिमित्तं पञ्चभिरेव दिनैर्वाच्यमानस्यास्य पर्युषणाकल्पसूत्रस्य श्रवणं काकदन्तपरीक्षावन्निष्प्रयोजनं, कण्टकशाखामर्दनवच्च सापायं भविष्यति, इति पराशङ्कापराकृतये तन्माहात्म्यं यथा—"यथा द्रुमेषु कल्पद्रुः, सर्वकामफलप्रदः। यथौषधीषु पीयूषं, सर्वरोगहरं परम् ॥ १ ॥ रत्नेषु गरुडोद्गारो, यथा सर्वविषापहः। मन्त्राधिराजो मन्त्रेषु, यथा सर्वार्थसाधकः ॥ २ ॥ यथा पर्वसु दीपाली, सर्वात्मसु सुखावहा। कल्पः सद्धर्मशास्त्रेषु, पापव्यापहरस्तथा ॥ ३ ॥ कल्पः पर्युषणाभिधः कलिमलप्रध्वंसबद्धादरः, कल्पः सर्वसमीहितोदयविधौ कल्पद्रुरूपः कलौ। ये कल्पं परिवाचयन्ति भविकाः शृण्वन्ति ये चादरात्, ते कल्पेषु विहृत्य मुक्तिवनितोत्सङ्गे सदा शेरते ॥ ४ ॥ श्रीमद्वीरचरित्रबीजमभवच्छ्रीपार्श्ववृक्षाङ्कुरः, स्कन्धो नेमिचरित्रमादिमजिनव्याख्या च शाखाचयः। पुष्पाणि स्थविरव्रजस्य च कथोपादेयहेयं तथा, सौरभ्यं फलमत्र निर्वृतिमयं श्रीकल्पकल्पद्रुमे ॥ ५ ॥ नार्हतः परमो देवो न मुक्तेः परमं पदम्। न श्रीशत्रुंजयात्तीर्थं श्रीकल्पान्न परं श्रुतम् ॥ ६ ॥ पुण्यानामुत्तमं पुण्यं श्रुतानामुत्तमं श्रुतम्। ध्येयानामुत्तमं ध्येयं जिनैः श्रीकल्प उच्यते ॥ ७ ॥ आचारात्तपसा कल्पः कल्पः कल्पद्रुरीप्सिते। कल्पो रसायनं सम्यक् कल्पस्तत्त्वार्थदीपनः ॥ ८ ॥ वाचनात् साहाय्यदानात् सर्वाक्षरश्रुतेरपि। विधिनाराधितः कल्पः शिवदोऽन्तर्भवाष्टकम् ॥९॥ एगग्गचित्ता जिण सासणंमि, पभावणा पूअपरायणा जे। तिसत्तवारं निसुणंति कप्पं, भवन्नवं गोयम ते तरंति ॥१०॥" इत्यादि कल्पसूत्रश्रवणफलम्।

दीनां, यद्वा तदा रवेर्मेषस्थत्वात् भगवतश्च मध्यरात्रे जन्मभावात् तदा मकरलग्नं (तत्र) प्रथमाया चान्द्र्यां होरायां 'इंद्वर्कयोः समे' इत्युक्तेः, अन्यथा वा सुधिया वृद्धोपदेशाद् भावनीयम् । सौम्यासु—रजोवृष्ट्याद्यभावात् शान्तासु, वितिमिरासु—भगवज्जन्मकाले सार्वत्रिकोद्योतभावात् चन्द्रिकया वा ध्वस्तध्वान्तासु, विशुद्धासु—उल्कापातदिग्दाहाद्यभावात् निर्म्मलासु, जयोऽस्त्येषु इति जयिकेषु—राजादीनां जयदायिषु सर्वशकुनेषु—काकोलूककपोतक्यादिषु, यद्वा काकानां श्रवणे द्वित्रिचतुःशब्दाः शुभावहाः, प्रदक्षिणश्चासावनुकूलश्च भगवतः प्रदक्षिणवाहित्वादनुकूलः, अथवा प्रदक्षिणः—प्रदक्षिणावर्त्तत्वात्, अनुकूलः—सुरभिशीतत्वात्, भूमिसर्प्पिणि—मृदुत्वात्, चण्डवातो ह्युच्चैः सर्पति तादृशे मारुते प्रवातुमारब्धे, निष्पन्ना—निष्पन्नसर्वसस्या मेदिनी यत्र तादृशे काले—ऋतौ, प्रमुदिताः—सुभिक्षसौस्थ्यादिना, प्रक्रीडिताः—वसन्तोत्सवादिना क्रीडितुमारब्धाः, ततो विशेषणकर्म्मधारयः, जनपदेषु—जनपदवास्तव्यलोकेषु सत्सु, आरोग्या-ऽनाबाधा माता आरोग्यं-अनाबाधं दारकं प्रजाता—सुषुवे । जनिः सोपसर्गत्वात् सकर्म्मकः ।—"अचेतना अपि दिशः, प्रसेदुर्मुदिता इव । वायवोऽपि सुखस्पर्शा, मन्दं मन्दं ववुस्तदा ॥ १ ॥ उद्योतस्त्रिजगत्यासीत्, दध्वान दिवि दुन्दुभिः । नारका अप्यमोदन्त, भूरप्युच्छ्वासमासदत् ॥ २ ॥" ९६ ॥

जं रयणिं च णं समणे भगवं महावीरे जाए सा णं रयणी बहूहिं देवेहिं देवीहि य ओवयंतेहिं उप्पयंतेहि य उप्पिंजलमाणभूया कहकहगभूया आविहुत्था ॥ ९७ ॥

व्याख्या—जं रयणिं च णमित्यादितो भूया आविहुत्थ त्ति पर्यन्तम्, तत्र यस्यां रात्रौ भगवान् जातः, सा रजनी बहूहिं देवेहिं देवीहि य त्ति तत्र तीर्थकृतां जन्मनः सूतिकर्मणि शाश्वतजीतकल्पाधिकारिण्यः प्रथमतः षट्पञ्चाश-

नैवंविधमाहात्म्यस्यानैकांतिकत्वं शंकनीयम्, नच बहुविधव्ययसाध्यं प्रासादप्रतिमाप्रतिष्ठाद्यनुष्ठानं व्युदस्य सुखसाध्यतया पर्युषणाकल्पसूत्रश्रवणमात्रेणैव संतोष्टव्यम्, यतो यथावसरमशेषधर्मानुष्ठानेष्वप्यनिगूहितबलवीर्यस्य सम्यग्दृष्टेरेव कालादिसमग्रसामग्रीसध्रीचीनतया भव्यत्वपरिपाकवशादभीष्टफलसिद्धावुक्तमाहात्म्याव्यभिचारात् । नहि लोकेपि कृषिकर्मादौ कारणभूतादपि बीजात् पृथ्वीपाथःपवनादिसामग्रीशून्यादङ्कुरोत्पत्तिर्दृष्टा श्रुता वा ॥ अन्यथा । "इक्कोवि नमुक्कारो, जिणवरवसहस्स वद्धमाणस्स । संसारसागराओ, तारेइ नरं व नारिं वा ॥ १ ॥" इत्याद्याकर्णनोर्ध्वीकृतकर्णेन कल्पसूत्रश्रवणमप्युपेक्षणीयं स्यात्तदपेक्षया वीरनमस्कारस्य सुखसाध्यत्वात्, तस्मात् सामग्र्येव बलवती, अत एवोत्सूत्राद्युपहतस्यानेकशः कल्पसूत्रश्रवणेप्यनन्तसंसारतादवस्थ्यं तस्य सामग्र्यभावात् । सामग्री प्रवचनाविरोधेनैव भवति, प्रवचनाविरोधस्तूत्सूत्राद्युपहतस्यासंभवी तस्मात् स्वल्पमपि धर्मानुष्ठानं तदितरधर्मानुष्ठानाविरोधेनैव श्रेयोबीजं नेतरत्, यतः—"आराध्येनाविरोधेन स्वल्पं यत्सुकृतं कृतम् । तत्सर्वं श्रेयसां बीजं वैपरित्यं विपर्यये ॥ १ ॥" तदपि धर्मानुष्ठानं सामग्र्यन्तःपातितारतम्याद्यध्यवसायविशेषितं सत्तत्तदनुरूपकार्यजनकं प्रतिप्राणिभिन्नमिति न किञ्चिदनुपपन्नम्, एतेनाल्पत्वादिविशेषितशङ्कापि व्युदस्ता, यतः शुद्धश्रद्धानसद्ध्यानादिकारणगुणोत्कर्षापकर्षादेरचिन्त्यमाहात्म्यवशात् केषांचिदान्तर्मौहूर्तिकेनापि चारित्रेण केवलोत्पत्तिः अन्येषां पुनस्तथाविधयोग्यतावशात् अन्तर्मुहूर्तात् समयाद्याधिक्यगणनया यावद्देशोनपूर्वकोट्यापि । सामग्र्यनङ्गीकारे तु सम्यग्दृष्टेरिवोत्सूत्राद्युपहतदृष्टेरपि किञ्चिद् धर्मानुष्ठानमवलंब्य सदृशफलसिद्धौ सिद्धं प्रवचनेऽत्यन्तमासमञ्जस्यम्,

मादधुः ॥ १२ ॥ वक्त्रा तदूर्वया जन्म–गेहाद्रम्भागृहत्रयम् । ताः पूर्वस्यां दक्षिणस्या–मुत्तरस्यां व्यधुस्ततः ॥ १३ ॥ याम्यरम्भागृहे नीत्वाऽभ्यङ्गं तेनुस्तु तारतयोः । स्नानचर्चांशुकालङ्का–रादि पूर्वगृहे ततः ॥ १४ ॥ उत्तरेऽरणिकाष्ठाभ्या–मुत्पाद्याग्निं सुचन्दनैः । होमं कृत्वा बवन्धुस्ता, रक्षापोट्टलिकां द्वयोः ॥ १५ ॥ पर्वतायुर्भवेत्युक्त्वा, स्फालयन्नश्मगोलकौ । जन्मस्थाने च तौ नीत्वा, स्वस्वदिक्षु स्थिता जगुः ॥ १६ ॥ एताश्च । प्रत्येकं च सामानिकी–चत्वारिंशच्छतान्विताः । महत्तराभिः प्रत्येकं, तथा चतसृभिर्युताः ॥१७॥ अङ्गरक्षैः पोडशभिः, सहस्रैः सप्तभिस्तथा । अनीकैस्तदधीशैश्च, सुरैश्चान्यैर्महर्द्धिभिः ॥ १८ ॥ आभियोगिकदेवकृतैर्योजनप्रमाणविमानैरत्रायान्ति । इति दिक्कुमारिकामहोत्सवः ॥ ततः सिंहासनं शाक्रं, चचालाचलनिश्चलम् । प्रयुज्याथावधिं ज्ञात्वा, जन्मान्तिमजिनेशितुः ॥ १ ॥ ( संखेण भवणवासी १, वंतरदेवा य पडहसद्देणं २। उट्ठंति य ससभंता, जोइसिआ सिंहनाएणं ३ ॥ २ ॥ कप्पाहिवा वि चलिआ, घंटासद्देण बोहिया संता। सव्वड्ढिसमुदएणं, इंति इहं माणुसं खित्तं ॥ ३ ॥ ) वज्ञ्येकयोजनां घण्टां, सुघोषां नैगमेषिणा । अवादयत्ततो घण्टा–रेणुः सर्वविमानगाः ॥ ४ ॥ शक्रादेशं ततः सोच्चैः, सुरेभ्यो ज्ञापयत्स्वयम् । तेन प्रमुदिता देवा–श्चलनोपक्रमं व्यधुः ॥ ५ ॥ पालकाख्यामरकृतं, लक्षयोजनसम्मितम् । विमानं पालकं नामा–ध्यारोहत्रिदशेश्वरः ॥ ६ ॥ पालकविमाने पुरतोऽग्रमहिषीणामष्टौ भद्रासनानि, वामतश्चतुरशीतिसहस्रसामानिकसुराणां तावन्ति भद्रासनानि, दक्षिणतो द्वादशसहस्राभ्यन्तरपार्षदानां तावन्ति भद्रासनानि चतुर्दशसहस्रमध्यपार्षदानां तावन्त्येव भद्रा[illegible]नि एवं पोडशसहस्रबाह्यपार्षदानामपि पोडशसहस्रभद्रासनानि, पृष्ठतः

तस्मात्तदपाकृतये स्वीकर्त्तव्यावश्यं फलाव्यभिचारिणी सामग्रीति सर्वं समञ्जसम् । अथ 'पुरुषविश्वासे वचोविश्वासः' इति न्यायात्, वचनरूपापन्नस्यास्य सूत्रस्यापि व्यावर्णितमाहात्म्यसिद्धये प्रणेता प्ररूपणीय इति जिज्ञासायां प्रणेता तावत् सर्वाक्षरसन्निपातविचक्षणश्चतुर्दशपूर्वविद्युगप्रधानः श्रीभद्रबाहुस्वामी दशाश्रुतस्कन्धस्याष्टमाध्ययनरूपतया प्रत्याख्यानप्रवादाभिधाननवमपूर्वात् पर्युषणाकल्पसूत्रमिदं सूत्रितवान् । पूर्वाणि च क्रमेण प्रथममेकेन १, द्वितीयं द्वाभ्याम् २, तृतीयं चतुर्भिः ४, चतुर्थमष्टभिः ८, पञ्चमं षोडशभिः १६, षष्ठं द्वात्रिंशता ३२, सप्तमं चतुःषष्ट्या ६४, अष्टममष्टाविंशत्यधिकशतेन १२८, नवमं षट्पञ्चाशदधिकशतद्वयेन २५६, दशमं द्वादशाधिकैः पञ्चभिःशतैः ५१२, एकादशं चतुर्विंशत्यधिकैर्दशभिः शतैः १०२४, द्वादशमष्टचत्वारिंशदधिकैर्विंशत्या शतैः २०४८, त्रयोदशं षण्णवत्यधिकैश्चत्वारिंशता शतैः ४०९६, चतुर्दशं द्विनवत्यधिकैरेकाशीत्या शतैः ८१९२, च हस्तिप्रमाणमषीपुञ्जैर्लेख्यं । सर्वसंख्यया तु चतुर्दश पूर्वाणि षोडशसाहस्रैस्त्र्यशीत्यधिकैस्त्रिभिः शतैर्हस्तिप्रमाणमषीपुञ्जैर्लेख्यानि । अत एवेदमपि सूत्रं श्रुतबलेनासंख्येयभवनिर्णायकमहापुरुषप्रणीतत्वादुक्तमाहात्म्याव्यभिचारि । प्रतिसूत्रं चानन्तार्थाभिधायकमपि । यदुक्तम्—

"सव्वनईणं जइ हुज्ज वालुआ सव्वउदहिं(हीण)जं उदयं । तत्तो अणंतगुणिओ अत्थो इक्कस्स सुत्तस्स ॥ १ ॥"

तथा "वदने रसनाशतं भवेत् यदि मे निर्मलं(ल)केवलं हृदि । तदिदं गदितुं न पारयाम्यपि कल्पस्य महार्थमात्मना ॥ १ ॥" न चैवंविधमहापुरुषप्रणीतत्वात्प्राकृतनिबन्धः कथमिति शङ्कनीयम् । 'प्रेक्षावतां हि प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्ता' इति वचनात्, महापुरुषाः परोपकारपरायणा अपि यदि संस्कृतनिबन्धबन्धुरा भवन्ति, तदा बाला-

प्रभोरन्तिमदेवस्य, करिष्ये जननोत्सवम् ॥ २१ ॥ भेतव्यं देवि! तन्नैवे–त्युक्त्वाऽवस्वापिनीं ददौ । कृत्वा जिनप्रतिबिम्बं, जिनाम्बासन्निधौ न्यधात् ॥ २२ ॥ भगवन्तं तीर्थकरं, गृहीत्वा करसम्पुटे । विचक्रे पञ्चधा रूपं, सर्वश्रेयोऽर्थिकः स्वयम् ॥ २३ ॥ एको गृहीततीर्थेशः, पार्श्वे द्वौ चात्तचामरौ । एको गृहीतातपत्र, एको वज्रधरः पुनः ॥ २४ ॥ अग्रगः पृष्ठगं स्तौति पृष्ठस्थोऽप्यग्रगं पुनः । नेत्रे पश्चात्समीहन्ते, केचनाग्रेतनाः सुराः ॥ २५ ॥ शक्रः सुमेरुशृङ्गस्थं, गत्वाऽथो पाण्डुकं वनम् । मेरुचूलादक्षिणेना–तिपाण्डुकम्बलासने ॥ २६ ॥ कृत्वोत्सङ्गे जिनं पूर्वा–भिमुखोऽसौ निषीदति । समस्ता अपि देवेन्द्राः, स्वामिपादान्तमैयरुः ॥ २७ ॥ दश वैमानिका, विंशतिर्भवनपतयः, द्वात्रिंशद्व्यन्तराः, द्वौ ज्योतिष्कौ, इति चतुःषष्टिरिन्द्राणाम्। सौवर्णा राजता रात्नाः, स्वर्णरूप्यमया अपि । स्वर्णरत्नमयाश्चापि, रूप्यरत्नमया अपि ॥ २८ ॥ स्वर्णरूप्यरत्नमया, अपि मृत्स्नामया अपि । कुम्भाः प्रत्येकमष्टाढ्यं, सहस्रं योजनाननाः ॥ २९ ॥ पणवीसजोअणुत्तुं–गो वारस जोअणाइँ वित्थारो । जोअणमेगं नालुअ, इगकोडी सट्ठिलक्खाइं ॥ ३० ॥ एवं भृङ्गारदर्प्पण–रत्नकरण्डकसुप्रतिष्ठकस्थाल–पात्रिका–पुष्पचङ्गेरिकादिपूजोपकरणानि कुम्भवदष्टप्रकाराणि प्रत्येकमष्टोत्तरसहस्रमानानि । तथा मागधादितीर्थानां मृदं जलं च, गङ्गादीनां पद्मानि जलं च, पद्महदादीनां पद्मानि जलं च, क्षुल्लहिमवद्वर्षधरवैताढ्यविजयवक्षस्कारदेवकुरूत्तरकुरुभद्रशालनन्दनवनादीनां सिद्धार्थपुष्पतुम्बरगन्धान् सर्वौषधीश्च जलादि चाभियोगिकसुरैरच्युतेन्द्र आनाययत् । "क्षीरनीरभृतैर्वक्षः–स्थलस्थैस्त्रिदशा बभुः । संसारौघं तरीतुं किं, धृतकुम्भा इव स्फुटम् ॥ ३१ ॥ सिञ्चन्त इव भावद्रुं, क्षिपन्तो वा निजं मलम् । कलशं

जुईए महया बलेणं महया वाहणेणं महया समुदएणं महया वरतुडियजमगसमगप्पवाइएणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुरजमुइंगदुंदुहिनिग्घोसनाइयरवेणं उस्सुक्कं उक्करं उक्किट्ठं अदिज्जं अमिज्जं अभडप्पवेसं अदंडिमकुदण्डिमं अधरिमं गणियावरनाडइज्जकलियं अणेगतालायराणुचरियं अणुद्धुयमुइंगं ५०० अमिलायमल्लदामं पमुइयपक्कीलियसपुरजणजाणवयं दसदिवसं ठिइवडियं करेति ॥ १०२ ॥

व्याख्या—तएणं से सिद्धत्थे रायेत्यादितः ठिइवडिअं करेति त्ति पर्यन्तम्, तत्र जाव सव्वारोहेणं इत्यादि, समस्तान्तःपुरैर्यावत्करणात् प्रथमं सव्विड्ढीए सव्वजुईए इत्यादि, दीक्षाकालपठितं वक्ष्यमाणालापकवृन्दं समग्रं सव्वारोहेणमिति पर्यन्तमत्र ग्राह्यम् । सर्वपुष्पगन्धवस्त्रमाल्यालङ्कारादिरूपा या विभूषा तया, त्रुटितानां—वादित्राणां यः शब्दो निनादश्च—प्रतिरवः, महत्या ऋद्ध्या युक्त इति गम्यम् । युक्त्या-उचितेष्टवस्तुघटनया युत्या वा मेलेन द्युत्या वाऽऽभरणादीनां, बलेन—सैन्येन, वाहनेन—शिबिकावेगसरादिना, समुदयेन—सङ्गताभ्युदयेन परिवारादिसमुदायेन वा, तूर्याणां यमकसमकं—युगपत्प्रवादितं—ध्वनितं तेन, शंखः—कंबुः, पणवो—मृत्पडहः, भेरी—ढक्का, झल्लरी—चतुरङ्गुलनालिः करटिसदृशी वलयाकारा उभयतो नद्धेत्यन्ये, खरमुखी—काहला, हुडुक्का—तिवलितुल्या, मुरजो—मर्द्दलः, मृदङ्गो—मृन्मयः, दुन्दुभिः—देववाद्यं एषां निर्घोषो—महाध्वनिर्नादितं च—प्रतिशब्दस्तद्रूपो यो रवस्तेन ।

“अस्त्येका सान्वर्था चन्द्रकान्ता नाम नगरी, तस्यां च वशीकृतानेकराजो राजा विजयसेनः, वणिङ्मुख्यस्तु सश्रीकः श्रीकान्ताख्यः, तस्य च श्रीसखीनाम्नी भार्या, तया चोपचाराणां शतैरेकः सुतः प्रसूतः । स च प्रत्यासन्ने पर्युषणापर्वण्यष्टमं तपः करिष्याम इति कुटुम्बभाषितमाकर्ण्य सञ्जातजातिस्मृतिर्बालकः सन्नप्यष्टमं तपः कृतवान् । तदनु स्तन्यपानादिकमकुर्वन्तं तमवगम्य साश्रुनेत्रया मात्रा यथावत्सुतस्वरूपं पत्युर्निरूपितं, तेनाप्यनेकचिकित्सकैः कारितोपचारोऽपि स्तन्याद्यकुर्वन्नतुच्छां मूर्च्छामापन्नो हि, अमृतोऽपि मृत इत्यवधार्य धरायां निधिरिव निक्षिप्तस्तदीयैः । इतश्चाष्टमतपःप्रभावात्प्रकम्पितासनो धरणेन्द्रोऽवधिना प्राग्भवादारभ्यास्य व्यतिकरं विज्ञातवान् यदयं पूर्वभवे बाल्येऽपि मृतमातृको वणिगङ्गजो विमात्राऽल्पेऽप्यपराधे भूयः पराभूयमानो मित्राय स्ववृत्तान्तं न्यवेदयत्, ततः प्राग्जन्मन्यकृततपस एवायं पराभव इति मित्रवचसा मानापमानौ संत्यज्य तपस्येव लीनः सन्नेकदा प्रत्यासन्नपर्युषणापर्वण्यष्टमं तपः करिष्यामि इति ध्यानपरायणस्तृणगृहे सुप्तः । इतश्चावाप्तावसरया विमात्रा प्रत्यासन्नप्रदीपनादग्निकणमादाय तत्र निक्षिप्तः । स च तेन तपोध्यानपरायण एव सद्यो विपद्यापुत्रिणः श्रीकान्तस्य पुत्रत्वेनोत्पेदे, तदनु जातजातिस्मृतिरष्टमतपसावाप्तमूर्च्छो मृत इति धिया निजकैर्भूमौ निक्षिप्तः, अथ च यावन्न म्रियते तावत्संजीवयामीति ध्यात्वा धरणेन्द्रः स्वप्रभावादरक्षत् । श्रीकान्तस्तु पुत्रमृत्युश्रवणेन संजातहृदयसङ्घट्टः क्षणमात्रादेव मृत्युमाप, ततोऽपुत्रिणो धनाऽऽदित्सया राज्ञः पुरुषानागतान् धरणेन्द्रो न्यषेधयत् । तदनु तैर्विज्ञप्तो राजापि स्वयमागत्य धरणेन्द्रमुवाच किमिति प्रतिषेधयसि ? धरणेन्द्रोऽप्युवाच राजन् ! त्वमपि कथं गृह्णासि? राजाऽवदत्

यस्यां सा विजयवैजयिकी तां दसदिवसं ति दश दिवसान् यावत्स्थितो—कुलमर्यादायां पतिता—अन्तर्भूता या पुत्र-जन्मोत्सवसम्बन्धिनी वर्द्धापनिकादिका प्रक्रिया ताम् ॥ १०२ ॥

तएणं सिद्धत्थे राया दसाहियाए ठिइवडियाए वट्टमाणीए, सइए असाहस्सिए अ सयसाहस्सिए य जाए य दाए अ भाए अ दलमाणे अ दवावेमाणे अ, सइए अ साहस्सिए अ, सयसाहस्सिए अ लंभे पडिच्छमाणे अ पडिच्छावेमाणे अ एवं वा विहरइ ॥ १०३ ॥

व्याख्या—तएणं सिद्धत्थे इत्यादित एवं वा विहरइ त्ति पर्यन्तम्, तत्र दशाहिकायां दशदिवसप्रमाणायां शतिकान्—शतपरिमाणान्, साहस्रिकान्—सहस्रपरिमाणान्, शतसाहस्रिकान्—लक्षप्रमाणान्, 'यजीं देवपूजायां' इति धातोर्यागान्—देवपूजा, देवशब्देनात्रार्हत्प्रतिमा एव वाच्यतयाऽवगन्तव्याः, यतो भगवन्मातापित्रोः श्रीपार्श्वनाथापत्यत्वेन श्रमणोपासकत्वादन्याभिधेयत्वासम्भवः। दायान्—पर्वदिवसादौ दानानि, भागान्—लब्धविभागान् मानितद्रव्यांशान् वा, ददन् दापयन् लाभान् प्रतीच्छन्—गृण्हन् प्रतिग्राहयन् विहरति—आस्ते ॥ १०३ ॥

तएणं समणस्स भगवओ महावीरस्स अम्मापियरो पढमे दिवसे ठिइवडियं करेन्ति तइए दिवसे चन्दसूरदंसणियं करेंति, छट्ठेदिवसे धम्मजागरियं जागरेन्ति, एक्कारसमे दिवसे विइक्कंते, निव्वत्तिए असुइजम्मकम्मकरणे, संपत्ते बारसाहदिवसे, विउलं असणं पाणं खाइमं

णावि कओ फणाडोवो ॥ ११ ॥ सो घित्तूण करेणं, उल्लालेऊण घल्लिओ दूरं । भयरहिएण जिणेणं, लहु मिलिआ तो पुणो डिंभा ॥ १२ ॥ चिंतइ सुरो न भीओ, इत्थं ता अन्नहा पुणो भेसे । इत्थंतरंमि वीरो, तिंदूसयकीलणं कुणइ ॥ १३ ॥ तेहिँ कुमारेहिँ समं, सो वि सुरो डिंभरूवयं काउं । कीलइ वीरेण समं, जिओ अ सो भगवया तत्थ ॥ १४ ॥ तप्पिट्ठीए वीरो, आरूढा तस्स वाहणनिमित्तं । एसो वि अ तत्थ पणो, जिअस्स जं पिट्ठिमारुहणं ॥ १५ ॥ सो वड्ढिउं पवत्तो, वेआलाकारधारओ रुद्दो । सत्ततलमाणदेहो, संजाओ भेसणट्ठाए ॥ १६ ॥ जिणनाहेण वि पहओ, पिट्ठीए वज्जकठिणमुट्ठीए । सो आराडिं काउं, भएण मसगु व्व संकुडिओ ॥ १७ ॥ पायडिआमररूवो, रंजिअहिअओ पणमइ जिणिंदं । भणइ तुहं परमेसर!, धीरत्तं तारिसं चेव ॥ १८ ॥ जारिसयं सुरवइणा, सुरमज्झे वन्निअं ति ता खमसु । मज्झ तुमं भेसविओ, परिक्खणत्थं जमेवं ति ॥ १९ ॥ भुज्जो भुज्जो खामिअ, पणमिअ वीरं गओ स सोहम्मं । भयवं पि गेहे चिट्ठइ, विसिट्ठकीलाविणोएण ॥ २० ॥ बालत्तणे वि सूरो, पयईए गुरुपरक्कमो भयवं । वीर त्ति कयं नामं, सक्केणं तुट्ठचित्तेणं ॥ २१ ॥ इत्यामलकी क्रीडा ॥ अह तं अम्मापियरो, जाणित्ता अहिअअट्ठवासं तु । कयकोउअलंकारं, लेहायरिअस्स उवणिंति ॥ १ ॥ तत्र च मातापितरौ, मोहवशाद्विविधमुत्सवं कुरुतः । लग्नादिकव्यवस्थिति–पुरस्सरं परमसन्तुष्टा ॥ २ ॥ तथाहि–गजतुरगसमूहैः स्फारकेयूरहारैः, कनकघटितमुद्राकुण्डलैः कङ्कणाद्यैः । रुचिरतरदुकूलैः पञ्चवर्णैस्तदानीं, स्वजनमुखनरेन्द्राः सत्क्रियन्ते स्म भक्त्या ॥ ३ ॥ तथा–पण्डितयोग्यं नाना–वस्त्रालङ्कारनालिकेरादि । अथ लेखशालिकानां, दानार्थमने-

अष्टमतपसि कविघटना त्वेवं—"किं रत्नत्रयसेवनं किमथवा शल्यत्रयोन्मूलनं, किं वा चित्तवचोवपुःकृतमलप्रक्षालनं सर्वतः । किं जन्मत्रयपावनं किमभवत् विश्वत्रयाग्र्यं पदं, धन्यैर्यद् विहितं कलावपि जनैः पर्वोपवासत्रयम् ॥ १ ॥" इति श्रीकल्पकिरणावल्यां कल्पव्याख्यानप्रारम्भपद्धतिः ।

अथात्र कल्पाध्ययने त्रीणि वाच्यानि, तथाहि—जिनानां चरितानि १, स्थविरावली २, पर्युषणासामाचारी ३, चेति, उक्तञ्च—"पुरिमचरिमाणकप्पो मंगलं वद्धमाणतित्थंमि । इह परिकहिआ जिणगणहराइथेरावली चरित्तं १" व्याख्या—वर्षा पततु मा वा, पर्युषणा तावदवश्यं कर्तव्येति प्रथमचरमयोः ऋषभवीरयोस्तीर्थे कल्पः मङ्गलं च वर्धमानतीर्थे यस्मादेवं तस्मादिह परिकथितानि जिनानां चरितानि १ गणधरादिस्थविरावली २ चरित्रं ३ चेति, तत्रापि साम्प्रतीनतीर्थाधिपतित्वेन प्रत्यासन्नोपकारित्वादादावेव श्रीभद्रबाहुस्वामिपादास्तद्व्यतिकरावाप्तपञ्चकल्याणकनिबन्धबन्धुरं श्रीवीरचरित्रं सूत्रयन्त उद्देशनिर्देशसूचकप्रायं जघन्यमध्यमवाचनात्मकं प्रथमसूत्रमादिशन्ति—

ते णं काले णं ते णं समए णं समणे भगवं महावीरे पंच हत्थुत्तरे होत्था ॥ १ ॥

व्याख्या—ते णं कालेणमित्यादितः परिनिव्वुडे भयवमितिपर्यन्तम् । तत्र यत्तदोर्नित्याभिसम्बन्धात् यत्रासौ स्वामी दशमदेवलोकगतपुष्पोत्तरप्रवरविमानाद्देवानन्दाकुक्षाववातरदिति यच्छब्दघटितमन्वयमध्याहृत्य ते णं ति ते तस्मिन् णमिति वाक्यालङ्कारे, काले वर्त्तमानावसर्पिण्याश्चतुर्थारकलक्षणे णंकारः पूर्ववत्, अथवाऽऽर्षत्वात्सप्तम्यर्थे तृतीयामधिकृत्य तेणं कालेणं ति तस्मिन्काले, तेणं समए णं ति तस्मिन् समये, परं समयो, जीर्णशाटकस्फाटनदृष्टान्तेन प्राग्-

कल्याणवान् कल्याणकारी वा भद्रं ते भवत्विति शेषः । हिअसुहनिस्सेअसकरं ति हितं–पथ्यान्नवत्, सुखं-शर्म्म शुभं वा–कल्याणं निःश्रेयसं–मोक्षस्तत्करं, सर्वस्मिन् लोके ये सर्वजीवास्तेषाम् ॥ १११ ॥

पुव्विं पि णं समणस्स भगवओ महावीरस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आहोइए अप्पडिवाई नाणदंसणे हुत्था। ततेणं समणे भगवं महावीरे तेणं अणुत्तरेणं आहोइएणं नाणदंसणेणं अप्पणो निक्खमणकालं आभोएइ, आभोइत्ता चिच्चा हिरण्णं, चिच्चा सुवण्णं, चिच्चा धणं, चिच्चा रज्जं, चिच्चा रट्ठं, एवं बलं वाहणं कोसं कोट्ठागारं, चिच्चा पुरं, चिच्चा अंतेउरं, चिच्चा जणवयं, चिच्चा विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमाइअं संतसारसावइज्जं, विच्छड्डइत्ता विगोवइत्ता दाणं दायारेहिं परिभाइत्ता दाणं दाइयाणं परिभाइत्ता॥११२॥

व्याख्या—पुव्विं पि णमित्यादितः परिभाइत्त त्ति पर्यन्तम्, तत्र मनुष्योचिताद् गृहस्थधर्माद्विवाहादेः पूर्वमपि भगवतोऽनुत्तरं–अभ्यन्तरावधिसद्भावात् सर्वोत्कृष्टं, आभोगिकं-आभोगप्रयोजनं अप्रतिपाति–अनिवर्त्तकमाकेवलोत्पत्तेः अवधिज्ञानमवधिदर्शनं चासीत्, तच्च परमावधेः किञ्चिदूनं अहोहिए त्ति क्वचित् तत्राधोऽवधिः–अधः परिच्छेदबहुलोऽभ्यन्तरावधिरित्यर्थः, तथा च चूर्णिः–"अहोहिअत्ति-अब्भंतरोही" अत एव–"नेरइअदेवतित्थं–करा य ओहिस्स बाहिरा हुंति। पासंति सव्वओ खलु, सेसा देसेण पासंति ॥ १॥ त्ति" आभोगयति-विलोकयति, हिरण्यादि-

चामरेहिं, मणिकणगविचित्तदंडेहिं ॥ १ ॥ पुव्वं उक्खित्ता मा-णुसेहिँ आहट्टरोमकूवेहिं । पच्छा वहंति सीअं, असुरिंदसुरिंदनागिंदा ॥ २ ॥ चलचवलभूसणधरा, सच्छंदविउव्विआभरणधारी । देविंददाणविंदा, वहंति सीअं जिणिंदस्स ॥ ३ ॥ कुसुमाणि पंचवण्णा-णि मुअंता दुंदुही अ ताडंता। देवगणा य पहट्ठा, समंतओ उच्छुअं गयणं ॥ ४ ॥ अयसिवणसंडं व कुसुमिअं, पउमसरो वा जहा सरयकाले । सोहइ कुसुमभरेणं, इअ गयणयलं सुरगणेहिं ॥ ५ ॥ अयसिवणं व कुसुमिअं, कणिआरवणं व चंपगवणं वा । तिलगवणं व कुसुमिअं, इअ गयणयलं सुरगणेहिं ॥ ६ ॥ जाव य कुंडग्गामो, जाव य देवाण भवणआवासा । देवेहि अ देवीहि अ, अविरहिअं संचरंतेहिं ॥ ७ ॥ वरपडहभेरिझल्लरि-दुंदुहि संखसहिएहिं तूरेहिं। धरणियले गयणयले, तूरनिनाओ परमरम्मो ॥ ८ ॥ व्यवसायान् व्यापारांश्च, मुक्त्वा द्रष्टुं ययुर्नराः । स्त्रियो निजं निजं कर्म, त्यक्त्वाऽगुः कौतुकोत्सुकाः ॥ ९ ॥ श्रुत्वा वाद्यौघनिर्घोषं, स्त्रियोऽभूवन् सुविह्वलाः । यतः—"स्त्रीणां षट् वस्तूनि, प्रायस्त्वतिवल्लभानि सहजगुणात् । कलिकज्जलसिन्दूरं, तूरं दुग्धं च जामाता ॥ १ ॥" इति । चक्रुर्नानाविधाश्चेष्टाः, सर्वेषां विस्मयप्रदाः ॥ १० ॥ यथा—कस्तुर्या नयनयुगं, गण्डौ किल कज्जलेन काञ्चिकया । कण्ठं हारेण कटिं, करकमलं नूपुरेण तथा ॥ ११ ॥ कङ्कणकाभ्यां क्रमणौ, चलनतलं चन्दनद्रवैर्भव्यैः । सदलक्तरसेन वपु-र्विभूषयन्ति स्म विस्मयतः ॥ १२ ॥ तथा—ग्रहणं रुदतां पथि पर-बालानां निजकसम्भ्रमाच्चक्रुः । घाटपटीशाटकयो-र्विपरीततया च परिधानम् ॥ १३ ॥ शिथिलपरिधानबन्धम्, गाढं कर्त्तुं न शक्नुवत्यस्ताः । वातोड्डीनशिरोंऽशुक-वधूजनोऽजनि कुमारीव ॥ १४ ॥ काश्चित्कृतार्द्धतिलकाः, काश्चित्कर्णैक-

सूत्रं वक्तुं युक्तं, तथापि सूत्रकाराणां विचित्रा गतिरिति नाऽधृतिर्विधेया । यच्च कल्याणकबन्धबन्धुरे श्रीवीरचरित्रे "पंचहत्थुत्तरे होत्था" इत्यादावकल्याणकभूतस्यापि गर्भापहारस्योद्देशस्तद्देवानन्दाकुक्षाववतीर्णः प्रसूतवती च त्रिशलेति महत्यसङ्गतिस्तन्निवारणार्थं अवश्यं वक्तव्यत्वान्नक्षत्रसाम्याच्चावगन्तव्यम् । अत एव यत्र क्वापि श्रीवीरचरित्रं तत्र सर्वत्रापि 'पंचहत्थुत्तरे होत्था' इत्येवसूत्रं उक्तकारणस्य सर्वत्रापि सत्त्वात्, यत्र तु ऋषभचरित्रं तत्र क्वचिद्राज्याभिषेकस्यावश्यं वक्तव्यत्वाभावेन 'चउउत्तरासाढे त्ति' क्वचिच्च सूत्रान्तरे नक्षत्रसाम्यात् 'पञ्चउत्तरासाढे त्ति' न तत्र दोषः । ननु संदेहविषौषध्यां गर्भापहारस्य कल्याणकत्वेन व्याख्यानात् षट्कल्याणकनिबन्धबन्धुरं श्रीवीरचरित्रमिति कथं नोक्तमिति चेत्? नैवं, गर्भापहारस्य कल्याणकत्वेन क्वाप्यागमे व्याख्यानानुपलम्भात्, प्रत्युताचारादिभिर्विसंवादित्वेन प्रत्यक्षागमबाधाच्च, तथाहि—"पञ्चहत्थुत्तरे होत्थ त्ति" आचाराङ्गे, तट्टीका यथा—हस्त उत्तरो यासां उत्तरफाल्गुनीनां ता हस्तोत्तरास्ताश्च पञ्चसु स्थानेषु गर्भाधान–संहरण–जन्म–दीक्षा–ज्ञानोत्पत्तिलक्षणेषु संवृत्ताः, अतः पञ्चहस्तोत्तरो भगवानभूदित्यत्र पञ्चसु स्थानेषु इत्येव व्याख्यातम्, न पुनः कल्याणकेष्विति स्वयमेवालोच्यम् । तथा "इअते दिणा पसत्था ता सेसेहिं पि तासु कायव्वं । जिणजत्ताइ सहरिसं ते अ इमे वद्धमाणस्स ॥ १ ॥ आसाढसुद्धछट्ठी १ चित्ते तह सुद्धतेरसी २ चेव । मग्गसिरकिण्हदसमी ३ वेसाहे सुद्धदसमी ४ अ ॥ २ ॥ कत्तिअकिण्हे चरमा ५ गब्भाइदिणा जहक्कमं एते । हत्थुत्तरजोएणं चउरो तह साइणा चरमो ॥ ३ ॥" इति श्रीहरिभद्रसूरिकृतयात्रापञ्चाशके । श्रीअभयदेवसूरिकृततट्टीकादेशो यथा आषाढशुद्धषष्ठी–आषाढशुक्लपक्षषष्ठीतिथिरित्येकं दिनं १ एवं चैत्र-

तिक्रामतो भगवतः पृष्ठौ हस्तिस्कन्धारूढः सकोरिंटमाल्यदाम्ना ध्रियमाणेन छत्रेण चामराभ्या वीज्यमानश्चतुरङ्गिन्या सेनया परिकलितो नन्दिवर्द्धनो राजाऽनुगच्छति, यावत् ज्ञातखण्डवनेऽशोकवरपादपो वृक्षः ॥ ११५ ॥

उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगे अबीए मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ ११६ ॥

व्याख्या—उवागच्छित्तेत्यादितः पव्वइए त्ति पर्यन्तम्, तत्राशोकवरपादपस्याधः शिविकां-कूटाकाराच्छादितां जम्पानविशेषां भगवान् स्थिरीकारयति, कारयित्वा च शिविकातः प्रत्यवरोहति-अवतरतीत्यर्थः, स्वयमेवाभरणान्युन्मुञ्चति-अवतारयतीत्यर्थः, तच्चैवम्—"मौलेर्मौलिमपाकरोच्छ्रुतियुगात्सत्कुण्डले कण्ठतो, नैष्कं हारमुरःस्थलाच्च सहसैवांसद्वयादङ्गदे। पाणिभ्यां विपुले च वीरवलये मुद्रावलीमङ्गुली—वर्गाद् भारमिव प्रशान्तहृदयो वैराग्यरङ्गात्प्रभुः ॥१॥" इति। तानि चाभरणानि कुलमहत्तरिका हंसलक्षणेन पटशाटकेन प्रतीच्छति प्रतीच्छ्य च भगवन्तमवादीत्, इक्खागकुलसमुप्पन्ने सि णं तुमं जाया !, कासवगुत्ते सि णं तुमं जाया !, उदितोदितनायकुलनहयलमिअंकसिद्धत्थजच्चखत्तिअसुत्ते सि णं तुमं जाया !, जच्चखत्तिआणीए तिसलाए सुए सि णं तुमं जाया !, देवनरिंदपहिअकित्ती

अ भयवं दिव्वेहिं गोसीसाइएहिं चंदणेहिं चुण्णेहि अ पुप्फेहि अ वासेहि अ वासिअदेहो, निक्खमणभिसेएण य अहिसित्तो, विसेसेण इंदेहिं चंदणाइगंधेण वासिओ, तस्स पव्वइअस्स चत्तारि साहियमासे गंधो न फिडिओ, अओ से सुरहिगंधेण भमरा वहवे दूरओ वि पुप्फिए कुंदाइवणसंडे चइत्ता दिव्वेहिं गंधेहिं आगरिसिआ भगवओ देहमागम्म विंधंति। केइ मग्गओ गुमगुमायंता समुल्लिअंति, जया पुण न किंचिवि पाविंति तया आरुसिआ तुंडेहिं भिंदिऊण तयं खायंति । जे केइ अजिइंदिआ पुरिसा तेवि गंधे अग्घाइऊण गंधमुच्छिआ भयवंते सुगंधपुडिआइअं पत्थेंति, तुसिणीए अत्थमाणस्स पडिलोमे उवसग्गे करिंति, तहा इत्थिआओ वि भयवओ देहं सेअमलरहिअं निस्सासमुगंधसुहं अच्छीणि अ निसग्गेण चेव नीलुप्पलपलासोवमाणि दट्ठूण बहुविहमणुलोममुवसग्गं करिंति। तथापि भगवान् मेरुरिव निष्प्रकम्प एव। दिवसे मुहुत्तसेसे, कम्मारग्गामपवरमणुपत्तो। रयणीइ तत्थ सामी, पडिमाइ ट्ठिओ अ निक्कंपो ॥ १ ॥ गोवनिमित्तं सक्कस्स, आगमो वागरेइ देविंदो। कुल्लागबहुलछट्ठ—रस पारणे पयस वसुधारा ॥ २ ॥' गोपः सर्वदिनं हले वृषान् वाहयित्वा सायं स्वामिसमीपे तान् मुक्त्वा गोदोहाय गृहं गतः, ते तु चरितुं वने गताः, स चाऽऽगतोऽवीक्ष्य स्वामिनमपृच्छत्, अदत्तोत्तरः स्वामी न वेत्तीति रात्रौ वने विलोकते स परं नापश्यत्, रात्रिशेषे स्वयमेवागता वृषभाः, सोऽप्यागतः, दृष्ट्वा तान् स्वामिनं प्रति सेल्हकमुत्पाट्य धावितः, अवधेरागत्य शक्रेण शिक्षितः। तत्र—सक्को भणइ, 'भयवं! तुब्भं उवसग्गबहुलं अहं वारसवरिसाणि तुब्भं वेयावच्चं करेमि'। ताहे सामिणा भणिअं—'नो खलु! देविंदा! एवं भूअं ३ जन्नं

यत आह—"तत्र कृतचतुर्मासकानां श्रीजिनवल्लभवाचनाचार्य्याणामाश्विनमासस्य कृष्णपक्षत्रयोदश्यां श्रीमहावीरगर्भापहारकल्याणकं समागतम्, ततः श्राद्धानां पुरो भणितं जिनवल्लभगणिना भोः श्रावकाः! अद्य श्रीमहावीरस्य षष्ठं गर्भापहारकल्याणकं 'पञ्चहत्थुत्तरे होत्था साइणा परिनिव्वुडे भयवमिति' प्रकटाक्षरैरेव सिद्धान्ते प्रतिपादनात्। अन्यच्च, तथाविधं किमपि विधिचैत्यं नास्ति, ततोऽत्रैव चैत्यवासिचैत्ये गत्वा देवा वन्द्यन्ते, तदा शोभनं भवति। गुरुमुखकमलविनिर्गतवचनाराधकैः श्रावकैरुक्तं भगवन्! यद्युष्माकं सम्मतं तत्क्रियते, ततः सर्वे श्रावका निर्मलशरीरा, निर्मलवस्त्रा, गृहीतनिर्मलपूजोपकरणा गुरुणा सह देवगृहे गन्तुं प्रवृत्ताः, ततो देवगृहस्थितयाऽऽर्यिकया गुरुश्रावकसमुदायेनागच्छतो गुरून् दृष्ट्वा पृष्टम्, को विशेषोऽद्य? केनापि कथितम्, वीरगर्भापहारकल्याणककरणार्थमेते समागच्छन्ति। तया चिन्तितं पूर्वं केनापि न कृतमेतदेतेऽधुना करिष्यन्ति इति न युक्तम्। पश्चात्संयती देवगृहद्वारे पतित्वा स्थिता, द्वारप्रासान् प्रभूनवलोक्योक्तमेतया दुष्टचित्तया मया मृतया यदि प्रविशत, तादृगप्रीतिकं ज्ञात्वा निवर्त्य(वृत्य) स्वस्थानं गताः पूज्याः।" इत्यादि जिनदत्ताचार्यकृतगणधरसार्धशतकस्य वृत्तौ। तथा—"असहाएणावि विही, पसाहिओ जो न सेससूरीणं॥ लोअणपहे वि वच्चइ, वुच्चइ पुण जिणमयण्णूहि॥ १२२॥ त्ति।" गणधरसार्धशतके द्वाविंशतिशततमी गाथा, तद्वृत्तिर्यथा—"ततो येन भगवताऽसहायेनापि—एकाकिनापि परकीयसाहाय्यनिरपेक्षं, अपिः—विस्मये अतीवाश्चर्यमेतत्, विधिः—आगमोक्तः षष्ठकल्याणकरूपश्चैत्यादिविषयः पूर्वप्रदर्शितश्च, प्रकारः—प्रकर्षेणेदमित्थमेव भवति, योऽत्रार्थेऽसहिष्णुः स वावदीतु, इति स्कंधास्फालनपूर्वकं साधितः—

विले प्रक्षिप्य स्थितो, घृतविक्रायिकाभिर्भक्त्या घृतेन म्रक्षितः, पिपीलिकादिभिर्भृशं पीड्यमानः प्रभुदृष्टिसुधावृष्ट्या सिक्तः पक्षान्ते सहस्रारे ययौ, प्रभुरप्यन्यत्र विजहार । उत्तरवाचालायां च नागसेनः स्वामिनं क्षीरेण प्रतिलाभितवान् पञ्च दिव्यानि च, ततः श्वेताम्ब्यां प्रदेशी राजा स्वामिनो महिमां (मानं) कृतवान्, ततः सुरभिपुरं गच्छतः स्वामिनः पञ्चरथैर्नैयका गोत्रतो राजानो वन्दितवन्तः, ततः सुरभिपुरं गतः, तत्र गङ्गानदीसिद्धयात्रो नाविकस्तदा लोकेनावमारोहति कौशिकवासितं श्रुत्वा विद्वान् खेमिल उवाच–'मारणान्तं विघ्नं प्राप्स्यम्, परमेतन्मुनिप्रभावान्मोक्ष्यामहे' तदनन्तरं गङ्गोत्तारे नावारूढस्य प्रभोस्त्रिपृष्ठभवविदारितसिंहजीवसुदंष्ट्रसुरकृतदुर्वातविकुर्वणानौमज्जनाद्युपसर्गं कंबलशंबलनामानौ नागकुमारौ निवारितवन्तौ । तयोश्चोत्पत्तिरेवम्–'मथुराए नयरीए जिणदासो वाणिअओ सड्ढो, साधुदासी साविआ, दोहिं वि अभिगताणि परिमाणकडाणि, तेहिं चउप्पदस्स पच्चक्खाणं गहितं, ततो दिवसदेवसितं गोरसं गेह्णंति, तत्थ य एगगा आभीरी गोरसं गहाय आगता, साविआ भणति 'मा तुमं अन्नत्थ भमाहि, जत्तिअं आणेसि तत्तिअं गेह्णामि' एवं तासिं संगतं जातं, इमा वि गंधपुडिआइ देइ, इमा वि कुइआ दुद्धं दहिं वा देति, एवं तासिं दढं सोहितं जातं । अन्नया तासिं गोवाणं विवाहो जातो, ताहे आभीरी ताणि निमंतेति ताणि भणंति, 'अम्हे वाउलाणि न तरामो गंतुं, जं तत्थ जुज्जति भोअणे कडुगभंडादिवत्थाणि आभरणाणि धूअपुप्फगंधमल्लाणि वधूवरस्स तं तेहिं दिण्णं, तेहिं अतीव सोभावितं लोगेण य सिलाहिआणि, तेहिं तुट्ठेहिं दो तिवरिसा गोणपोतगा हट्ठसरीरा उवट्ठविआ कंबलसंबल त्ति नामेण ताणि णेच्छंति चला बंधिउं गताणि, ॥१

सकललोकप्रत्यक्षं प्रकाशितः । यो न शेषसूरीणां–अज्ञातसिद्धान्तरहस्यानामित्यर्थः लोचनपथेऽपि–दृष्टिमार्गेऽपि
आस्तां श्रुतिपथे व्रजति–याति, उच्यते पुनर्जिनमतज्ञैर्भगवत्प्रवचनवेदिभिरिति गाथार्थः ।" तथा "पूएइ मूलपडिमं
पि साविआ चिइनिवासिसम्मत्तं । गब्भापहारकल्लाणगंपि न हु होइ वीरस्स ॥१॥ त्ति ।" जिनदत्ताचार्यकृतोत्सूत्र-
पदोद्घाटनकुलके । इत्यादिवचोव्यञ्जितां श्रीहरिभद्रसूरिश्रीअभयदेवसूर्यादीनां पञ्चकल्याणकवादिनां क्वचिदज्ञानोद्भा-
वनेन क्वचिच्चोत्सूत्रभाषणेन हीलनां कुर्वन्, प्रागुक्तरीत्याऽऽर्यिकया निवार्यमाणोऽपि, निजमताविष्करणार्थं षष्ठं क-
ल्याणकं व्यवस्थापयंश्च कथमनाभोगवान् ? कथं वा तदपत्यमिति स्वयमेव रहस्यालोच्यम् । एतेन पञ्चकल्याणकवादिनां
प्रागुक्तानामनाभोगशंकापि व्युदस्ता, तदीयप्राचीनानां षट्कल्याणकविषयकभणितेरनुद्भावनात् । यत्तु "पञ्चहत्थुत्तरे
होत्था साइणा परिनिव्वुडे भयवं त्ति" भणितेरुद्भावनं तत्तु तदुद्भावयितुरेवानाघ्रातसिद्धान्तगन्धत्वाभिव्यञ्जकमु
क्तरीत्या मन्तव्यम् । ननु कल्याणकाधिकारप्रतिबद्धत्वात् शक्रजीतत्वाच्च कथं न तस्य कल्याणकत्वमिति मे मतिरिति
चेत् ? सत्यं, तर्हि—"उसभेणं अरहा कोसलिए पंचउत्तरासाढे अभिइछट्ठे होत्था । तं जहा–उत्तरासाढाहिं चुए
चइत्ता गब्भं वक्कंते १ उत्तरासाढाहिं जाए २ उत्तरासाढाहिं रायाभिसेअं पत्ते ३ उत्तरासाढाहिं मुण्डे भवित्ता
अगाराओ अणगारिअं पव्वइए ४ उत्तरासाढाहिं जाव समुप्पन्ने ५ अभिइणा परिनिव्वुडे ६ त्ति" श्रीजंबूद्वीपप्र-
ज्ञप्तिसूत्रे ऋषभराज्याभिषेकस्य कल्याणकाधिकारप्रतिबद्धत्वात् प्रथमतीर्थकृतराज्याभिषेकस्य च शक्रजीतत्वेन श्रीहा-
रिभद्र्यामावश्यकवृत्तावुक्तत्वाच्च अद्भुतपुण्यप्रकृतिजन्यस्य जन्मवदनाश्चर्यभूतस्य च श्रीऋषभराज्याभिषेकस्यापि कल्याण-

च्छिष्योऽस्मीति स्वामिनमाह । ततो द्वितीयपारणके पक्वान्नादिना नन्दस्तृतीये सर्वकामगुणितपरमान्नादिना
सुनन्दः स्वामिनं प्रतिलाभितवान् । ततश्चतुर्थमासक्षपणके कोल्लाकसन्निवेशं स्वामी प्राप्तः, तत्र बहुलनामा द्विजः
पायसं दत्तवान् दिव्यानि च । गोशालस्तु तन्त्वाकशालायां स्वामिनमनुपलभ्यान्तर्बहिश्च राजगृहे गवेषयन् स्वोप-
करणं द्विजेभ्यो दत्त्वा समुखं शिरो मुण्डयित्वा कोल्लाके भगवन्तं दृष्ट्वा त्वत्प्रव्रज्याऽस्तु ममेत्युक्तवान् । ततः स्वामी
सगोशालः सुवर्णखलग्रामं याति, अन्तरा च गोपैर्महास्थाल्यां पायसं पच्यमानमालोक्य गोशालः स्वामिनं
जगाद—'मा गम्यतां भुज्यतेऽत्र' सिद्धार्थेन च तद्भङ्गकथने गोपैः प्रयत्नरक्षिताऽपि पायसस्थाली भग्ना, ततो गोशा-
लेन 'यद् भाव्यं तद् भवत्येव' इति नियतिः स्वीकृता । ततः स्वामी ब्राह्मणग्राममगात्, तत्र नन्दोपनन्दभ्रातृद्वितय-
सम्बन्धिनौ द्वौ पाटकौ, स्वामी नन्दपाटके प्रविष्टः प्रतिलाभितश्च नन्देन, गोशालस्तु उपनन्दगृहे पर्युषितान्नदाना-
द्दुष्टो यद्यस्ति मे धर्माचार्यस्य तपस्तेजस्तदाऽस्य गृहं दह्यतामिति शशाप, तदनु तद् गृहं ददाह । पश्चात्प्रभुश्चम्पा-
यामुपागतः, तत्र द्विमासक्षपणेन वर्षावासमवसत्, चरमद्विमासपारणकं च चम्पाया बहिः कृत्वा कालाकस-
न्निवेशं गतः, स्थितश्च शून्यगृहे प्रतिमायां । गोशालेन तु तत्रैव सीहो ग्रामणीपुत्रो विद्युन्मतीदास्या सह क्रीडन्
हसितः कुट्टितश्च तेन, स्वामिनमाह—'अहमेकाक्येव कुट्टितः, यूयं किं न वारयत' सिद्धार्थः प्राह—'पुनरेवं ॥२
कुर्याः' ततः स्वामी पात्रालके प्राप्तः तस्थिवांश्च शून्यागारे, तत्र स्कन्दः स्वदास्या दन्तिलकया सममगात्, तत्रापि
तथैवाभवत् । ततः स्वामी कुमाराकं सन्निवेशं गत्वा चम्परमणीयोद्याने प्रतिमयाऽस्थात् । इतश्च श्रीपार्श्वशिष्यो

कत्वमतिव्रततिरुत्सूत्रवृक्षमारोहन्ती तावकीना केन पापात्मना मर्दिता? आह—आस्तां सिद्धान्तपक्षः, परं यथाऽनागमिक्यपि कालिकसूरिप्रवर्तिता चतुर्थी तदनुजानां प्रमाणम्, तथा तथाविधमपि प्रवचनपूजाभिवृद्धिबुद्ध्या सुविहिताग्रणीश्रीजिनवल्लभवाचनाचार्यप्रवर्तितं गर्भसंहरणमपि कल्याणकं तदनुजानां प्रमाणीभवत् केन निवारयितुं शक्यमिति चेत्? को निवारयिता? स्त्रीपूजानिषेधवदिदमप्यनागमिकं युज्यते एव। भवन्तः प्रमाणयन्ति न वेति चेत्? नैवेति ब्रूमः, यतो नहि वयं तदनुजा, न वा सोऽस्माकं पूर्वजः। न चैवं चतुर्थ्यामपि युक्तेः सामान्यम्, चतुर्थी तावत्तत्कालवर्त्तिसर्वसङ्घप्रमाणीकृतत्वेन तदनुकालवर्त्तिनापि सर्व्वसङ्घेन प्रमाणीकृता, अतस्तदन्तर्वर्त्तिनामस्माकं स पूर्वजो, वयं च तदनुजा इति। षष्ठं कल्याणकं तु त्वदीयव्यवस्थापितसमुदायेनैव प्रमाणीकृतम्, न पुनः परम्परायाततीर्थकृदाज्ञावर्त्तिसङ्घेनेति कुतस्त्यं तौल्यम्? त्वदीयसमुदायस्य च तीर्थकृदाज्ञावर्त्तित्वस्वीकारे श्रीहरिभद्रसूरिश्रीअभयदेवसूर्यादीनां पञ्चकल्याणकवादिनां तीर्थबाह्यता स्यात्, तच्च तवाप्यनभिमतम्, अतो भवानेव तथेति किं न विचारयसि? यच्चतुर्थ्या अनागमिकत्वमुक्तं तदप्ययुक्तम्, अनागमिकप्रवर्त्तने श्रीकालिकसूरेर्युगप्रधानत्वव्याहतेः। अनाभोगे च तत्कालवर्त्तिसङ्घनिवारणाऽभविष्यत्। न च तदानीन्तनसङ्घस्तदायत्तस्तं प्रति निवारयितुमशक्तः। तीर्थकृद्व्यवस्थापितः सङ्घस्तीर्थस्य तीर्थकृतो वा आज्ञातिक्रमे महान्तमपि पुरुषं निवारयत्येव। कथमन्यथा चतुर्दशपूर्वविदमपि श्रीभद्रबाहुस्वामिनं सङ्घाज्ञातिक्रमणे किं प्रायश्चित्तमितिवचसा प्रबोध्य मिथ्यादुष्कृतमदापयिष्यत्। आस्तां सङ्घः, सङ्घाज्ञावर्तिप्रक्करमपि मानुषं तीर्थकृदाज्ञातिक्रमणे निवारयति, यथा षष्ठकल्याणकव्यवस्थापकं त्वदीयं गुरुमार्यिका-

द्वारं चक्रे, आगतेन सिद्धार्थोक्ताप्रत्यये पायसवमने कृते नखवालादि दृष्ट्वा रुष्टेन तद् गृहं गवेपयताऽपि न दृष्टं, ततः स्वामितपसा पाटकोऽपि ज्वालितः । ततः स्वामी बहिर्हरिद्रसन्निवेशात् हरिद्रवृक्षस्याधोऽवतस्थे प्रतिमया, पथिकप्रज्वालिताग्निना प्रभोरनपसारणात्पादौ दग्धौ, गोशालो नष्टः । ततः स्वामी नङ्गलाग्रामे वासुदेवगृहे प्रतिमया स्थितः, तत्र गोशालो डिम्भभापनायाक्षिकर्षणमकार्षीत्, तत्पित्रादिभिः कुट्टितो मुनिपिशाच इत्युपेक्षितः । ततः स्वामी आवर्त्तग्रामे बलदेवगृहे प्रतिमया स्थितः, तत्र गोशालेन डिम्भभापनाय मुखत्रासो विहितः, तत्पित्रादीन् ग्रथिलोऽयं किमनेन हतेनास्य स्वाम्येव हन्यते इति विचिन्त्य स्वामिहननायोद्यतान् दृष्ट्वा बलदेवमूर्तिरेव बाहुना लाङ्गलमुत्पाट्योत्तस्थौ, ततः सर्वेऽपि स्वामिनं नतवन्तः । ततः स्वामी चौराकसन्निवेशं जगाम, तत्र मण्डपे भोज्यं पच्यमानं दृष्ट्वा गोशालः पुनः पुनर्न्यग्भूय वेलां विलोकयति स्म, ततश्चौरशङ्कया हतेन तेन रुष्टेन स्वामितपस्तेजसा मण्डपध्यापनाऽकारि । ततः स्वामी कलम्बुकासन्निवेशं गतः, तत्र मेघ–कालहस्तिनामानौ द्वौ भ्रातरौ, कालहस्तिना दृष्ट्वोपसर्गितो मेघेनोपलक्ष्य क्षमितः । ततः स्वामी क्लिष्टकर्म्मनिर्जरानिमित्तं लाटाविषयं प्राप, तत्र हीलनादयो घोरा उपसर्गा अध्यासिताः । ततः पूर्णकलशाख्येऽनार्यग्रामे स्वामिनो गच्छतोऽन्तरा द्वौ स्तेनावपशकुन इति विचिन्त्यासिमुत्पाट्य धावितौ ज्ञातवृत्तान्तवज्रिणा वज्रेणाहतौ । ततः स्वामी भद्रिकापुर्यां वर्षासु चातुर्मास्यं तपश्च कृतवान् । ततो बहिः पारयित्वा विहरन् कदलिसमागमग्रामं गतः, तत्र मङ्खलिर्दधिकूरभोजनं कुर्वन्नतृप्तो जनेन निर्भर्त्सितः, भगवतश्च प्रतिमा । ततः स्वामी तंबालग्रामं गतः, तत्र पार्श्वापत्यीयो बहुशिष्यपरिवृतो नन्दिषेण-

ऽपीति प्रागुक्तत्वद्भणितिरपि । यदुक्तं प्रवचनपूजाभिवृद्धिबुद्ध्येति तदप्यसारम्, जिनाज्ञातिक्रमेण स्वमतिविकल्पितस्य सुन्दरस्यापि सुन्दराभासत्वेन मिथ्यात्वप्रसक्त्याऽनर्थहेतुत्वात् । यदागमः—"अप्पागमो किलिस्सइ, जइ वि करेइ अइदुक्करं तु तवं । सुन्दरबुद्धीइ कयं, बहुअं पि न सुन्दरं होइ ॥१॥ त्ति ।" ननु भोः! "नो से कप्पइ तं रयणिं उवायणावित्तए त्ति" षष्ठीनिषेधवत् "तं च पुण्णिमाए पंचमीए दसमीए, एवमाइएसु पव्वेसु पज्जोसवेअव्वं, नो अपव्वेसु त्ति" निशीथचूर्ण्यादिवचनात्, चतुर्थ्या अपि निषेधात्, प्रवचनविरुद्धापि चतुर्थी राज्ञ उपरोधेन प्रवचनपूजाभिवृद्धिबुद्ध्यैव स्वीकृता, तत्र का गतिरिति चेत्? सत्यं, शृणु, युगप्रधानश्रीकालिकसूरिस्तीर्थसम्मतो न तीर्थकृतामाज्ञामतिक्रामति, तदतिक्रमे च युगप्रधानत्वादिव्याहतेरिति तवापि सम्मतम् । एवञ्च सति यथा साधुना सचित्तवनस्पत्यादिस्पर्शो न विधेयो, न सेव्या च योषित्, इति निषेधसाम्येऽपि गिरिनद्याद्युत्तारे वल्ल्याद्यवलम्बनं जिनाज्ञा न पुनर्योषित्सेवापि, तथा षष्ठीचतुर्थ्योर्दृश्यमाननिषेधसाम्येऽपि महदन्तरम् । यतः—श्रीकालिकसूरेरेव षष्ठी नाज्ञेति पर्यालोचनया चतुर्थीस्वीकारे कश्चिद्विशेषो वक्तव्यः, स च विशेषः पर्यालोच्यमान आज्ञाऽनाज्ञाभ्यामेव कृतः, नान्यः । तथा च षष्ठीनिषेधो निरपवादिकः, सापवादिकश्च चतुर्थ्या निषेधः, इति संपन्नं चतुर्थी जिनाज्ञेति । अन्यथा तत्कालवर्त्तिसर्वसङ्घसम्मता न प्रावर्त्तिष्यत, तत्कालवर्त्तिसर्वसङ्घसम्मतत्वञ्च तदनुकालवर्त्तिसर्वसङ्घसम्मतत्वान्यथानुपपत्त्या सूपपादमेव । अन्यथा पक्षद्वयानुवृत्त्या चूर्णिकारादयः "केइ सोहम्मावच्चिज्जा पञ्चमीए पज्जोसवेंति केइ पुण कालगावच्चिज्जा चउत्थीए अपव्वे पज्जोसवेंति त्ति" विकल्पोऽकथयिष्यन्, तच्च नोक्तम् ।

जितशत्रुपार्श्वोपनीतः सगोशालोऽस्थिकग्रामागतेनोत्पलेन मोचितः । ततः पुरिमतालशकटमुखोद्यानयोरन्तराले प्रतिमया तस्थौ, सभार्यो वग्गुरश्रेष्ठी चोद्यानस्थमल्लिजिनजीर्णायतनप्रतिमां नमस्कृतवान्, सन्तानाय नव्यायतनविधापनादिभिराराध च, जाते गर्भेऽन्यदा पूजार्थं व्रजन्नीशानेन्द्रवचसा प्रथमं स्वामिनमर्चति स्म, ततो मल्लिजिनायतने मल्लिप्रतिमां च । ततः स्वामी उन्नागसन्निवेशे याति, तत्रान्तरे गोशालेन सम्मुखागच्छद्दन्तुरवधूवरहसनं "तत्तिल्लो विहिराया, जणेइ दूरे वि जो जहिं वसइ । जं जस्स होइ जुग्गं, तं तस्स विइज्जयं देइ ॥ १ ॥" त्ति तैः कुट्टयित्वा वंशजाल्यां प्रक्षिप्तः स्वामिच्छत्रधरत्वान्मुक्तश्च । ततः स्वामी गोभूमिं याति, ततो राजगृहेऽष्टमवर्षामकरोत् चतुर्मासकतपश्च बहिः पारणकं च, ततो वज्रभूम्यां बहूपसर्गा इति कृत्वा नवमवर्षारात्रं स्वामी तत्र कृतवान्, चतुर्विधाहाररहितं चतुर्मासकमपरमासद्वयं च तत्रैव विहृत इति पाण्मासिकं तपोऽभूत्, वसत्यभावाच्च नवमवर्षारात्रमनियतमकार्षीत् । ततः सिद्धार्थपुरं गतः, ततः कूर्मग्रामं प्रस्थितः तत्रान्तरा तिलस्तम्भं दृष्ट्वा भगवन्नयं निष्पत्स्यते न वेति मङ्खलिर्बभाषे प्रश्नानन्तरं 'सप्तापि तिलपुष्पजीवा मृत्वा एकस्यां शम्ब्यां तिला भविष्यन्ति' इति भगवद्वचनान्यथाकृतिधिया तिलस्तम्भमुत्पाट्य मूलादुन्मूल्यैकान्ते मुमोच, मा प्रभुवचोऽन्यथा भूदिति सन्निहितव्यन्तरैर्वृष्टिश्चक्रे गोखुरेण च क्लिन्नभूमौ नित्यस्थिरीचक्रे, ततः प्रभुः कूर्मग्रामे आतापनाग्रहणे मुत्कलमुक्तजटामध्ययूकाबाहुल्यदर्शनाद्यूकाशय्यातरेतिकथनरुष्टवैश्यायनमुक्ततेजोलेश्यातः शीतलेश्यया गोशालं रक्षितपूर्वी सिद्धार्थपुरे व्रजन् गोशालेन 'स तिलस्तम्भो न निष्पन्न' इत्युक्ते 'स एष तिलस्तम्भो निष्पन्न' इति प्रत्याह, गोशालोऽश्रद्दधत् तिलशम्बां

किन्तु—"कहमियाणिं चउत्थीए अपवे पज्जोसविज्जइ" इति प्रभृत्येव, तथा च चतुर्थी न केवलं प्रवचनपूजाभिवृद्धिबुद्ध्यैव प्रवर्त्तिता, किन्तु जिनाज्ञापर्यालोचनयैव । यच्च षष्ठकल्याणकप्ररूपणाया आदिकर्तुः सुविहिताग्रणीत्वमुक्तं तच्च सुविहितानुजत्वमन्तरेणासम्भवि । यदागमः—"हंतूण सबमाणं, सीसो होऊण ताव सिक्खाहि । सीसस्स हुंति सीसा, न हुंति सीसा असीसस्स ॥ १ ॥ त्ति ।" तच्चास्य विचार्यमाणं विशीर्येत । चैत्यवासं परित्यज्य कस्यापि सुविहितस्य पार्श्वे चारित्रस्याऽग्रहात्, नवीनमतप्रवर्त्तनेन संघबाह्यत्वाच्च । न चैतद्वचनं रागद्वेषविलसितं, 'देशमाख्याति भाषितम्' इति वचनात्, तदीयभणितेरेवोपलम्भात् । कथमन्यथा स्वयमेव "सङ्घत्राकृतचैत्यकूटपतितस्यान्तस्तरां ताम्यतः, तन्मुद्राद्दढपाशबन्धनवतः शक्तस्य न स्पन्दितुम् । मुक्त्यै कल्पितदानशीलतपसोऽप्येतत्क्रमस्थायिनः, सङ्घव्याघ्रवशस्य जन्तुहरिणव्रातस्य मोक्षः कुतः ॥ १ ॥" इति सङ्घपट्टकसूत्रे त्रयस्त्रिंशत्तमकाव्येन तत्कालवर्त्तिसङ्घं व्याघ्रोपमयोपावर्णयिष्यत् । कथं वा तट्टीकायां ऐदंयुगीनसङ्घप्रवृत्तिपरिहारेण सङ्घबाह्यत्वप्रतिपादनममीषां भूषणं न तु दूषणमिति सङ्घबाह्यता तस्य व्याख्यास्यदिति । न चैवं यथार्थमपि स्वयमेव स्वोपघातकं कथमुक्तवान् इति चित्रं चिन्तनीयम् । मतिभ्रमेऽपि घुणाक्षरन्यायेन नानाश्चर्यात् कथमन्यथा गणनानुक्रमेण द्वितीयमपि गर्भापहारं भोः श्रावकाः ! अद्य श्रीमहावीरस्य षष्ठं गर्भापहारकल्याणकमिति वचश्चातुर्यात् केनाप्यप्रकाशितं पूर्वं मयैव प्रकाश्यत इत्यज्ञापयिष्यत् । किञ्च आस्तामन्यः, शतपद्यामपि औष्ट्रिकाचरणायाः कथं प्रामाण्यं ?, यतो जिनवल्लभेन सिद्धान्तविरुद्धमेव षष्ठं कल्याणकं व्यवस्थापितम्, जिनदत्तेन च स्त्रीपूजापलाप इत्याद्यर्थालापकवचोभिः शतपदीकारः

क्षत्रियेण क्रियमाणा उपसर्गाः प्रियपृच्छार्थमागतेन सनत्कुमारेण निवारिताः, ततो नन्दिग्रामे पितृसखा वन्दते, मिण्ढिकग्रामे गोपोपसर्गं शक्रो वित्रासनेन निवारितवान्, ततः कौशाम्ब्यां गतः तत्र शतानीकराजा, मृगावती देवी, विजयाप्रतीहारी, तथा वादी नाम धर्म्मपाठकः, सुगुप्तोऽमात्यः, तद्भार्या नन्दा, सा च श्राविका मृगावत्या वयस्या, स्वामिना तत्र पोषबहुलप्रतिपद्यभिग्रहो जगृहे, यथा—द्रव्यतः कुल्माषान् सूर्पकोणेन १, क्षेत्रतो देहल्या एकं पदमारतः एकं च परतः कृत्वा २, कालतो निवृत्तेषु भिक्षाचरेषु ३ भावतो राजसुता दासत्वमापन्ना निगडिता मुण्डितमस्तका रुदत्यष्टमभक्तिका चेत् दास्यति तदा गृहीष्यामीति ४ परीषहसहनार्थं स्वामिनोऽभिग्रहः, ततो गोचर्यां हिण्डन् पञ्चदिवसोनषण्मासोपवासी दैवयोगात् धनावहश्रेष्ठिभार्यां मूला गृहस्थितया चम्पेशदधिवाहननृपधारणीराज्ञीसुतया वसुमत्या चन्दनबालापरनाम्न्या स्वामी प्रतिलाभितः, कविश्चात्र—"चन्दना सा कथं नाम, बालेति प्रोच्यते बुधैः । मोक्षमादत्त कुल्माषै—र्महावीरं प्रतार्य या ॥ १ ॥" ततः पञ्चदिव्यानि-देवा ननृतुः १ केशाः शिरसि सञ्जाताः २ निगडानि च नूपुराणि ३ देवैश्च चन्दनशीतलत्वाच्चन्दनेति तस्या नामाकारि ४ लोभाद्राजानं वसुधारां गृह्णानं शक्रो निवार्य प्राह—'यस्येयं दास्यति तस्यैषा' ततः सा धनावहश्रेष्ठिनं स्वपितृतुल्यं समर्प्पयामास ५ शक्रः शतानीकं प्रत्युक्तवान् 'सङ्गोप्यैषा यावत्स्वामिनः केवलोत्पत्तिस्तदनन्तरं स्वामिनः प्रथमशिष्यणी भविष्यतीति । ततः सुमङ्गलग्रामे सनत्कुमारेन्द्रवन्दनं, वालुकग्रामे वायलवणिग्यात्रायां गच्छन् स्वामिनं दृष्ट्वाऽमङ्गलधियाऽसिना घाताय धावन् सिद्धार्थेन हतः, ततः स्वामी चम्पायां स्वातिदत्तद्विजस्याग्निहोत्रशालायां वर्षावासं तस्थौ, रात्रौ च

तथा च यत्र क्वापि पट्कल्याणकव्याख्यानमुपलभ्यते
पाल्लविकोऽपि तं कोपितवानित्यपि चित्रं चेतसि पर्यालोच्यम् । अन्यथा श्रीहरिभद्रसूर्यादीनां सम्मतेरकिञ्चित्करत्वे-
तद्यथासंभवं क्वचिदभिनिवेशात् क्वचिच्चानाभोगादवगन्तव्यम् । तदुच्छेदे तु तेषामप्युच्छेद एवेति विचिन्त्य, प्रव-
न मूलभङ्गापत्तिः, तस्मान्मूलाद्यखण्डनयैव स्कन्धादीनां कुशलता, तदुच्छेदे तु तेषामप्युच्छेद एवेति विचिन्त्य, प्रव-
चनाऽविसंवाद्येव वचः प्रमाणीकर्त्तव्यम् । अन्यथा यदि सर्वसम्मतानां श्रीहरिभद्रसूर्यादीनां वचोभिर्विसंवाद्यपि
वचः प्रमाणीस्यात्, तर्हि अस्माकमपि वचनं विसंवादिवचनेन विसंवाद्येव सत्सुतरां प्रमाणीभवत् केन प्रतिषेद्धुं शक्यम्,
इत्याद्यपि वावदूकवदनहृदप्रादुर्भूतप्रतिवन्दीनदीसन्तरणोपाये मूकतैवाश्रयणीया स्यादिति विचिन्त्य चतुरैर्न मूलसु-
न्मूलनीयम् । ननु यद्येवं तर्हि वीरेण भगवता पञ्चम्यां पर्युषितत्वेन चतुर्थ्याः स्वीकारे सुतरां मूलोन्मूलनमेवेति चेत्?
मैवम् । नहि वयं तीर्थकृत्कृत्यमनुसृत्य प्रवर्तामहे, किन्तु तीर्थकृतां तदनुकारिणां चागमविदामाज्ञामेव । अन्यथा
तीर्थकृदनुपात्तत्वेन रजोहरणाद्युपकरणमपि परिहरणीयं स्यात् । न स्याच्च श्रीस्थूलभद्रयोगीन्द्रमपेक्ष्य वेश्याजनोपा-
न्तोपवेशनमपि परिहरणीयमिति । आज्ञा च तथाकारार्हस्य युगप्रधानस्य श्रीकालिकसूरेर्वचोऽङ्गीकारेणैव यदागमः—
"कप्पाकप्पे परिनिट्ठिअस्स ठाणेसु पञ्चसु ठिअस्स । संजमतवड्ढगस्स उ, अविगप्पेणं तहक्कारो ॥ १ ॥ त्ति ।"
अन्यथाकरणे च प्रत्युत मूलोन्मूलनमेव । अथ "कारणिआ चउत्थि त्ति" वचनात् कारणिक्येव चतुर्थी, कारणं
तावत्कालकसूरेरेव तदानीं नेदानीमस्माकमपीति नास्माभिरङ्गीक्रियते इति चेत्? तर्हि "अण्णउत्थिअं वा गार-
त्थिअं वा पज्जोसवेति त्ति" निशीथसूत्रं तच्चूर्णिर्यथा—"गिहत्थाणं अन्नतित्थिआणं गिहत्थीणं अन्नतित्थिणीणं

व्याख्या—तस्स णं भगवंतस्स अणुत्तरेणं नाणेणमित्यादितो नाणदंसणे समुप्पन्ने इत्यन्तम्, तत्र ज्ञानेन—मत्यादिचतुष्टयेन, दर्शनेन—चक्षुर्दर्शनादिना सम्यक्त्वेन वा, चारित्रेण—महाव्रतादिना, आलयेन—स्त्र्याद्यसंसक्तवसत्यादिना, विहारेण—देशादिषु चङ्क्रमणादिना, वीर्येण—विशिष्टोत्साहेन, आर्जवेन—मायानिग्रहेण, मार्दवेन—माननिग्रहेण, लाघवेन—क्रियासु दक्षत्वेन, अथवा लाघवं—द्रव्यतोऽल्पोपधित्वं भावतो गौरवत्रयत्यागस्तेन, क्षान्त्या—क्रोधनिग्रहेण, मुक्त्या—निर्लोभतया, गुत्तीए इत्यपि क्वचित् तत्र गुप्त्या मनोगुप्त्यादिकया, तुष्ट्या—मनःप्रह्ल(स)त्या, 'सत्यसंयमतपः—सुचरितसोपचितफलनिर्वाणमार्गेण' सत्यं—सूनृतं, संयमः—प्राणिदया, तपो—द्वादशभेदं, तेषां सुष्टु—विधिवत् चरितं—आचरणं, उपचयनमुपचितं सहोपचितेन—उपचयेन वर्त्तते यत्तत् सोपचितं, सत्यसंयमतपःसुचरितेन सोपचितं—स्फीतं फलं मुक्तिलक्षणं यस्य स तथा स चासौ निर्वाणमार्गश्च—रत्नत्रयलक्षणस्तेन आत्मानं भावयतो—वासयतः अनेनात्मज्ञानमेव मोक्षस्य प्रधानं साधनमित्युक्तम्। दुवालससंवच्छराइं ति द्वादशसंवत्सरव्यतिक्रमणं त्वेवम्—"नव किर चाउम्मासे, छक्किर दो मासिए उवासीअ। बारस य मासिआइं, बावत्तरि अद्धमासाइं ॥ १ ॥ एगं किर छम्मासं, दो किर तेमासिए उवासीअ। अड्ढाइज्जाइ दुवे, दो चेव दिवड्ढमासाइं ॥ २ ॥ भद्दं च महाभद्दं, पडिमं तत्तो अ सव्वओभद्दं। दो चत्तारि दसेव य, दिवसेठासीअ अणुबद्धं ॥ ३ ॥ गोयरअभिग्गहजुयं, खमणं छम्मासियं च कासीय। पंचदिवसेहि ऊणं, अव्वहिओ वच्छनयरीए ॥ ४ ॥ दस दो य किर महप्पा, ठाइ मुणी एगराइयं पडिमं। अट्ठमभत्तेण जई इक्किक्कं चरमराईयं ॥ ५ ॥ दो चेव य छट्ठसए, अउणत्तीसे उवासिओ भयवं। न

उसन्नाणं संजईणं च पुरओ कप्पो न पढिअव्वो त्ति ॥" औत्सर्गिकवचनात्, सभासमक्षं कल्पसूत्रवाचनमपि पुत्रमरणार्त्तस्य ध्रुवसेननृपस्य समाधिहेतवे प्रवृत्तत्वेन कारणिकमेव तदपि परिहरणीयम् । नो चेच्चतुर्थ्या किमपराद्धं तव ? परं ज्ञायते तीर्थसम्मतयुगप्रधानप्रवर्त्तितत्वमेव तस्या महानेवापराधः, कथमन्यथा कारणिकत्वे समानेऽपि पङ्क्तिभेदः, तस्मादुभे अपि स्वीकर्त्तव्ये, परिहर्त्तव्ये चोभे अपीति । प्रतिबन्दीपाशपतितस्य तेऽन्यस्य मोक्षोपायस्यासम्भवेन परित्यज तीर्थानादृतत्वेन मृतमातृकल्पां पञ्चमीं, स्वीकुरु च तीर्थादृतत्वेनैव कल्पलताकल्पां चतुर्थीं जिनाज्ञात्वात् । एवमन्यमप्येवंविधपुरुषप्रवर्तितं जिनाज्ञा, न पुनः स्वगृह एव पण्डितंमन्येन येन केनचित् यत्किञ्चिदपीत्यलं विस्तरेण । यद्यपि विस्तरभीत्या एतावत्या अपि युक्तेरुद्भावनमसङ्गतमिवाभाति, तथापि कालानुभावात्प्रायो भूयाञ्जनो भूयस्यप्यन्तरे विद्यमानेऽप्यभेदमेव मन्यते, स एव तावदनया दिशा युक्तिलेशं निशम्य भेदं जानात्विति नासङ्गतिदोषः, किन्तु तदनुकम्पैवेति सुस्थम् । अथ प्रकृतमुच्यते—कथं पञ्चहस्तोत्तरो भगवानभूदिति व्यक्त्यर्थं तद्यथेत्यादिना मध्यमवाचनां निर्दिशति—

तं जहा हत्थुत्तराहिं चुए, चइत्ता गब्भं वक्कंते, हत्थुत्तराहिं गब्भाओ गब्भं साहरिए, हत्थुत्तराहिं जाए, हत्थुत्तराहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए, हत्थुत्तराहिं अणंते, अणुत्तरे, निव्वाघाए, निरावरणे, कसिणे, पडिपुन्ने, केवलवरनाणदंसणे समुप्पन्ने, साइणा परिनिव्वुए भयवं ॥ १ ॥

भागी तं तं कालं मणवयणकायजोगे वट्टमाणाणं सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरइ ॥ १२१ ॥

व्याख्या—तएणं समणे भगवं महावीरे अरहेत्यादेर्जाणमाणे पासमाणे विहरइ त्ति पर्यन्तम्, तत्र अर्हन्–अशोकादिमहापूजार्हत्वात् अरिहेत्यादि क्वचित् तत्रारीन् रागादीन् हन्तीत्यादि पूर्ववच्च जाए जातः–सम्पन्नः जिनो–रागादिजेता केवलानि–परिपूर्णानि शुद्धान्यनन्तानि वा ज्ञानादीनि विद्यन्ते यस्यासौ केवली अत एव सर्वज्ञ–एकस्मिन् समये विशेषावबोधवान्, सर्वदर्शी–द्वितीयसमये सामान्यावबोधवान्, सदेवमनुजासुरस्य लोकस्य पर्यायं जातावेकवचनमिति पर्यायानुत्पादव्ययलक्षणान् जानाति ज्ञानेन पश्यति च दर्शनेन, न च पर्यायानित्येवोक्ते द्रव्यं न जानातीति शङ्कावकाशः, उत्पादव्यययोर्निराधारयोरनुपपत्तेस्तयोर्ज्ञाने तदविष्वग्भावेन वर्त्तमानमन्वयिद्रव्यमपि ज्ञातमेव, अत एवाह–सर्वलोकवर्त्तिनां सर्वजीवानां आगतिं–यतः स्थानादागच्छन्ति जीवा विवक्षितमास्पदं, गतिं–यत्र मृत्वोत्पद्यन्ते, स्थितिं–कायभवस्थितिभेदेन द्विविधामपि, च्यवनं–देवलोकान्मनुष्यतिर्यक्ष्ववतरणं, उपपादं–देवनारकाणां जन्म, तेषां जीवानामिदं तत्कं–तदीयं, मनः–चित्तं, मानसिकं–चित्तगतं चिन्तारूपापन्नपुद्गलजातं, यद्यपि मनो मनोगतयोर्नास्ति वास्तवो भेदस्तथापि व्यवहारनयानुसरणादस्त्येव भेदस्तथा च वक्तारो भवन्ति ममेदं मनसि वर्त्तते इति, भुक्तमशनपुष्पादि, कृतं चौर्यादि, प्रतिसेवितं प्रतिषेवितं वा मैथुनादि, आविष्कर्म प्रकटकृतं, रहःकर्म प्रच्छन्नकृतं जानाति पश्यति चेति 'डमरुकमणि'न्यायेनात्रापि सम्बध्यते । अरहा प्राग्वत्, अरहस्सभागी–न रह-

व्याख्या—'हत्थुत्तराहिं त्ति' हस्तोत्तराभिरुत्तरफाल्गुनीभिश्चन्द्रयोगे च्युतो देवभवात्, च्युत्वा च गर्भं व्युत्क्रान्तः—उत्पन्नः, गर्भात् गर्भं 'साहारिए त्ति' संक्रामितः 'जाए त्ति' जातो—योनिवर्त्मना निर्गतः 'मुंडे त्ति' मुण्डो बाह्यतः केशलुञ्चनेन अभ्यन्तरस्तु कषायेन्द्रियमनोनिग्रहेणेति द्रव्यभावाभ्यां मुण्डितो भूत्वा, अगारात्—विश्लेषे पञ्चमीति गृहवासं परित्यज्य, अनगारितां—साधुतां प्रव्रजितः—स्वीकृतवान् साधुस्वरूपमापन्न इत्यर्थः। 'अणंते त्ति' अनन्तार्थविषयत्वादनन्तं, सर्वोत्कृष्टत्वादनुत्तरं, कटकुट्यादिभिरप्रतिहतत्वात् निर्व्याघातम्, क्षायिकभावोत्पन्नत्वेन सर्वावरणापगमान्निरावरणम्, अनन्तपर्यायोपेतभूतभवद्भविष्यदशेषविशेषसामान्यात्मकवस्तूनां सर्वतः सर्वथा प्रकाशकत्वेन कृत्स्नार्थग्राहकत्वात्कृत्स्नं, पूर्णिमामृगाङ्कमण्डलमिव सकलस्वांशयुक्तत्वात्प्रतिपूर्णं, एवंविधमपि केवलं—असहायं स्वविषयप्रकाशने नान्यसजातीयमपेक्षत इत्यर्थः, अत एव वरं-प्रधानं न पुनः श्रुतज्ञानवदुपकारकत्वेन ज्ञानञ्च दर्शनञ्च ज्ञानदर्शनं ततः प्राक्पदाभ्यां कर्मधारयः सर्वत्र प्राकृतत्वात् पुंस्त्वनिर्देशः। ननु अनन्तमनुत्तरमित्यादिविशेषणैरुभयोरपि निर्विशेषत्वेनोक्तत्वात् यदेव ज्ञानं तदेव दर्शनमिति पर्यायवाचित्वापन्नयोर्द्वयोर्ग्रहणमयुक्तमिति चेत्? मैवं, समानविषयत्वेऽपि ज्ञानं तावत्प्रधानविशेषोपसर्जनीकृतसामान्यार्थः ग्रहणलक्षणम्, दर्शनं पुनः प्रधानसामान्योपसर्जनीकृतविशेषार्थग्रहणलक्षणमिति, विशेषस्य विद्यमानत्वात्। को भावः—ज्ञानं तावत् स्वविषयं प्रकाशयदशेषविशेषान् प्रधानभावेन प्रकाशयति, यावत्सामान्यानि तु गौणभावेन। दर्शनं तु यावत्सामान्यानि प्राधान्येनाशेषविशेषांश्च गौण्येनेति। 'समुप्पण्णे त्ति' सं—सम्यगुत्पन्नं—समुत्पन्नं सर्वथा तदावरणापगमात्सर्वतः—सर्वांशैः प्रादुर्भूतमित्यर्थः, न

अहो ! सुराः कथं भ्रान्ताः ?, तीर्थाम्भ इव वायसाः । कमलाकरवद्भेका, मक्षिकाश्चन्दनं यथा ॥ १२ ॥ करभा इव सद्वृक्षान्, क्षीरान्नं शूकरा इव । अर्कस्याऽऽलोकवद् घूका–स्त्यक्त्वा यागं प्रयान्ति यत् ॥ १३ ॥ युग्मम् ॥ अहवा जारिसओ चिअ, सो नाणी तारिसा सुरा तेवि । अणुसरिसो संजोगो, गामनडाणं च मुक्खाणं ॥ १४ ॥ स्वगतम्– व्योम्नि सूर्यद्वयं किं स्यात्, गुहायां केसरिद्वयम् । खड्गौ द्वौ वा प्रतीकारे, किं सर्वज्ञावहं स च ॥ १५ ॥ किन्त्वैन्द्रजालिकः कोऽपि, कलाशाली विदेशजः । सर्वज्ञाटोपमात्रेण, जनस्वर्गिप्रतारकः ॥ १६ ॥ सोऽवादीद् भो! जनाः कीदृक्, सर्वज्ञोऽसौ निगद्यते ? । जनैरूचे स्वरूपं को, वक्तुं नामाऽस्य शक्नुयात् ॥ १७ ॥ स दध्यौ तर्ह्यसौ नूनं, मायायाः कुलमन्दिरम् । कथं लोकः समस्तोऽपि, विभ्रमे पातितोऽधुना ॥ १८ ॥ न क्षमे क्षणमात्रं तु, तं सर्वज्ञं कदाचन । तमःस्तोममपाकर्त्तुं, सूर्यो नैव प्रतीक्षते ॥ १९ ॥ वैश्वानरः करस्पर्शं, मृगेन्द्रः श्वापदस्वनम् । क्षत्रियाश्च रिपुक्षेत्रं, न सहन्ते कदाचन ॥ २० ॥ मया हि येन वादीन्द्रा–स्तूष्णीं संस्थापिताः सभे । गेहेशूरतरः क्वासौ, सर्वज्ञो मत्पुरो भवेत् ॥ २१ ॥ शैला येनाग्निना दग्धाः, पुरः के तस्य पादपाः । उत्पाटिता गजा येन, का वायोस्तस्य पुञ्जिकाः ॥ २२ ॥ अग्निभूतिरुवाचैवं, भ्रातः! कस्तेऽत्र विक्रमः । कीटिकायां कथं पक्षि–राट् करोति पराक्रमम् ॥ २३ ॥ पद्मस्योत्पाटने हस्ती, कुठारः काशकर्त्तने । मृगस्य मारणे सिंहः, सद्भिः किं क्वापि शस्यते ॥ २४ ॥ गौतमो भ्रातरं प्राह–भो अद्याप्यवतिष्ठते । वायसौ विहिते मुद्ग–पाके कङ्कटुको यथा ॥ २५ ॥ पीलयतस्तिलः कश्चिद्, दलतश्च यथा कणः । सूडयतस्तृणं किञ्चि–दग्रतः पिबतः सरः ॥ २६ ॥ मर्दयतस्तुषः कोऽपि, तद्वदेष

पुनः क्षायोपशमिकमत्यादिवदभ्यासवशात्प्रवर्धमानं न वाऽसदेवोत्पन्नं 'नासतो जायते भावः' इतिवचनात्, आत्मना सहानादिसिद्धत्वात् । 'साइणा त्ति' स्वातिनक्षत्रेण युक्ते चन्द्रे परि-सामस्त्येन निर्वृतः-सकलकर्मांशैर्विमुक्त इत्यर्थः १ ।

अथ विस्तरवाचनामधिकृत्य यतश्च्युतो भगवान् यत्र चोत्पन्न इति नामग्राहं निभणिपुराह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे तस्स णं आसाढसुद्धस्स छट्ठी पक्खे णं महाविजयपुप्फुत्तरपवरपुण्डरीआओ महाविमाणाओ वीसं सागरोवमट्ठिइआओ आउक्खएणं भवक्खएणं ठिइक्खएणं अणंतरं चयं, चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे इमीसे ओसप्पिणीए सुसमसुसमाए समाए विइक्कंताए, सुसमाए समाए विइक्कंताए, सुसमदुस्समाए समाए विइक्कंताए, दुस्समसुसमाए समाए बहुविइक्कंताए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणिआए पंचहत्तरीए वासेहिं अद्धनवमेहि अ मासेहिं सेसेहिं इक्कवीसाए तित्थयरेहिं इक्खागकुलसमुप्पन्नेहिं कासवगुत्तेहिं दोहिअ हरिवंसकुलसमुप्पन्नेहिं गोयमगुत्तेहिं तेवीसाए तित्थयरेहिं वइक्कंतेहिं समणे भगवं महावीरे चरमतित्थयरे पुव्वतित्थयरनिद्दिट्ठे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए

श्रावणादिद्वादशमासनामानि, नन्दिवर्द्धनः पक्षः, अग्गिवेस त्ति तद्दिनस्य नाम उवसमि त्ति इशब्दोऽलङ्कारे उपशम इत्यपि नामेत्यर्थः यतः—'पूर्वाङ्गसिद्धः १ मनोरमो २ मनोहरो ३ यशोभद्रो ४ यशोधरः ५ सर्वकामसमृद्धः ६ इन्द्रो ७ मूर्द्धाभिषिक्तः ८ सोमनो ९ धनञ्जयो १० ऽर्थसिद्धो ११ ऽभिजातो १२ ऽत्याशनः १३ शतञ्जयो १४ ऽग्निवेश्मे १५ ति' पञ्चदशादिननामानि, देवानन्दा नाम सा अमावास्या रजनी यतः—'उत्तमा १ सुनक्षत्रा २ इलापत्या ३ यशोधरा ४ सौमनसी ५ श्रीसम्भूता ६ विजया ७ वैजयन्ती ८ जयन्ती ९ अपराजिता १० इच्छा ११ समाहारा १२ तेजा १३ अभितेजा १४ देवानन्दा १५ चेति' पञ्चदशरात्रिनामानि निर्ऋतिरित्यप्युच्यते, यस्मिन् लवे भगवान् सिद्धः स लवोऽर्चाख्यः, स च प्राणापानो मुहूर्त्तो नाप, स च स्तोकः सिद्धनामा, करणं नागाख्यं शकुन्यादिषु तृतीयममावास्योत्तरार्द्धभावि, स च मुहूर्त्तः सर्वार्थसिद्धनामा यतः—'रुद्रः १ श्रेयान् २ मित्रं ३ वायुः ४ सुप्रीतो ५ ऽभिचन्द्रो ६ माहेन्द्रो ७ बलवान् ८ ब्रह्मा ९ बहुसत्य १० ऐशान ११ स्त्वष्टा १२ भावितात्मा १३ वैश्रवणो १४ वारुण १५ आनन्दो १६ विजयो १७ विजयसेनः १८ प्राजापत्य १९ उपशमो २० गन्धर्वो २१ अग्निवैश्यः २२ शतवृषभः २३ आतपवान् २४ अर्थवान् २५ ऋणवान् २६ भौमो २७ वृषभः २८ सर्वार्थसिद्धो २९ राक्षस ३० श्चेति' त्रिंशन्मुहूर्त्तनामानि । शेषं सुगमम् ॥ १२४ ॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे सा णं रयणी बहूहिं देवेहिं देवीहि य ओवयमाणेहि य उप्पयमाणेहि य उज्जोविया याविहुत्था ॥ १२५ ॥

च 'पसरइ मिच्छत्ततमं, गज्जंति कुतित्थकोसिआ अज्ज । दुब्भिक्खडमरवेराइं, निसिअरा हुंति सप्पसरा ॥१॥ अत्थमिए जह सूरे, मउलेइ तुमंमि संघकमलवणं । उल्लसइ कुमयतारा–निअरो वि हु अज्ज जिणवीर! ॥ २ ॥ तमगसिअससिं व नहं, विज्झायपईवयं च निसि भवणं । भरहमिणं गयसोहं, जायमणाहं च पहु अज्ज ॥ ३ ॥' तथा—हा हा हा वीर! किं कृतं यदीदृशेऽवसरेऽहं दूरीकृतः । किमाडकं मण्डयित्वा बालकवत्तवाञ्चलेऽलगिष्यं? किं केवलभागममार्गयिष्यं ? किं त्वयि कृत्रिममना अभवं ?, किं मुक्तौ सङ्कीर्णं? किं तवाणक्खकारकोऽभवं?, किं वा तव भारोऽभवं, हा वीर ! कथं विस्मारितोऽहं? कस्याग्रे सन्देहान् प्रक्ष्ये ? हा वीर ! विरहं कुर्वाणेन महान् विरामः कृतः, कस्याग्रे कथयामि? वीर वीर इति वी वी तस्य लग्नाऽभवत्, हुं हुं ज्ञातं वीतरागा निःस्नेहा भवन्ति, धिग् मां येन निर्वाणसमये श्रुतोपयोगोऽपि न ददे, धिग् ममैकपाक्षिकं स्नेहम्, अलं स्नेहेन, एकोऽस्मि, नास्ति कश्चन मम, एवं सम्यक् साम्यं भावयतः तस्य केवलमुत्पेदे । "मुक्खमग्गपवण्णाणं, सिणेहो वज्जसिंखला । वीरे जीवंतए जाओ, गोअमो जं न केवली ॥ १ ॥" प्रातरिन्द्राद्यैर्महिमा कृतः, "अहङ्कारोऽपि बोधाय, रागोऽपि गुरुभक्तये । विपादः केवलायाभूत्, चित्रं श्रीगौतमप्रभोः ॥ १ ॥" द्वादश वर्षाणि केवलिपर्यायं परिपाल्य दीर्घायुरिति कृत्वा सुधर्मस्वामिनो गणं समर्प्य मोक्षं ययौ। सुधर्मस्वामिनोऽपि पश्चात्केवलोत्पत्तिः, सोऽप्यष्टौ वर्षाणि केवलितया विहृत्याऽऽर्यजम्बूस्वामिनो गणं समर्प्य सिद्धिं गतः ॥ १२७ ॥

**जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे तं रयणिं च णं**

र्थरकसमासिरिति । 'दोहिअ त्ति' मुनिसुव्रतनेम्योः सर्वत्रात्र तृतीया सप्तम्यर्थे यावत् 'विइक्कंतेहिं ति' । कोडालैः समानं गोत्रं यस्य स तथा तस्य, जालंधरैः समानं गोत्रं यस्याः सा तथा तस्याः, पूर्वरात्रश्चासावपररात्रश्च स एव काललक्षणः समयो न त्वन्यः समाचारादिरूप इति पूर्वरात्रापररात्रकालसमयस्तत्र मध्यरात्रे इत्यर्थः । इह चार्षत्वादेकरेफलोपः, अथवाऽयमपरात्रशब्दस्तथा च 'अर्द्धगते सर्वं गतं' इति न्यायादपगता रात्रिरपरात्रः क्वचित् तु 'अड्ढरत्तावरत्ते त्ति' पाठस्तत्रार्धरात्रलक्षणो योऽपररात्रस्तत्र 'हत्थुत्तराहिं ति' बहुवचनं बहुकल्याणकापेक्षं च्यवनादिकल्याणकचतुष्टयस्य उत्तरफल्गुनीजातत्वात् यद्वा 'फल्गुनी प्रोष्ठपदस्य भेद' इति सूत्रेण फल्गुनीशब्दस्य बहुवचनान्तताऽपि । यत्तु सन्देहविषौषधीकारः प्रथमसूत्र एव 'पंचहत्थुत्तरे त्ति' पदं व्याख्यानयन् समासकरणेन बहुवचनमुद्भाव्य बहुवचनं बहुकल्याणकापेक्षमित्युक्तवान् तद्गर्भसंहरणस्यापि कल्याणकत्वं सिध्यतु इति स्वमतानुरागेणैव बोध्यम् । कथमन्यथा व्याख्येयसूत्राऽभावेऽपि तदुद्भावयेत्, टिप्पनककारेणाप्यत्रैव सूत्रे व्याख्येयसूत्रसद्भावेन तदुद्भावितमिति । 'जोगमुवागएणं ति' अर्थाच्चन्द्रेण सहेत्यर्थः, 'आहारवक्कंतीए त्ति' आहारापक्रान्त्या-देवाहारपरित्यागेनाऽथवाऽऽहारव्युत्क्रान्त्या-अपूर्वाऽऽहारोत्पादनेन मनुष्योचिताऽऽहारग्रहणेनेत्यर्थः, एवमन्यदपि पदद्वयं व्याख्येयं । 'कुच्छिंसि त्ति' कुक्षौ गर्भतया व्युत्क्रान्तः-उत्पन्न इति ॥ २ ॥

समणे भगवं महावीरे तिन्नाणोवगए आविहोत्था, चइस्सामि त्ति जाणइ, चयमाणे न या-

मित्यर्थः, किमाहुर्भदन्ता—गुरवः, किं कारणमनुद्धर्युत्पत्तौ भक्तप्रत्याख्याने वा इति शिष्येण पृष्टे गुरुराह—अद्यप्रभृति संयमो दुराराध्यो भविष्यतीति, जीवकुलाकुलितत्वात् पृथिव्याः संयमप्रायोग्यक्षेत्राभावात् पाखण्डिकादिसङ्कराच्च ॥ १३३ ॥

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स इंदभूइपामुक्खाओ चउद्दस समणसाहस्सीओ उक्कोसिया समणसंपया हुत्था ॥ १३४ ॥

व्याख्या—तेणं कालेणमित्यादितो हुत्थ त्ति पर्यन्तम्, तत्र साहस्सीओ त्ति आर्षत्वात् स्त्रीत्वम् ॥ १३४ ॥

समणस्स भगवओ महावीरस्स अज्जचंदणापामोक्खाओ छत्तीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १३५ ॥

व्याख्या—समणस्सेत्यादितः अज्जिआसंपया हुत्थ त्ति पर्यन्तम् प्रतीतार्थम् ॥ १३५ ॥

समणस्स णं भगवओ महावीरस्स संखसयगपामोक्खाणं समणोवासगाणं एगा सयसाहस्सीओ अउणट्ठिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १३६ ॥

व्याख्या—समणस्सेत्यादितः समणोवासगाणं संपया हुत्थ त्ति पर्यन्तं प्रतीतम् ॥ १३६ ॥

णइ, चुएमि त्ति जाणइ, जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसयुत्ताए कुच्छिंसि गब्भत्ताए वक्ते तं रयणिं च णं सा देवाणंदा माहणी सयणिज्ञंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा ॥ ३ ॥

व्याख्या—समणेत्यादितः पडिबुद्धेत्यन्तं सम्बन्धः, तत्र 'चइस्सामि त्ति' यद्यपि देवानां षण्मासावशेषायुषां "माल्य-
म्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः। दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टेर्भ्रान्तिर्वेपथुश्चारतिश्च ॥१॥"
इति भावा भवन्ति, तथापि तीर्थकृत्सुराः पुण्यप्रकर्षाद्विज्ञानकान्त्यादिप्रकर्षभाजो भवन्तीति, च्यवनं भविष्यत्कालं
जानाति, च्यवमानस्तु न जानाति च्यवनस्यैकसामयिकत्वेन तज्ज्ञानागम्यत्वाज्जघन्यतोऽपि छाद्मस्थिकज्ञानोपयोगस्या-
न्तर्मुहूर्त्तिकत्वात् च्यवनकालं भगवान् न जानातीति, च्युतस्तु जानाति च्युतोऽस्मीति पूर्वभवायातज्ञानत्रिकसद्भावा-
दिति 'जं रयणिं ति' यस्यां रजन्यां सुत्तजागर त्ति सुप्तजागरा—नातिसुप्ता नातिजाग्रती अत एव 'ओहीरमाणी
ओहीरमाणी' पुनः पुनः ईषन्निद्रां गच्छन्ती 'इमे' इत्यादि, इमान् महास्वप्नानिति विशेषणविशेष्यभावसम्बन्धः, एत-
देव—व्यावर्णितमेव रूपं—स्वरूपं न न्यूनमधिकं वा कविकृतं येषां ते तथा तान् उदारान्—प्रशस्तान् कल्याणान्—
कल्याणानां शुभसमृद्धिविशेषाणां हेतुत्वादथवा कल्यं—नीरोगतामणंति—गमयंतीति तान् शिवानुपद्रवोपशामकत्वात्

व्याख्या—समणस्सेत्यादित ओहिणाणीणं संपया हुत्थ त्ति पर्यन्तम् तत्र अतिशेषा—अतिशया आमर्षौषध्यादयस्तान् प्रासानाम् ॥ १३९ ॥

समणस्स णं भगवओ महावीरस्स सत्त सया केवलनाणीणं संभिन्नवरनाणदंसणधराणं उक्कोसिया केवलनाणीणं संपया हुत्था ॥ १४० ॥

व्याख्या—समणस्सेत्यादितः केवलणाणीणं संपया हुत्थ त्ति यावत् तत्र सम्यग्भिन्ने—पृथक्समयभाविनी वरज्ञानदर्शने धरन्तीति अथवा सम्भिन्ने—परिपूर्णे, केचित्तु सिद्धसेनदिवाकरमतमङ्गीकृत्य संभिन्नेत्ति युगपदिति व्याख्यान्ति तदयुक्तं विशेषणवतीकारेण तन्मतस्य शतशः शकलीकृतत्वात् ॥ १४० ॥

समणस्स भगवओ महावीरस्स सत्त सया वेउव्वीणं अदेवाणं देविड्ढिपत्ताणं उक्कोसिया वेउव्विअसंपया हुत्था ॥ १४१ ॥

व्याख्या—समणस्सेत्यादितो वेउव्विअसंपया हुत्थ त्ति पर्यन्तं प्रतीतम् ॥ १४१ ॥

समणस्स भगवओ महावीरस्स पंच सया विउलमइणं अड्ढाइज्जेसु दीवेसु दोसु य समुद्देसु संनीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं उक्कोसिया विउलमईणं संपया हुत्था ॥ १४२ ॥

धन्यान् धनावहत्वात् मङ्गल्यान् मङ्गले दुरितोपशमे साधुत्वात् सश्रीकान्—सशोभान् दृष्ट्वा प्रतिबुद्धा—जागरिता ॥३॥

तं जहा—गय-वसह-सीह-अभिसेय-दाम-ससि-दिणयरं-झयं-कुंभं। पउमसर-सागर-विमाण-भवण-
रयणुच्चय-सिहिं च ॥ १ ॥ ४ ॥

व्याख्या—तं जहेत्यादितः सिहिं चेत्यनेन सम्बन्धः, तत्र गजवृषभसिंहाः प्रतीताः, अभिषेकः श्रियाः सम्बन्धी, दाम-कुसुममाला, ध्वजकुम्भौ प्रतीतौ, पद्मोपलक्षितं सरः पद्मसरः, सागरः—समुद्रः, विमानं—देवसम्बन्धि, भवनं—प्रासादः, रत्नोच्चयो—रत्नभृतं स्थालं, शिखी—निर्धूमाग्निः, यो देवलोकादवतरति तन्माता विमानं पश्यति, यस्तु श्रेणिकादिवन्नरकादवतरति तन्माता भवनं पश्यतीति द्वयोरेकतरदर्शनाच्चतुर्दशैव स्वप्नाः । यद्वा विमानमेव भवनमिति व्युत्पत्त्या विमानावतीर्णतीर्थकृन्माता विमानभवनं पश्यति, वर्णादिभिरतिशोभनत्वेन विमानमिव विमानसदृशं भवनमिति व्युत्पत्त्या च नरकावतीर्णतीर्थकृन्माता इति, एवेवशब्दाभ्यां तत्पुरुषसमासकरणे नाधिक्यशङ्काऽपि । यद्यप्येते वक्ष्यमाणवर्णकविशिष्टास्त्रिशलावद्देवानन्दयाऽपि दृष्टास्तथापि तथाविधफलाभावान्नात्र गणधरैर्विस्तरतो व्यावर्णिता इति ॥ ४ ॥

तएणं सा देवाणंदा माहणी इमे एयारूवे उराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा समाणी हट्ठतुट्ठचित्तमाणंदिआ पीइमणा परमसोमण-

येषां, एवं स्थिति-र्देवायूरूपा कल्याणी-उत्कृष्टा येषां, अथवा गतौ-मनुष्यगतौ कल्याणं येषां, स्थितौ-देवभवेऽपि कल्याणं येषां वीतरागप्रायत्वात्, अत एवागमिष्यद्भद्राणां-आगामिभवे सेत्स्यमानत्वात्, अथवा गतौ-प्राणगमनेऽपि, स्थितौ-जीवितेऽपि कल्याणं येषां 'तवनियमसुट्ठिआणं' इत्याद्युक्तेः अभयकुमारादिवत् ॥ १४५ ॥

समणस्स णं भगवओ महावीरस्स दुविहा अंतगडभूमी हुत्था तं जहा जुगंतकडभूमी य परियायंतकडभूमी य जाव तच्चाओ पुरिसजुगाओ जुगंतकडभूमी चउवासपरियाए अंतमकासी१४६

व्याख्या—समणस्स णमित्यादितो अंतमकासीति पर्यन्तम्, तत्र अन्तकृतो-भवान्तकृतो निर्वाणयायिनस्तेषां भूमिः-कालः युगानि-कालमानविशेषास्तानि च क्रमवर्त्तीनि तत्साधर्म्याद्ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपास्तेऽपि युगानि तैः प्रमिता अन्तकृद्भूमिर्या सा युगान्तकृद्भूमिः, पर्यायः-तीर्थकरस्य केवलित्वकालस्तमाश्रित्यान्तकृद्भूमिः पर्यायान्तकृद्भूमिः, जाव तच्चाओ पुरिसजुगाओ त्ति अत्र पञ्चमी द्वितीयार्थे यावत्तृतीयं पुरुष एव युगं पुरुषयुगं-प्रशिष्यं जम्बूस्वामिनं यावदित्यर्थः, वीरादारभ्य तृतीयपुरुषयुगं यावत्साधवः सिद्धाः श्रीवीरः सुधर्म्मा जम्बूश्चेति, ततः सिद्धिगतिच्छेदः चउवासपरिआए त्ति चतुर्वर्षपर्याये केवलिपर्यायापेक्षया भगवति जिने सति अन्तं-भवान्तमकार्षीत्, तत्तीर्थे केवली सन्नपि साधुर्नारात् कश्चिन्मोक्षं गतः, किन्तु भगवतः केवलोत्पत्तेश्चतुर्षु वर्षेषु गतेषु सिद्धिगमनारम्भः ॥ १४६ ॥

धुभिः सहिता मोक्षं जग्मुः तथेति, अत्र कविः—"यन्न कश्चन मुनिस्त्वया समं, मुक्तिमैयरितरैर्जिनैरिव । दुःपमासमयभाविलिङ्गिनां, व्यञ्जि तेन गुरुनिर्व्यपेक्षता ॥ १ ॥" पच्चूस त्ति प्रत्यूपकाललक्षणो यः समयो—ऽवसरः तत्र स-ङ्गतः पर्यङ्कः—पद्मासनं तेन निपण्ण—उपविष्टः उपविष्टजिनप्रतिमेवेत्यर्थः, पञ्चपञ्चाशदध्ययनानि कल्याणफलविपाकानि पञ्चपञ्चाशदध्ययनानि पापफलविपाकानि षट्त्रिंशदपृष्टव्याकरणानि व्याकृत्य—कथयित्वा प्रधानं नामाध्ययनं मरुदेवाध्ययनं विभावयन् श्रीवीरः कालगतो यावत् सर्वदुःखप्रहीणः ॥ १४७ ॥

**समणस्स भगवओ महावीरस्स जाव सव्वदुक्खप्पहीणस्स नववाससयाइं विइक्कताइं दस-मसस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ । वायणंतरे पुण अयं तेणउए संवच्छरे काले गच्छइ इति दीसइ ॥ १४८ ॥**

व्याख्या—समणस्सेत्यादित दीसइ त्ति पर्यन्तम्, तत्रेतः सूत्रादारभ्यान्तरालकालाभिधायकसूत्रेषु सर्वत्र षष्ठ्याः पञ्चम्यर्थत्वेन निर्वाणादित्यध्याहारेण वा व्याख्येयम्, ततश्च श्रीमहावीरस्य निर्वाणान्नववर्षशतानि व्यतिक्रान्तानि—व्यतीतानि दशमस्य वर्षशतस्यास्या वाचनाया इति टिप्पनकवचनादस्याः पुस्तकवाचनाया अयमशीतितमः संवत्सरः कालो गच्छतीत्यक्षरार्थः, भावार्थस्तु यद्यपि तथाविधार्थावबोधकव्यक्तवाक्यानुपलम्भात् विवृत्य वक्तुमशक्यः, तथापि ग्रन्थान्तरानुगतयुक्त्या किञ्चिदुच्यते । तथा हि—एतत्सूत्रं श्रीदेवर्द्धिगणिक्ष-

क्याभावेन, अचपलं–कायतः, असम्भ्रान्तया–अस्खलन्त्या 'अविलंबिआए त्ति' क्वचित्तत्राविलम्बितया–अविच्छिन्नया, रायहंसेत्यादि राजहंसगतिसदृशया गत्या, जएणमित्यादि तत्र जयः—परैरनभिभूयमानता प्रतापवृद्धिश्च, विजयः–परेषामसहमानानामभिभवः, यद्वा जयः–स्वदेशे विजयः–परदेशे, आश्वस्ता–गतिजनितश्रमाभावात्, विश्वस्ता–सङ्क्षोभाभावादनुत्सुका, सुहासणेत्यादि सुखेन सुखं शुभं वाऽऽसनवरं गता या सा, करयलेत्यादि करतलाभ्यां परिगृहीतमात्रं शिरस्यावर्त्त–आवर्त्तनं प्रादक्षिण्येन भ्रमणं यस्य स तथा तं, शिरसाऽप्रासमित्यन्ये, दशनखमञ्जलिं–मुकुलितकमलाकारं मस्तके कृत्वा एवमवादीत् ॥ ५ ॥

एवं खलु अहं देवाणुप्पिआ अज्ज सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एआरूवे उराले जाव सस्सिरीए चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा ॥ ६ ॥

व्याख्या—'एवं खलित्यादितो पडिबुद्धेति' यावत् पूर्ववत् ॥ ६ ॥

तं जहा गय जाव सिहिं च ॥ ७ ॥

व्याख्या—तं जहेत्यादितो गाथा पूर्ववत् ॥ ७ ॥

एएसि णं देवाणुप्पिआ उरालाणं जाव चउद्दसण्हं महासुमिणाणं के मण्णे कल्लाणे फलवित्तिविसेसे भविस्सइ ? तएणं से उसभदत्ते माहणे देवाणंदाए माहणीए अंतिए एअमट्ठं

प्रधानत्वमापन्नः, स्वभगिन्याः सरस्वतीनाम्न्याश्च साध्व्या उपद्रवोपशमननिमित्तं प्रवचनमालिन्यप्रक्षालननिमित्तं च गर्द्दभिल्लोच्छेदकारी, बलमित्रभानुमित्रनाम्नोश्च स्वभागिनेययोर्भागिनेयस्य बलभानोः प्रव्राजनादिहेतुकाप्रीतिवशान्निर्गतः श्रीकालकसूरिः प्रतिष्ठानपुरं प्राप्तः, तत्र सालवाहननृपोपरोधेन पञ्चमीतश्चतुर्थ्यां पर्युषणापर्व व्यवस्थापितवान् । एकदा च श्रीसीमन्धरजिनप्रशंसातश्चमत्कृतचेतसा शक्रेण निगोदविचारस्वायुःप्रश्नव्याकरणसन्तुष्टेनाभ्यर्चित इत्यादिव्यतिकरेण व्यावर्णितः । तथा प्रभावकचरित्र एव पादलिप्ताचार्यसम्बन्धे—"तत्रास्ति बलमित्राख्यो, राजा बलभिदा समः । कालकाचार्यजामेयः, सर्वश्रेयःश्रियां निधिः ॥ १ ॥ भवाध्वनीनभव्यानां, सन्ति विश्रामभूमयः । तत्रार्यखपुटानाम, सूरयो विद्ययोदिताः ॥ २ ॥ श्रीवीरमुक्तितः शतचतुष्टये चतुरशीति ४८४ संयुक्ते । वर्षाणां समजायत, स श्रीमानार्यखपुटगुरुः ॥ ३ ॥" इत्यादिव्यतिकरेण श्रीखपुटाचार्यकालकाचार्यभागिनेयबलमित्रभानुमित्रादयः सर्वेऽप्येककालीना उक्ताः । तथा श्रीपर्युषणाकल्पचूर्णिनिशीथचूर्ण्योर्बलमित्रभानुमित्रभागिनेयोपलक्षितः श्रीपर्युषणापर्वानेता श्रीकालकसूरिरुक्तः, तथा च गर्द्दभिल्लोच्छेदकारी पूर्वोक्ताचार्यराजसमानकालीनश्च पर्युषणानेता श्रीकालकसूरिः कथं त्रिनवतियुतनवशत ९९३ वर्षातिक्रमे सम्भवतीति सम्यक्पर्यालोच्यम् । किञ्च सन्देहविषौषध्यां—"तेणउअनवसएहिं, समइक्कंतेहिं वद्धमाणाओ । पज्जोसवणचउत्थी, कालगसूरीहिंतो ठविआ ॥१॥ वीसहिँ दिणेहिँ कप्पो, पंचगहाणीइ कप्पठवणा य । नवसयतेणउएहिं, वुच्छिन्ना संघआणाए ॥ २ ॥ सालाहणेण रण्णा, संघाएसेण कारिओ भयवं । पज्जोसवणचउत्थी, चाउम्मासं चउदसीए

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पाणयाओ कप्पाओ वीसंसागरोवमट्ठिइआओ अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे भारहे वासे वाणारसीनयरीए आससेणस्स रन्नो वामाए देवीए पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए ७०० भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते ॥१५०॥

व्याख्या—तेणं कालेणमित्यादितः कुच्छिंसि गब्भत्ताए वक्कंते त्ति पर्यन्तं सुगमम् ॥ १५० ॥

पासे णं अरहा पुरिसादाणीए तिण्णाणोवगए आविहुत्था, तं जहा—चइस्सामि त्ति जाणइ, चयमाणे न जाणइ, चुएमि त्ति जाणइ, तेणं चेव अभिलावेणं सुविणदंसणविहाणेणं सव्वं जाव नियगं गिहं अणुपविट्ठा[1] जाव सुहंसुहेणं तं गब्भं परिवहइ ॥ १५१ ॥

व्याख्या—पासेणमित्यादितस्तं गब्भं परिवहइ त्ति पर्यन्तं सुगमम् ॥ १५१ ॥

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से हेमंताणं दुच्चे मासे तच्चे पक्खे

१ अणुपविसइ २ त्ता ॥ प्र०

लपाणिपायं अहीणपडिपुण्णपंचिंदिअसरीरं लक्खणवंजणगुणोववेअं माणुम्माणपमाणपडिपुन्नसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पिअदंसणं सुरूवं दारयं पयाहिसि ॥ ९ ॥

व्याख्या—उरालाणमित्यादितो दारयं पयाहिसि त्ति यावत्, तत्र आरुग्गेत्यादि आरोग्यं–नीरोगित्वं तुष्टिः–सन्तोषः दीर्घायुः–चिरजीविता अर्थलाभ इत्यादिषु भविष्यति इति शेषो दृश्यः, एवंरूपात्–उक्तफलसाधनसमर्थात् स्वप्ना दारकं प्रजनिष्यसीति सम्बन्धः, सोपसर्गत्वात्सकर्म्मको जनिधातुरिति 'बहुपडिपुण्णाणं ति' षष्ठ्याः सप्तम्यर्थत्वात् प्रतिपूर्णेषु अर्द्धमष्टमं येषु तान्यर्द्धाष्टमानि तेषु रात्रिंदिवेषु अहोरात्रेषु व्यतिक्रान्तेषु अहीणेत्यादि अहीनानि–अन्यूनानि लक्षणतः, प्रतिपूर्णानि स्वरूपतः पञ्चापीन्द्रियाणि यस्मिंस्तत्तथाविधं शरीरं–देहं यस्य स तथा तं लक्षणानि—छत्रचामरादीनि, तत्र चक्रवर्त्तितीर्थकृतामष्टोत्तरसहस्रं, बलदेववासुदेवानामष्टोत्तरशतं, तदितरेषां तु प्रचुरभाग्यभाजां द्वात्रिंशत् तानि चेमानि—

"छत्रं १ तामरसं २ धनू ३ रथवरो ४ दंभोलि ५ कूर्म्मौ ६ कुशा ७, वापी ८ स्वस्तिक ९ तोरणानि १० च सरः ११ पञ्चाननः १२ पादपः १३। चक्रं १४ शङ्ख १५ गजौ १६ समुद्र १७ कलशौ १८ प्रासाद १९ मत्स्या २० यवाः २१, यूप २२ स्तूप २३ कमण्डलू २४ न्यवनिभृत् २५ सचामरो २६ दर्प्पणः २७ ॥ १ ॥ उक्षा २८ पताका २९ कमलाभिषेकः ३०, सुदाम ३१ केकी ३२ घनपुण्यभाजां" इति षट्पदी, अथवाऽपरलक्षणानि द्वा-

कश्चित्पृष्टवान्, स आह 'रोरद्विजसुतः कृपया लोकैर्जीवितः कमठनामा, ऽन्येद्यू रत्नाद्यलङ्कृतेश्वरान् वीक्ष्य प्राग्जन्मतपसः फलमिति तपस्वी जातः, पञ्चाग्न्यादितपस्तपन् कन्दमूलादिभोजनः, सोऽयं पुर्यां(या)बहिरागतस्तमर्चितुं पौरजना व्रजन्तः सन्ति' स्वाम्यपि कौतुकमिपात्सपरिच्छदस्तं द्रष्टुं ययौ, दृष्ट्वा च दह्यमानं महोरगं करुणाम्भोधिर्भगवानाह—'अहो ! अज्ञानमज्ञानं यत्तपस्यप्यस्य दया नास्ति, अहो ! तपस्विन् ! मूढतया त्वं धर्मस्य तत्त्वं न वेत्सि, महारम्भरतः किं दयां विना वृथा कष्टं करोपि' ? यतः—"कृपानदीमहातीरे सर्वे धर्मास्तृणाङ्कुराः । तस्यां शोपमुपेतायां कियन्नन्दन्ति ते पुनः ॥ १ ॥" इत्याकर्ण्य कमठोऽवोचत् 'राजपुत्रा हि गजाश्वादिक्रीडां कर्त्तुं जानन्ति, धर्मं तु तपोधना वयमेव जानीमः' ततः स्वामिनाऽग्निकुण्डात् काष्ठमाकृष्य कुठारेण द्वैधीकृत्य च तापविह्वलः पन्नगो निष्काशितः, स च भगवन्नियुक्तपुरुषमुखान्नमस्कारान् प्रत्याख्यानं च निशम्य तत्क्षणादेव विपद्य च धरणेन्द्रोऽभवत्, अहो ज्ञानवान् भगवानिति जनैः स्तूयमानः स्वगृहं ययौ स्वामी, कमठस्तु मृत्वा मेघकुमारेषु मेघमाली देवो जातः ॥ १५४ ॥

पासे णं अरहा पुरिसादाणीए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए, तीसं वासाइं अगारवासमज्झे वसित्ता पुणरवि लोयंतिएहिं जियकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव एवं वयासी ॥ १५५ ॥

व्याख्या—पासेणमित्यादित एवं वयासीति पर्यन्तं प्राग्वत् ॥ १५५ ॥

त्रिंशदिमानि—"इह भवति सप्त रक्तः ७, षडुन्नतः ६ पञ्च सूक्ष्म ५ दीर्घश्च ५। त्रिविपुल ३ लघु ३ गम्भीरो ३, द्वात्रिंशल्लक्षणः स पुमान् ॥ १ ॥ नख १ चरण २ पाणि ३ रसना ४–दशनच्छद ५ तालु ६ लोचनान्तेषु ७। स्याद्यो रक्तः सप्तसु, सप्ताङ्गां स लभते लक्ष्मीम् ॥ २ ॥ पट्टं कक्षा १ वक्षः २–कृकाटिका ३ नासिका ४ नखा५ऽऽस्य६ मिति। यस्येदमुन्नतं स्यादुन्नतयस्तस्य जायन्ते ॥ ३ ॥ दन्त १ त्वक् २ केशा ३ ङ्गुलि–पर्व ४ नखं ५ चेति पञ्च सूक्ष्माणि। धनलक्ष्माण्येतानि, प्रभवन्ति प्रायशः पुंसां ॥ ४ ॥ नयन १ कुचान्तर २ नासा ३–हनु ४ भुज ५ मिति यस्य पञ्चकं दीर्घम्। दीर्घायुर्वित्तपरः, पराक्रमी जायते स नरः ॥ ५ ॥ भाल १ मुरो २ वदन ३ मिति, त्रितयं भूमीश्वरस्य विपुलं स्यात्। ग्रीवा १ जङ्घा २ मेहन ३ मिति त्रयं लघु महीशस्य ॥ ६ ॥ यस्य स्वरो१ऽथ नाभिः २, सत्त्व ३ मितीदं त्रयं गभीरं स्यात्। सप्ताम्बुधिकाञ्चेरपि, भूमेः स करग्रहं कुरुते ॥ ७ ॥

इयं च प्रागुक्ता सङ्ख्या बाह्यलक्षणविषयाऽवगन्तव्या, अभ्यन्तरलक्षणानि पुनरनेकानि, यदुक्तं निशीथचूर्णौ "पागयमणुआणं बत्तीसं लक्खणाणि, अट्ठसयं बलदेववासुदेवाणं, अट्ठसहस्सं चक्कवट्टितित्थयराणं। जे फुडा हत्थ-पायाइसु लक्खिज्जंति तेसिं पमाणं भणिअं ति, जे पुण स्वभावसत्त्वादयः तेहिं सह बहुतरा भवन्तीति" तथाहि—

"मुखमर्द्धं शरीरस्य, सर्वं वा मुखमुच्यते। ततोऽपि नासिका श्रेष्ठा, नासिकायास्तु लोचने ॥ १ ॥ यथा नेत्रे तथा शीलं, यथा नासा तथाऽऽर्जवम्। यथा रूपं तथा वित्तं, यथा शीलं तथा गुणाः ॥ २ ॥ गतेः प्रशस्यते वर्ण–स्ततः स्नेहोऽमुतः स्वरः। अतस्तेज इतः सत्त्व–मिदं द्वात्रिंशतोऽधिकम् ॥ ३ ॥ सात्त्विकः सुकृती दानी, राजसो

उप्पिं उज्जितसेलसिहरंसि पंचहिं छत्तीसेहिं अणगारसएहिं सद्धिं मासिएणं भत्तेणं अपाणएणं चित्ता नक्खत्तेणं जोगमुवागएणं पुव्वरत्तावरत्तकालसमयंसि नेसज्जिए कालगए (ग्रं८००) जाव सव्वदुक्खप्पहीणे ॥ १८२ ॥

व्याख्या—तेणं कालेणमित्यादितः सव्वदुक्खप्पहीणे त्ति यावत्, तत्र पञ्चहिं छत्तीसेहिं ति षट्त्रिंशदधिकैः पञ्चशतैः नेसज्जिए त्ति निषण्णः ॥ १८२ ॥

अरहओ णं अरिट्ठनेमिस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स चउरासीइं वाससहस्साइं विइक्कंताइं पंचासीइमस्स वाससहस्सस्स नव वाससयाइं विइक्कंताइं दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८३ ॥

व्याख्या—अरहओ णं अरिट्ठनेमिस्सेत्यादितः काले गच्छइ त्ति यावत् पाठसिद्धं व्याख्या च प्राग्वत् ॥ १८३ ॥

इति श्रीनेमिचरित्रम् ॥ अतः परं ग्रन्थगौरवभयान्नम्यादीनां पश्चानुपूर्व्याऽजितान्तानामन्तरकालमानमेवाह—

नमिस्स णं अरहओ कालगयस्स जाव सव्वदुक्खप्पहीणस्स पंच वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ २१ ॥ १८४ ॥

विषयी भ्रमी । तामसः पातकी लोभी, सात्त्विकोऽमीषु सत्तमः ॥ ४ ॥ यः सात्त्विकस्तस्य दया स्थिरत्वं, सत्यं ध्रुवं देवगुरुप्रभक्तः । सत्त्वाधिकः काव्यशतक्रतुश्च, स्त्रीसक्तचित्तः पुरुषेषु शूरः ॥ ५ ॥ अतिह्रस्वेऽतिदीर्घेऽतिस्थूले चातिकृशे तथा । अतिकृष्णे च गौरे च, षट्सु सत्त्वं निगद्यते ॥ ६ ॥ सद्धर्म्मः सुभगो नीरुक्, सुस्वप्नः सुनयः कविः । सूचयत्यात्मनः श्रीमान्, नरः स्वर्गगमागमौ ॥ ७ ॥ निर्दम्भः सदयो दानी, दान्तो दक्षः सदा ऋजुः । मर्त्त्ययोनेः समुद्भूतो, भविता च पुनः पुमान् ॥ ८ ॥ मायालोभक्षुधालस्य–बह्वाहारादिचेष्टितैः । तिर्यग्योनिसमुत्पत्तिं, ख्यापयत्यात्मनः पुमान् ॥ ९ ॥ सरागः स्वजनद्वेषी, दुर्भगो मूर्खसङ्गकृत् । शास्ति स्वस्य गतायातं, नरो नरकवर्त्मनि ॥ १० ॥ नासिकानेत्रदन्तौष्ठ–करकर्णांह्रिणा नराः । समाः समेन विज्ञेया, विषमा विषमेन तु ॥ ११ ॥ अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु । गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥ १२ ॥ आवर्त्तो दक्षिणे भागे, दक्षिणः शुभकृन्नृणाम् । वामो वामेऽतिनिन्द्यः स्याद्, दिगन्यत्वे तु मध्यमः ॥ १३ ॥ अकर्म्मकठिनः पाणि–र्दक्षिणो वीक्ष्यते नृणाम् । वामभ्रुवां पुनर्वामः सुप्रशस्योऽतिकोमलः ॥ १४ ॥ पाणेस्तलेन शोणेन, धनी नीलेन मद्यपः । पीतेनागम्यनारीगः, कल्मषेण धनोज्झितः ॥ १५ ॥ दातोन्नते तले पाणे–र्निम्ने पितृधनोज्झितः । धनी संवृतनिम्ने स्या-द्विषमे निर्द्धनः पुमान् ॥ १६ ॥ अरेखं बहुरेखं वा, येषां पाणितलं नृणाम् । ते स्युरल्पायुषो निःस्वा, दुःखिता नात्र संशयः ॥ १७ ॥ दीर्घनिर्मांसपर्वाणः, सूक्ष्मा दीर्घाः सुकोमलाः । सुघनाः सरला वृत्ताः, स्त्रीणामङ्गुलयः श्रिये ॥ १८ ॥ अनामिकान्त्यरेखायाः, कनिष्ठा स्याद्यदाऽधिका । धनवृद्धिस्तदा पुंसां, मातृपक्षो बहु-

पउमप्पहस्स णं अरहओ जावप्पहीणस्स दस सागरोवमकोडिसहस्सा विइक्कंता तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं सेसं जहा सीअलस्स ६ ॥ १९९ ॥

व्याख्या—श्रीपद्मप्रभनिर्वाणात्सागरकोटीनां नवभिः सहस्रैः श्रीसुपार्श्वनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनैककोटिसहस्रसागरैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ६ ॥१९९॥

सुमइस्स णं अरहओ जावप्पहीणस्स एगे सागरोवमकोडिसयसहस्से विइक्कंते सेसं जहा सीयलस्स तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं ५ ॥ २०० ॥

व्याख्या—श्रीसुमतिनिर्वाणात् सागरकोटीनां नवत्या सहस्रैः श्रीपद्मप्रभनिर्वाणं ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनैर्दशभिः सागरकोटिसहस्रैः श्रीवीरनिर्वाणं,ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ५॥२००॥

अभिनंदणस्स णं अरहओ जावप्पहीणस्स दस सागरोवमकोडिसयसहस्सा विइक्कंता सेसं जहा सीयलस्स तिवासअद्धनवमासाहियबायालीससहस्सेहि य इच्चाइयं ४ ॥ २०१ ॥

व्याख्या—श्रीअभिनन्दननिर्वाणात्सागरकोटीनां नवभिर्लक्षैः श्रीसुमतिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनेनैककोटिसागरलक्षेण श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ४॥२०१॥

संभवस्स णं अरहओ जावप्पहीणस्स वीसं सागरोवमकोडिसयसहस्सा विइक्कंता सेसं जहा सीयलस्स तिवासअद्धनवमासाहियबायालीसवाससहस्सेहि य इच्चाइयं ३ ॥ २०२ ॥

लेखे द्वे यान्ति तिस्रोऽपि, तर्जन्यङ्गुष्ठकान्तरे ॥ २० ॥
स्तथा ॥ १९ ॥ मणिबन्धात्पितुर्लेखा, करभाद्विभवायुषोः । उल्लङ्घयन्ते च
येषां रेखा इमास्तिस्रः, सम्पूर्णा दोषवर्जिताः । तेषां गोत्रधनायूंषि, सम्पूर्णान्यन्यथा न तु ॥ २१ ॥
यावन्त्यो, ऽङ्गुल्यो जीवितरेखया । पञ्चविंशतयो ज्ञेया–स्तावन्त्यः शरदां बुधैः ॥२२॥ मणिबन्धोन्मुखा आयु–र्लेखायां
येऽत्र पल्लवाः । सम्पदस्ते बहिर्ये ता, विपदोऽङ्गुलिसम्मुखाः ॥२३॥ ऊर्ध्वरेखा मणेर्बन्धा–दूर्ध्वगा सा तु पञ्चधा । अ-
ङ्गुष्ठाश्रयणी सौख्य–राज्यलाभाय जायते ॥ २४ ॥ राजा राजसदृक्षो वा, तर्जनीं गतयाऽनया । मध्यमाङ्गतयाऽऽ-
चार्यः, ख्यातो राजाऽथ सैन्यपः ॥ २५ ॥ अनामिकां प्रयान्त्या तु, सार्थवाहो महाधनः । कनिष्ठां गतया श्रेष्ठः, स-
प्रतिष्ठो भवेद् ध्रुवम् ॥ २६ ॥ यवैरङ्गुष्ठमध्यस्थै–र्विद्याख्यातिविभूतयः । शुक्लपक्षे तथा जन्म–दक्षिणाङ्गुष्ठगैश्च तैः
॥ २७ ॥ न श्रीः त्यजति रक्ताक्षं, नार्थः कनकपिङ्गलम् । दीर्घबाहुं न चैश्वर्यं, न मांसोपचितं सुखम् ॥ २८ ॥ उरो-
विशालो धनधान्यभोगी, शिरोविशालो नृपपुङ्गवश्च । कटीविशालो बहुपुत्रदारो, विशालपादः सततं सुखी स्यात्
॥ २९ ॥ अतिमेधाऽतिकीर्त्तिश्च, विख्यातोऽतिसुखी तथा । अतिस्निग्धा च दृष्टिश्च, स्तोकमायुर्विनिर्दिशेत् ॥ ३० ॥
चक्षुःस्नेहेन सौभाग्यं, दन्तस्नेहेन भोजनम् । वपुःस्नेहेन सौख्यं स्यात्, पादस्नेहेन वाहनम् ॥ ३१ ॥ वामभागे तु
नारीणां, दक्षिणे पुरुषस्य च । विलोक्यं लक्षणं विज्ञैः, पुंसस्त्वायुःपुरस्सरम् ॥ ३२ ॥ पुष्टं यदेव देहे स्या–ल्लक्षणं
चाप्यलक्षणम् । इतरद्वाध्यते तेन, बलवत्फलदं भवेत् ॥ ३३ ॥" इति ।

व्यञ्जनानि–मषीतिलकादीनि तेषां यो गुणः–प्रशस्तता तेनोपयुक्तः उपअपइत इति शब्दत्रयस्य स्थाने शकन्ध्वा-

तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे सत्तमे पक्खे आसाढबहुले तस्स णं आसाढबहुलस्स चउत्थीपक्खे णं सव्वट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठिइयाओ अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे इक्खाग-भूमीए नाभिकुलगरस्स मरुदेवाए भारियाए पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतीए जाव गब्भत्ताए वक्कंते ॥ २०६ ॥

व्याख्या—तेणमित्यादितो गब्भं वक्कंते त्ति पर्यन्तं सुगमम् ॥ २०६ ॥

उसभे णं अरहा कोसलिए तिण्णाणोवगए आविहुत्था तं जहा—चइस्सामि त्ति जाणइ जाव सुविणे पासइ, तं जहा—गयवसह०गाहा, सव्वं तहेव नवरं पढमं उसभं मुहेण अइंतं पासइ, सेसाओ गयं, नाभिकुलगरस्स साहेइ, सुविणपाढगा नत्थि, नाभीकुलगरो सयमेव वागरेइ ॥ २०७ ॥

व्याख्या—उसभेणमित्यादितः सयमेव वागरेइ त्ति पर्यन्तं सुगम्, तत्र मरुदेवी प्रथमं मुखेन अइंतं त्ति प्रविशन्तं वृषभं पश्यति, शेषा जिनजनन्यः प्रथमं गजं पश्यन्ति । वीरमाता तु सिंहमद्राक्षीत् ॥ २०७ ॥

तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए जे से गिम्हाणं पढमे मासे पढमे

दिदर्शनादुपपेत इति भवति, अथवा सहजं लक्षणं, पश्चाद् भवं व्यञ्जनं, गुणाः सौभाग्यादयः । माणुम्माणेत्यादि, जलेनातिभृते कुण्डे प्रमातव्यपुरुषनिवेशने यज्जलं निस्सरति तद्यदि द्रोणमानं भवेत् तदा स पुमान् मानान्वितः कथ्यत इति मानं, उन्मानं तुलारोपितश्च यद्यर्द्धभारं तुलति तदोन्मानप्राप्तः । तत्र भारमानं त्वेवम्–"षट्सर्षपैर्यवस्त्वेको, गुञ्जैका च यवैस्त्रिभिः । गुञ्जात्रयेण वल्लः स्याद्, गद्याणे ते च षोडश ॥ १ ॥ पले च दश गद्याणा–स्तेषां सार्द्धशतं मणे । मणैर्दशभिरेका च, धटिका कथिता बुधैः ॥ २ ॥ धटीभिर्दशभिस्ताभि–रेको भारः प्रकीर्त्तितः" । इत्युन्मानम् । प्रमाणं स्वाङ्गुलेनाष्टोत्तरशताङ्गुलोच्छ्रयः प्रमाणप्राप्तः, यदुक्तम्—"अष्टशतं १०८ षण्णवतिः ९६, परिमाणं चतुरशीति ८४ रिति पुंसां । उत्तम १ सम २ हीनानां ३, स्वदेहसङ्ख्या स्वमानेन ॥ १ ॥" इदं च शेषपुरुषानाश्रित्य तीर्थकृतस्तु विंशत्यधिकशताङ्गुलप्रमाणा भवेयुर्यतस्तेषां शीर्षे द्वादशाङ्गुलमुष्णीषं स्यादिति प्रमाणम् । ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि–अन्यूनानि सुजातानि–सुनिष्पन्नानि सर्वाङ्गाणि–शिरःप्रभृतीनि यस्मिंस्तथाविधं सुन्दरमङ्गं–शरीरं यस्य स तथा तं 'ससिसोमाकारं ति' शशिवत् सौम्य आकारो यस्य तं, कान्तं–कमनीयं अत एव प्रियं द्रष्टॄणां दर्शनं–रूपं यस्य अत एव सुरूपं–शोभनरूपम् ॥ ९ ॥

से वि अ णं दारए उम्मुक्कबालभावे विन्नायपरिणयमित्ते जुव्वणगमणुप्पत्ते रिउव्वेअ जउव्वेय सामवेअ अथव्वणवेअ इतिहासपंचमाणं निग्घंटुछट्ठाणं संगोवंगाणं सरहस्साणं चउण्हं

परिसाए समणुगम्ममाणमग्गे जाव विणीयं रायहाणिं मज्झं मज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव सिद्धत्थवणे उज्जाणे जेणेव असोगवरपायवे, तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे जाव सयमेव चउमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं उग्गाणं भोगाणं राइन्नाणं खत्तियाणं चउहिं पुरिससहस्सेहिं सद्धिं एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ २११ ॥

व्याख्या—उसभे णमित्यादितः पव्वइए त्ति यावत्, तत्र लेहाइयाओ त्ति लेखादिका द्वासप्ततिः कलाः ताश्चेमाः "लिखितं१ गणितं २ गीतं ३, नृत्यं ४ वाद्यं ५ च पठित ६ शिक्षे ७ च। ज्योति ८ श्छन्दो ९ ऽलङ्कृति १०-व्याकरण ११ निरुक्ति १२ काव्यानि १३ ॥१॥ कात्यायनं १४ निघण्टु १५-र्गज १६ तुरगा १७ रोहणं तयोः शिक्षा १८। शस्त्राभ्यासो १९ रस २० मंत्र २१ यंत्र २२ विष २३ खन्य २४ गन्धवादा २५ श्च ॥२॥ प्राकृत २६ संस्कृत-२७ पैशाचिका २८ पभ्रंशाः २९ स्मृतिः ३० पुराण ३१ विधी ३२। सिद्धान्त ३३ तर्क ३४ वैद्यक ३५-र्वेदा ३६-गम ३७ संहिते ३८ तिहासा ३९ श्च ॥ ३ ॥ सामुद्रिक ४० विज्ञाना ४१ चार्यकविद्या ४२ रसायनं ४३ कपटम् ४४। विद्यानुवाद ४५ दर्शन-संस्कारौ ४६ धूर्तशम्बलकं ४७ ॥ ४ ॥ मणिकर्म्म ४८ तरुचिकित्सा ४९, खेचर्य ५०-मरी ५१ कलेन्द्रजालं ५२ च। पातालसिद्धि ५३ यन्त्रक-रसवत्यः ५४ सर्वकरणी ५५ च ॥ ५ ॥ प्रासादलक्षणं ५६

वेआणं सारए पारए वारए धारए सडंगवी, सट्ठितंतविसारए संखाणे सिक्खाणे सिक्खा-कप्पे वागरणे छंदे निरुत्ते जोइसामयणे अन्नेसु अ बहुसु बंभन्नएसु परिव्वायएसु नएसु सुप-रिनिट्ठिए आविभविस्सइ ॥ १० ॥

व्याख्या—से वि अ णमित्यादितो भविस्सइ त्ति यावत्, तत्र से वि अ णं ति सोऽपि दारकः, णमित्यलङ्कारे उन्मुक्तबालभावो—जाताष्टवर्षः विज्ञातं—विज्ञानं परिणतमात्रं यस्य स तथा क्वचित् 'विन्नयपरिणय त्ति' पाठस्तत्र विज्ञ एव विज्ञकः स चासौ परिणतमात्रश्च बुद्ध्यादिपरिणामवानेव विज्ञकपरिणतमात्रः, इह मात्रशब्दो बुद्ध्यादिपरिणामस्याभिन्नत्वख्यापनपरः, यौवनमेव यौवनकमनुप्रासः 'रिउव्वेअ' इत्यादिषु षष्ठीवहुवचनलोपाद्वेदानामितिहासः—पुराणं, निघण्टुः—नामसङ्ग्रहः, अङ्गानि—शिक्षाकल्पव्याकरणछन्दोज्योतिर्निरुक्तय, उपाङ्गानि—तदुक्तप्रपञ्चनपराः प्रबन्धाः, 'सरहस्साणं ति' ऐदंपर्ययुक्तानां सारको—अध्यापकद्वारेण प्रवर्त्तकः स्मारको वा—अन्येषां विस्मृतसूत्रादेः स्मारणात्, पारगः—पर्यन्तगामी 'वारए धारए त्ति' क्वचित्तत्र वारको—अशुद्धपाठनिषेधकः, धारको—अधीतान् धारयितुं क्षमः, षडङ्गवित्—शिक्षादिविचारकः, ज्ञानार्थे तु पौनरुक्त्यं स्यात्, षष्टिरर्थास्तन्त्रिता अत्रेति षष्टितन्त्रं—कापिलीयशास्त्रं तत्र विशारदः, तच्चैवम्—"प्रधानास्तित्व १ मेकत्व २—मर्थवत्त्व ३ मथान्यता ४। पारार्थ्यं ५ च तथानैक्यं ६, वियोगो ७ योग ८ एव च ॥ १ ॥ शेषवृत्ति ९ रकर्तृत्वं १०, चूलिकार्था दश स्मृताः। द्विपर्यायः पञ्चविधः २०, तथोक्तान-

प्रणम्य पुष्पकविमानारूढौ कच्छमहाकच्छौ प्रति भगवत्प्रसादं ज्ञापयन्तौ विनीतां नगरीं प्रविश्य भरतस्य राज्ञस्तमर्थं निवेद्य स्वजनं परिजनं चादाय वैताढ्ये नगे दक्षिणस्यां नमी उत्तरस्यां च विनमीति तौ तथैव कृत्वा विहरतः स्मेति । भगवांश्चान्नपानादिदानाकुशलैः समृद्धिभाग्भिर्मनुष्यैर्वस्त्राभरणगन्धमाल्यालङ्कारकनकमणिमौक्तिकासनशयनयानवाहनकन्याप्रभृतिप्रशस्तवस्तुभिर्निमन्त्र्यमाणोऽपि योग्यां भिक्षामलभमानोऽदीनमनाः सन् गोचर्यां भिक्षार्थं भ्रमन् यावत् कुरुजनपदे गजपुरे नगरे प्रविष्टः । तत्र च श्रीआवश्यकवृत्त्यनुसारेण 'बाहुबलिसुतः सोमप्रभस्तस्य पुत्रो युवराजा श्रेयांसः' श्रीआवश्यकचूर्णौ तु 'भरहस्स पुत्तो सेज्जंसो, अण्णे भणंति, बाहुबलिस्स सुतो सोमप्पभो सेअंसो अ' त्ति, स च श्रेयांसः स्वप्ने मया श्यामवर्णो मेरुरमृतकलशेनाभिषिक्तोऽतीव शोभितवान्, सुबुद्धिनामा नगरश्रेष्ठी पुनः सूर्यमण्डलात् स्रस्तं किरणसहस्रं श्रेयांसेन तत्र घटितं ततस्तदतीव शोभाभाग्, राजाऽपि स्वप्ने महापुरुष एको रिपुबलेन युध्यमानः श्रेयांससाहाय्याज्जयी जात, इत्यद्राक्षीदिति, त्रयोऽपि प्रातरन्तःसभं संभूय परस्परं निजं निजं स्वप्नं न्यवेदयंस्ततो राज्ञा भणितं 'कोऽपि श्रेयांसस्य महान् लाभो भावी' इति निर्णीय विसर्जितायां पर्षदि श्रेयांसोऽपि स्वभवने गत्वा गवाक्षस्थः स्वामी न किञ्चिल्लातीति जनोत्कलिकाकोलाहलमाकलय्योत्थितः स्वामिनं प्रविशन्तं प्रेक्षमाणश्चिन्तयति मया क्वापीदृशं नेपथ्यं दृष्टपूर्वं यादृशं मे पितामहस्येति जातिमस्मार्षीत् । अहो अहं भगवतः पूर्वभवे सारथी तेन समं तीर्थकरसमीपे प्रव्रज्यामात्तवान्, तत्र वज्रसेनेन तीर्थकृता कथितमासीत् 'यदयं वज्रनाभो भरतक्षेत्रे प्रथमतीर्थकृद्भावीति' स एष भगवान्, तदानीमेव तस्यैको मनुष्यः प्रधानेक्षुरस-

चतुष्टयः २४ ॥ २ ॥ कारणानामसामर्थ्यं ५२–मष्टाविंशतिधा मतम् । इति षष्टिः पदार्थाना–मष्टाभिः सह सिद्धिभिः ६० ॥ ३ ॥" इति । 'संखाणे त्ति' सङ्कलितव्यवकलितस्कन्धे सुपरिनिष्ठित इति योगः, तच्च छायादिना नगगृहादिमानं यथा–"अर्द्धे ३ तोये कर्दमे द्वादशांशः, १२ षष्ठो भागो वालुकायां निमग्नः । सार्द्धो हस्तो दृश्यते यस्य तस्य, स्तम्भस्याशु ब्रूहि मानं विचिन्त्य ॥ १ ॥" स्तम्भो हस्ताः पट् इत्यादि । क्वचित् 'सिक्खाणे त्ति' पाठः, तत्र शिक्षामणति–प्रतिपादयतीति शिक्षाणं–आचारोपदेशकं शास्त्रं तत्र षडङ्गवित्त्वमेवावेदयति, सिक्खाकप्पेत्यादि, शिक्षा च–अक्षरस्वरूपनिरूपकं शास्त्रं कल्पश्च–यज्ञादिसमाचारप्रतिपादकं शास्त्रं शिक्षाकल्पं तत्र व्याकरणे–ऐन्द्र १ पाणिनि २ जैनेन्द्रा ३ दिलक्षणशास्त्रे छन्दसि–पद्यलक्षणनिरूपके निरुक्ते–पदभञ्जने 'जोइसामयणे त्ति' 'अयि गतौ' गत्यर्था ज्ञानार्था इति ज्योतिषामयने–ग्रहादीनां ज्ञाने ज्योतिःशास्त्रे इत्यर्थः, 'अन्नेसुअ त्ति' अन्येषु च बहुषु ब्राह्मण्येषु–वेदव्याख्यारूपेषु ब्राह्मणसम्बन्धिषु ब्राह्मणहितेषु सुपरिनिष्ठितश्चापि भविष्यति । क्वचिदेतदनन्तरं 'परिव्वायएसु त्ति' पाठस्तत्र परिव्राजकदर्शनप्रसिद्धेषु नयेषु-आचारेषु न्यायशास्त्रेषु वेति भाव्यम् ॥ १० ॥

तं उरालाणं तुमे देवाणुप्पिए सुमिणा दिट्ठा, जाव आरुग्गतुट्ठिदीहाउअमंगल्लकल्लाणकारगा णं तुमे देवाणुप्पिए सुमिणा दिट्ठ त्तिकट्टु भुज्जो भुज्जो अणुवूहइ ॥ ११ ॥

व्याख्या—तं उरालाणमित्यादितो अणुवूहइ त्ति पर्यन्तम्, तत्र 'तं ति' यस्मादेवं तस्मादुदारादिविशेषणाः स्वप्नास्त्वया दृष्टा इति निगमनं 'इति कट्टु त्ति' इति भणित्वा भूयो भूयो अनुबृंहयति–अनुमोदयति ॥ ११ ॥

वसित्ता, तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसित्ता, तेसीइं पुव्वसयसहस्साइं अगारवासमज्झे वसित्ता, एगं वाससहस्सं छउमत्थपरियागं पाउणित्ता, एगं पुव्वसयसहस्सं वाससहस्सूणं केवलिपरियागं पाउणित्ता, संपुन्नं पुव्वसयसहस्सं सामन्नपरियागं पाउणित्ता, चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयणामगुत्ते इमीसे ओसप्पिणीए सुसमदुस्समाए समाए बहुविइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं जे से हेमंताणं तच्चे मासे पंचमे पक्खे माहबहुले (ग्रं. ९००) तस्स णं माहबहुलस्स तेरसी पक्खेणं उप्पिं अट्ठावयसेलसिहरंसि दसहिं अणगारसहस्सेहिं सद्धिं चउद्दसमेणं भत्तेणं अपाणएणं अभीइणा नक्खत्तेणं जोगमुवागएणं पुव्वण्हकालसमयंसि संपलियंकनिसन्ने कालगए जाव सव्वदुक्खप्पहीणे ॥ २२७ ॥

व्याख्या—तेणं कालेणमित्यादितः सव्वदुक्खप्पहीणे त्ति यावत्, तत्र तृतीयारके एकोननवतिपक्षावशेषे उप्पिं ति उपरि अष्टापदशैलशिखरस्य चउद्दसमेणं भत्तेणं ति चतुर्दशभक्तपरित्यागादुपवासषट्केन दशभिरनगारसहस्रैः सार्द्धं भगवान् सिद्धः । 'तं समयं च णं सक्कस्स देविंदस्स देवरन्नो आसणे चलिए, तएणं से सक्के देविंदे देवराया आसणं चलियं पासेइ पासित्ता ओहिं पउंजंति पउंजित्ता भगवं तित्थगरं ओहिणा आहोएति आहोइत्ता

देवाणुप्पिया ! णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरह साहरित्ता तओ चियगाओ रयेह एगं भगवओ तित्थकरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं, ( तएणं ) ते भवणवइ जाव वेमाणिया देवा णंदणवणाओ सरसाइं गोसीसवरचंदणकट्ठाइं साहरंति साहरित्ता तओ चियगाओ रयेति एगं भगवओ तित्थ-करस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं। ततेणं से सक्के देविंदे देवराया आभियोगे देवे सद्दावेइ सद्दावित्ता एवं वयासि, खिप्पामेव भो ! देवाणुप्पिया खीरोदसमुद्दाओ खीरोदगं साहरह। ततेणं ते आभिओ-गिया देवा खीरोदसमुद्दाओ खीरोदगं साहरंति। ततेणं से सक्के देविंदे देवराया तित्थकरसरीरगं खीरोदएणं ण्हाणेइ ण्हाणित्ता सरसेणं गोसीसवरचंदणेणं अणुलिंपति अणुलिंपित्ता हंसलक्खणपडसाडगेणं णियंसेति नियंसित्ता सव्वालंकारविभूसितं करेति, २। ततेणं ते भणवइ जाव वेमाणिया गणधरअणगारसरीरगाइं पि य खीरोदएणं ण्हावंति २ सरसेणं गोसीसवरचंदणेणं अणुलिंपंति २ अहताइं दिव्वाइं देवदूसजूयलाइं णियंसति सव्वालंकारविभूसिताइं करेंति २। ततेणं से सक्के देविंदे देवराया ते वहवे भवणवति जाव वेमाणिते देवे एवं वयासि खिप्पामेव भो देवाणुप्पिया ईहामिगउसभतुरगजाववणलयगभत्तिचित्ताओ तओ सिवियाओ विउव्वह एगं भगवओ तित्थगरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं। तएणं ते वहवे भवणवति जाव वेमाणिया तओ सिवियाओ विउव्वंति एगं भगवओ तित्थकरस्स एगं गणहराणं एगं अवसेसाणं अणगाराणं। तएणं से सक्के देविंदे देवराया विमणे णिराणंदे अंसुपुण्णणयणे भगवओ तित्थगरस्स विणट्ठजम्मजरामरणस्स सरीरगं सिवितं

तेणं कालेणं, तेणं समएणं, सक्के देविंदे देवराया वज्जपाणी पुरंदरे सयक्कओ सहस्सक्खे मघवं पागसासणे दाहिणड्ढलोगाहिवई एरावणवाहणे सुरिंदे बत्तीसविमाणसयसहस्साहिवई अरयंबरवत्थधरे आलइअमालमउडे नवहेमचारुचित्तचंचलकुंडलविलिहिज्जमाणगल्ले महिड्ढीए महज्जुईए महब्बले महायसे महाणुभावे महासुक्खे भासुरबोंदी पलंबवणमालधरे, सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि, से णं तत्थ बत्तीसाए विमाणवाससयसाहस्सीणं, चउरासीए सामाणिअसाहस्सीणं, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं सपरिवाराणं, तिण्हं परिसाणं, सत्तण्हं अणिआणं, सत्तण्हं अणियाहिवईणं, चउण्हं चउरासीणं आयरक्खदेवसाहस्सीणं, अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणिआणं देवाणं देवीण य, आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे, महयाहयनट्टगीअवाइअंततीतलतालतुडिअघणमुइंगपडुपडहवाइअरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १४ ॥

व्याख्या—'तेणं कालेणमित्यादितो विहरतीति' पर्यन्तम्, तत्र शक्रस्यासनविशेषस्याधिष्ठाता, देवानां मध्ये

गेण्हति, चमरे असुरिंदे असुरराया हेट्ठिल्लं दाहिणं सगधं गेण्हइ, बलीवइरोयणिंदे वइरोयणराया हेट्ठिल्लं वामं सगधं गेण्हति, अवसेसा भवणवति जाव वेमाणिया देवा जहारिहं अवसेसाइं अंगमंगाइं, केइ जिणभत्तीए केति जीयमेयं त्तिकट्टु केइ धम्मो त्तिकट्टु गिण्हंति। तएणं से सक्के देविंदे देवराया बहवे भवणवति जाव वेमाणिया देवा जहारिहं एवं वयासी, खिप्पामेव भो देवाणुप्पिया सव्वरयणामए महइमहालए तओ चेइयथूभे करेह । एगं भगवओ तित्थकरस्स चितगाए, एगं गणहरचितगाए, एगं अवसेसाणं अणगाराणं चितगाए। ततेणं ते बहवे जाव करेंति। ततेणं ते बहवे भवणवति जाव वेमाणिया देवा तित्थकरस्स परिणिव्वाणमहिमं करेंति २ जेणेव णंदीसरे दीवे तेणेव उवागच्छंति । ततेणं से सक्के देविंदे पुरच्छिमिल्ले अंजणकपव्वते अट्ठाहियं महामहिमं करेंति । तएणं सक्कस्स देवरन्नो चत्तारि लोकपाला चउसु दहिमुहपव्वतेसु अट्ठाहियं महामहिमं करेंति । ईसाणे देवे उत्तरिल्ले अंजणगपव्वते अट्ठाहियं, तस्स लोगपाला चउसु दहिमुहपव्वतेसु अट्ठाहियं। चमरो य दाहिणल्ले, तस्स लोगपाला दहिमुहपव्वतेसु। बली पच्छिमिल्ले, लोगपाला चउसु दधिमुहपव्वएसु। ततेणं ते बहवे भवणवति जाव अट्ठाहियाओ महामहिमाओ करेंति २ जेणेव साइं साइं विमाणाइं जेणेव साइं साइं भवणाइं जेणेव साओ साओ सभाओ सुहमाओ अ जेणेव सका माणवका चेइयखंभा तेणेव उवागच्छंति २ वइरामएसु गोलसमुग्गएसु जिणसकहाओ पक्खिवंति २ अग्गेहिं वरेहिं गंधेहि अ मल्लेहि अ अच्चेंति ॥ २२७ ॥

उसभस्स णं ३ जाव सव्वदुक्खप्पहीणस्स तिन्नि वासा अद्धनवमासा विइक्कंता तओवि परं

इन्दनात्परमैश्वर्ययुक्तत्वाद्देवेन्द्रः, देवेषु राजा कान्त्यादिभिर्गुणैरधिकं राजमानत्वात्, वज्रं पाणावस्येति वज्रपाणिः, असुरादिपुराणां दारणात्पुरन्दरः, शतं क्रतूनां—कार्त्तिकश्रेष्ठिभवापेक्षयाऽभिग्रहविशेषाणा श्राद्धपञ्चमप्रतिमारूपाणां वा यस्यासौ शतक्रतुः कार्त्तिकश्रेष्ठिभवो यथा—

पृथ्वीभूषणनाम्नि नगरे प्रजापालो नाम भूपालः, श्रेष्ठी च कार्त्तिकनामा महर्द्धिको राजमान्यः, तेन श्राद्धप्रतिमानां शतं कृतं ततः 'शतक्रतु'रिति ख्यातिः । एकदा च गैरिकनामा परिव्राजको मासोपवासी तत्रागात्, एकं कार्त्तिकं विना सर्वोऽपि तन्निवासी लोकस्तदादृतो जातः । अथावगतकार्त्तिकवृत्तान्तः स सकोपो भोजननिमित्तं निमन्त्रितो राज्ञे जगाद, यदि श्रेष्ठी परिवेषयति तदा त्वन्निकेतने समुपैमीति श्रुत्वा राजा श्रेष्ठिसदने गत्वा तं भुजे धृत्वाऽभ्यधात् मद्गृहे गैरिकं प्रभोजय । श्रेष्ठी जगाद, त्वदाज्ञाविधायित्वाद्विधास्येऽहमिति । तदनु श्रेष्ठिना भोज्यमानो गैरिकोऽपि घृष्टोऽसीत्यङ्गुलीचालनचेष्टां चकार । दध्यौ च श्रेष्ठी यदि प्रागेव प्राव्रजिष्यं तदिदं नाभविष्यदिति विचिन्त्याष्टश्रेष्ठिसहस्रेण समं श्रेष्ठी 'श्रीमुनिसुव्रत' स्वाम्यन्तिके प्रव्रज्याऽधीतद्वादशाङ्गीको द्वादशाब्दैः सौधर्मेन्द्रो बभूव । गैरिकोऽपि निजकर्म्मतस्तद्वाहनमैरावणाख्यं जातम्, ततः कार्त्तिकोऽयमिति ज्ञात्वा पलायमानं तं धृत्वा शक्रोऽधिरूढवान् । स च शक्रभापनार्थं शीर्षद्वयं विचक्रुवान्, शक्रोऽपि द्विमूर्त्तिकः । पुनरपि स चतुःशीर्षः इन्द्रोऽपि चतुर्मूर्त्तिरित्यादि यावदवधिना विज्ञाय शक्रेण तर्जितो भीतः सन् तदुचितमेव रूपं विहितवान् । इति कार्त्तिकश्रेष्ठिकथा ॥

त्रयमथो सन्ध्यादिकालत्रयं, सध्यानां त्रितयं वचस्त्रयमथाप्यर्थास्त्रयः संस्मृताः ॥ १ ॥' जीवाजीवनोजीवेत्यादित्रयमथो सन्ध्यादिकालत्रयं... राशित्रयं व्यवस्थाप्य तं विजित्य महामहःपूर्वं पश्चादागत्य गुरुभ्यः सर्वं स्ववृत्तान्तं व्यज्ञपयत्, गुरुभिरूचे-'वत्स! वरं चक्रे, परं जीवाजीवनोजीवेतिराशित्रयव्यवस्थापनमुत्सूत्रं, इति तत्र गत्वा ददस्व मिथ्यादुष्कृतं' ततः कथं तथा-विधपर्षदि स्वयं तथा प्रज्ञाप्य स्वयमप्रमाणयामीति सञ्जाताहङ्कारेण तेन न तथा चक्रे, ततः षण्मासीं यावद्राज-सभायां वादमासूत्र्य कुत्रिकापणजीवाजीवनोजीवमार्गणादियुक्त्या चतुश्चत्वारिंशेन पृच्छाशतेन निर्लोठितः, कथमपि स्वाग्रहमत्यजन् गुरुभिः क्रुधा खेलमात्रभस्मक्षेपेण शिरोमुण्डनपूर्वं सङ्घबाह्यश्चक्रे, ततस्ततः (ताः) षष्ठनिह्नवास्त्रैराशिकाः, क्रमेण वैशेषिकदर्शनं च प्रकटितमिति ।

थेरेहिंतो णं उत्तरबलिस्सहेहिंतो तत्थ णं उत्तरबलिस्सहे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा—कोसंबिआ १, सुत्तिवत्तिआ २, कोडंबाणी ३, चंदनागरी ४। थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे अज्जरोहणे १, भद्दजसे २ मेहगणी अ ३ कामिड्ढी ४। सुट्ठिअ ५ सुप्पडिबुद्धे ६, रक्खिअ ७ तह रोहगुत्ते य ८ ॥ १ ॥ इसिगुत्ते ९ सिरिगुत्ते १०, गणी य बंभे ११ गणी य तह सोमे १२। दस दो य गणहरा खलु, एए सीसा सुहत्थिस्स ॥२॥

सहस्राक्षः पञ्चमन्त्रिशताक्ष्णामिन्द्रकार्यप्रवृत्तत्वात्, मघा—महामेघा देवविशेषा वा वशे सन्त्यस्य स मघवा, पाका-बलवन्तो वैरिणस्तान् पाको वा—दानवविशेषस्तं शास्तीति पाकशासनः, दक्षिणार्द्धलोकस्याधिपतिर्मेरोर्दक्षिणतः सर्वस्यापि तदधीनत्वात्, ऐरावणो—गजरूपः सुरविशेषो वाहनं यस्य, सुराणामिन्द्र—आह्लादकः अथवा शोभना रा-दीप्तिर्येषां ते सुरास्तेष्विन्द्रः—श्रेष्ठः, 'सयसहस्स त्ति' शतसहस्रा—लक्षास्तेषामधिपतिः, अरजांसि—निर्मलानि यान्यम्बरवस्त्राणि—स्वच्छतया आकाशकल्पवसनानि तानि धरतीति, आलगितौ—यथास्थाने निवेशितौ मालमुकुटौ येन अथवा आलगितमालं मुकुटं यस्य, नवाभ्यामिव—प्रत्यग्राभ्यामिव हेम्नः सत्काभ्यां चारुभ्यां चित्राभ्यां चञ्चलाभ्यां—इतस्ततश्चलनपराभ्यां कुण्डलाभ्यां विलिख्यमानौ गल्लौ यस्य, महती ऋद्धिः—छत्रादिराजचिह्नरूपा यस्य, महती द्युतिः—आभरणादिसम्बन्धिनी युतिर्वा—उचितेष्टवस्तुघटना रूपा यस्य, महाबलः, महायशाः, महानुभावो—महिमा यस्य, भासुरा—दीप्तिमती बुन्दि—र्वपुर्यस्य, प्रलम्बा वनमाला—भूषणविशेषः पादान्तलम्बिनी पञ्चवर्णपुष्पमाला वा यस्य, 'सेणं ति' स इन्द्रः णं—वाक्यालङ्कारे, तत्र देवलोके विमानावासा—विमाना एव 'सयसाहस्सीणं ति' लक्षाणां, स्त्रीत्वं चार्षत्वात्, समानया—इन्द्रतुल्यया शक्त्यायुर्ज्ञानादिकया ऋद्ध्या चरन्तीति सामानिकाः, त्रयस्त्रिंशता त्रायस्त्रिंशा—महत्तरकल्पाः पूज्यस्थानीया मन्त्रिकल्पा वा तेषां, 'चउण्हं लोगपालाणं ति' चत्वारो लोकपालाः—सोमयमवरुणकुबेरा दिक्पालननियुक्ताः, अग्रमहिष्यः—प्रधानपत्न्यस्ताश्च पद्मा १ शिवा २ शची ३ अञ्जू ४ अमला ५ अप्सरा ६ नवमिका ७ रोहिण्या ८ ख्याः, तिस्रः पर्षदो बाह्या १ मध्यमा २ भ्यन्तरा ३ जघन्यमध्यमोत्कृष्ट-

श्राद्धभार्येश्वरीगृहं गतः, तया च लक्षमूल्यमन्नं पक्त्वा प्रक्षिप्यमाणं विषं गुरुवचः प्रोच्य न्यवारयत्, प्रभाते पोतैः प्रचुरधान्यागमनात् सञ्जाते सुभिक्षे जिनदत्तो भार्यानागेन्द्रचन्द्रादितनयपरिवृतः प्राव्राजीत्, ततस्तेभ्यः चतस्रः शाखाः समजायन्त इति ।

थेरेहिंतो णं अज्जसमिएहिंतो गोयमसगुत्तेहिंतो इत्थ णं बंभदीविया साहा निग्गया ।

व्याख्या—बंभदीविया साहा निग्गय त्ति आभीरदेशेऽचलपुरासन्ने कन्नावेन्नानद्योर्मध्ये ब्रह्मद्वीपे पञ्चशततापसास्तेष्वेकः पादलेपेन प्रलेपमात्रेण वेन्नामुत्तीर्य पारणार्थं याति, ततोऽहोऽस्य तपःशक्तिरिति सञ्जातचेतश्चित्रो विचित्रो जनस्तद्भक्तिपरायणो भवद्गुरूणां न कोऽपि प्रभाव इति श्राद्धनिन्दातत्परश्चासीत्, ततस्तैः श्रीवज्रस्वामिमातुलार्यसमितसूरय आहूताः, तैरूचे स्तोकमिदं यतः पादलेपशक्तिरिति, श्राद्धैस्ते स्वगृहे पादपादुकाधावनपुरस्सरं भोजितास्ततः तैः सहैव सर्वेऽपि श्राद्धा नद्यान्तिकमगुः, ते च तत्र प्रविशन्त एव ब्रुडितुं लग्नाः, ततस्तेषां प्रावर्त्तत सर्वत्रापभ्राजना, इतश्च तत्रार्यसमितसूरयोऽप्यभ्येयुस्ततस्ते लोकबोधनाय चप्पडिकां दत्त्वोचिवांसः, 'वेन्ने परं पारं यास्याम' इत्युक्ते कूले मिलिते, बभूव च बह्वाश्चर्यं सकलपौराणां, ततस्तैः परिवृताः सूरयस्तापसाश्रमे गत्वा दत्त्वा च धर्मोपदेशं तान्प्रत्यबूबुधन्, तदनु ते सर्वेऽपि प्रव्रजिताः, प्रससार च प्रवचनप्रभावना, ततस्तेभ्यो ब्रह्मद्वीपिका शाखा निर्गता इति । तत्र च—"महागिरिः १ सुहस्ती २ च, सूरिः श्रीगुणसुन्दरः ३ । श्यामार्यः ४ स्कन्दिलाचार्यो ५, रेवतीमित्रसूरिराट् ६ ॥१॥ श्रीधर्म्मो ७ भद्रगुप्तश्च ८, श्रीगुप्तो ९ वज्रसूरिराट् १० । युगप्रधानप्रवरा, दशैते दशपूर्विणः॥२॥" इति

परिवारविशेषभूताः, अनीकानां—सैन्याना तानि च "गंधव १ नट्ट २ हय ३ गय ४—रह ५ भड ६ अणिआ सुरा-
हिवाण भवे । सत्तममणिअं वसहा ७, महिसा य ८ अहोनिवासीणं ॥ १ ॥" चतस्रश्चतुरशीतयश्चतुर्दिशं भा-
वादङ्गरक्षकाणां षट्त्रिंशत्सहस्राधिकलक्षत्रयमिति, आहेवचमित्यादि आधिपत्यं—अधिपतेः कर्म-रक्षेत्यर्थः, एतच्च
सामान्यत आरक्षकमात्रेणापि क्रियते अत आह—पुरोवर्त्त्यं—सर्वेषामग्रेसरत्वं तच्च स्वामित्वमन्तरेणापि नायकनियु-
क्तगृहचिन्तकनरवत्स्यादत आह स्वामित्वं—नायकत्वं, तत्तु पोषकत्वं विनाऽपि मृगयूथाधिपतेरिव भवेदित्याह—
भर्तृत्वं—पोषकत्वं, महत्तरकत्वं—गुरुतरत्वं, तदाज्ञाविकलस्यापि स्वदासदासीवर्गं प्रति वणिज इव स्यादित्याह—आणे-
त्यादि, आज्ञया ईश्वर आज्ञेश्वरः सेनायाः पतिः सेनापतिः ततो विशेषणकर्म्मधारये तस्य कर्माज्ञेश्वरसेनापत्यं—स्वसैन्यं
प्रति अद्भुतमाज्ञाप्राधान्यमित्यर्थः, कारयन्नियुक्तैः सह पालयन् स्वयमेव महयाहयेत्यादि महता रवेणेति योगः
'आहय त्ति' आख्यानकप्रतिबद्धमहतं वाऽव्यवच्छिन्नं यन्नाट्यं तत्र यद्गीतं यानि च वादितानि—तन्त्रीतलताल त्रुटितानि
तत्र तन्त्री—वीणा, तलतालाश्च—हस्तास्फोटरवाः, यद्वा तला—हस्ता, तालाः—कंसिकाः, त्रुटितानि—शेषतूर्याणि, यश्च
घनमृदंगो—मेघध्वनिमर्दलो यच्च पटुपटहवादितमिति कर्मधारयगर्भो द्वन्द्वस्तदनु तेषां यो रवस्तेन दिव्यान्-देवजनो-
चितान् भोगभोगान्—अतिशयवद्भोगान् नपुंसकता च प्राकृतत्वात् विहरति—आस्ते ॥ १४ ॥

इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे आभोएमाणे विहरइ,
तत्थ णं समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे माहणकुंडग्गामे

ऊण सिस्सा, थिरसत्तचरित्तणाणसंपन्नं । थेरं च अज्जजंबुं, गोअमगुत्तं नमंसामि ॥ ९ ॥
मिउमद्दवसंपन्नं, उवउत्तं नाणदंसणचरित्ते । थेरं च नंदिअं पि अ, कासवगुत्तं पणिव-
यामि ॥ १० ॥ तत्तो अ थिरचरित्तं, उत्तमसम्मत्तसत्तसंजुत्तं । देसिगणिखमासमणं, माढ-
रगुत्तं नमंसामि ॥ ११ ॥ तत्तो अणुओगधरं, धीरं मइसागरं महासत्तं । थिरगुत्तखमासमणं,
वच्छसगुत्तं पणिवयामि ॥ १२ ॥ तत्तो अ नाणदंसण-चरित्ततवसुट्ठिअं गुणमहंतं । थेरं
कुमारधम्मं, वंदामि गणिं गुणोववेयं ॥१३॥ सुत्तत्थरयणभरिए, खमदममद्दवगुणेहिँ संपन्ने।
देवड्ढिखमासमणे, कासवगुत्ते पणिवयामि ॥ १४ ॥

व्याख्या—वंदामि फग्गुमित्तमित्यादि गाथाचतुर्दशकं तत्राभिधेयोक्तोऽर्थः पुनः पद्यैः सङ्गृहीत इति न पौनरुक्त्याशङ्काऽपि कुच्छं ति कुत्सगोत्रं गिम्हाणं ति ग्रीष्मस्य प्रथमे मासे-चैत्रे कालगयं ति कालगतं सुद्धस्स त्ति शुक्लपक्षे वरमुत्तमं त्ति वरा—श्रेष्ठा मा—लक्ष्मीस्तया उत्तमं छत्रं वहति-यस्य शिरसि धारयति देवः पूर्वसङ्गतिकः कश्चित् मिउमद्दवसंपन्नं त्ति मृदुना-मधुरेण मार्दवेन-मानत्यागेन सम्पन्नमथवा मृदुकं-करुणार्द्रहृदयं अद्रवसम्पन्नं नर्मणाऽसम्पन्नमिति ७ ॥ इति श्रीमत्तपागणगगनाङ्गणनभोमणि श्री ६ हीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्म-

नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंतं पासइ, पासित्ता हट्ठतुट्ठचित्तमाणंदीए नंदिए परमाणंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहिअए धाराहयकयंबसुरहिकुसुमचंचुमालइअऊसविअरोमकूवे विआसिअवरकमलाणणनयणे पयलिअवरकडगतुडिअकेऊरमउडकुंडलहारविरायंतवच्छे पालंबपलंबमाणघोलंतभूसणधरे ससंभमं तुरिअं चवलं सुरिंदे सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता वेरुलिअवरिट्ठरिट्ठअंजणनिउणोविअमिसिमिसिंतमणिरयणमंडिआओ पाउआओ ओमुअइ, ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ, करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ, अणुगच्छित्ता वामं जाणुं अंचेइ, अंचित्ता दाहिणं जाणुं धरणितलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि निवेसेइ निवेसित्ता ईसिं पच्चुन्नमइ, पच्चुन्नमित्ता कडगतुडिअथंभिआओ भुआओ साहरइ, साहरित्ता करयलपरिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ १५ ॥

अज्जकालगायरिओ विहरंतो उज्जेणिं गओ, तत्थ वासावासं ठिओ, तत्थ नगरीए बलमित्तो राया, तस्स कणिट्ठो भाया भाणुमित्तो जुवराया, तेसिं भगिणी भाणुसिरी नाम, तस्स पुत्तो बलभाणू णाम सो अ पगिइभद्दविणीययाए साहूणं पज्जुवासति, आयरिएहिं से धम्मो कहिओ पडिबुद्धो पव्वाविओ अ, तेहि अ बलमित्तभाणुमित्तेहि रुट्ठेहिं कालगज्जो अपज्जोसविओ निव्विसओ कओ। केइ आयरिआ भणंति—जहा बलमित्तभाणुमित्ता कालगायरिआणं भागिणेज्जा भवंति, माउलो त्ति काउं महंतं आयरं करेंति अब्भुट्ठाणाइअं, तं च पुरोहिअस्स अप्पत्तिअं भणइ अ एसो सुद्दपासंडो वेदाइबाहिरो, रण्णो अंतो पुणो पुणो उल्लवंतो आयरिएण णिप्पट्ठपसिणवागरणो कओ, ताहे सो पुरोहिओ आयरिअस्स पदुट्ठो रायाणं अणुलोमेहिं विप्परिणामेति—एरिसया महाणुभावा एते जेणं पहेणं गच्छंति तेणं पहेणं जति रण्णो गच्छति पयाणि वा अक्कमति तो असिवं भवति तम्हा विसज्जेह ताहे विसज्जिआ। अण्णे भणंति रण्णा उवाएणं विसज्जिया, कहं? सव्वंसि णगरे रण्णा अणेसणा कराविआ ताहे णिग्गया, एवमादिआण कारणाणं अण्णतमेण निग्गता, विहरंता पतिट्ठाणं नगरं ते पट्ठिआ, पतिट्ठाणसमणसंघस्स य अज्जकालगज्जेहिं संदिट्ठं—जावाहं आगच्छामि ताव तुब्भेहिं णो पज्जोसविअव्वं। तत्थ य सालवाहणो राया सो अ सावओ सो अ कालगज्जं इंतं सोऊण निग्गओ अभिमुहो समणसंघो अ महाविभूईए पविट्ठो कालगज्जो, पविट्ठेहि अ भणिअं भद्दवयसुद्धपंचमीए पज्जोसविज्जइ समणसंघेण पडिवण्णं, ताहे रण्णा भणिअं तद्दिवसं मम लोगाणुवत्तीए इंदो अणुजाएअव्वो

रति विहरतीति सन्निवृत्तचारी–प्रतिपिद्धवर्ज्जकः साधुस्तस्य, बहवस्त्वेवं व्याचक्षते ससगृहान्तरं संखडिं–जनसङ्कुल-जेमनवारलक्षणां गन्तुं न कल्पते इति, द्वितीयमते शय्यातरगृहमन्यानि च सप्त गृहाणि वर्जयेदित्युक्तं, तृतीयमते परंपरेणं ति परंपरया व्यवधानेन ससगृहान्तरमेतुं न कल्पते, परंपरता च शय्यातरगृहं तदनन्तरमेकं गृहं ततोऽपि सप्त गृहाणि ॥ २७ ॥

वासावासं प० नो कप्पइ पाणिपडिग्गहिअस्स भिक्खुस्स कणगफुसिअमित्तमवि वुट्ठिकायंसि निवयमाणंसि गाहावइकुलं भ० पा० नि० प० ॥ २८ ॥

व्याख्या—वासावासमित्यादितः पविसित्तए त्ति पर्यन्तम्, तत्र पाणिपडिग्गहिअस्स त्ति जिनकल्पिकादेः कणगफुसिआ फुसारमात्रमवश्यायो–मिहिका वर्षं वा वृष्टिकायो–ऽप्कायवृष्टिः ॥ २८ ॥

वासावासं प० पाणिपडिग्गहिअस्स भिक्खुस्स नो कप्पइ अगिहंसि पिंडवायं पडिगाहित्ता पज्जोसवित्तए, पज्जोसवेमाणस्स सहसा वुट्ठिकाए निवइज्जा देसं भुच्चा देसमादाय से पाणिणा पाणिं परिपिहित्ता उरंसि वाणं निलिज्जिज्जा, कक्खंसि वाणं समाहडिज्जा, अहाछन्नाणि वा लेणाणि वा उवागच्छिज्जा, रुक्खमूलाणि वा उवागच्छिज्जा, जहा से पाणिंसि दए वा दगरए वा दगफुसिया वा णो परियावज्जइ ॥ २९ ॥

त्रीन् वारान् न्यस्यति ईषन्मनाग् प्रत्युन्नमति—अवनतत्वं मुञ्चति कटकानि—कङ्कणानि त्रुटिताश्च—बाहुरक्षकास्ताभिः स्तम्भिते भुजे 'साहरइ त्ति' ऊर्ध्वं नयति—स्तम्भिकोपमे करोतीति भावः, द्वयोर्हस्तयोरन्योन्यान्तरिताङ्गुलिकयोः सम्पुटरूपतया यदेकत्र मीलनं सोऽञ्जलिस्तं करतलाभ्यां परिगृहीतो—निष्पादितस्तं आवर्त्तनमावर्त्तः शिरस्यावर्त्तो यस्य तम्, अलुक् समासश्चान्नात एव मस्तके कृत्वाऽथवा शिरसाऽप्राप्तं—अस्पृष्टमेवमवादीत् ॥ १५ ॥

नमुत्थु णं अरिहंताणं भगवंताणं, आइगराणं तित्थयराणं सयंसंबुद्धाणं, पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं, लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोअगराणं, अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं जीवदयाणं बोहिदयाणं धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंत चक्कवट्टीणं, दीवो ताणं सरणं गई पइट्ठा, अप्पडिहयवरनाणदंसणधराणं विअट्टच्छउम्माणं, जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोअगाणं, सव्वन्नूणं सव्वदरिसीणं, सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेअं ठाणं संपत्ताणं, नमोजिणाणं जिअभयाणं, नमुत्थु णं समणस्स भगवओ महावीरस्स आदिगरस्स चरमतित्थयरस्स पुव्वतित्थयरनिद्दिट्ठस्स जाव संपाविउकामस्स। वंदामि णं भगवंतं तत्थगयं

वासावासं प० पडिग्गहधारिस्स भिक्खुस्स नो कप्पइ वग्धारिअवुट्ठिकायंसि गाहावइकुलं भत्ता० पा० नि० प०, कप्पइ से अप्पवुट्ठिकायंसि संतरुत्तरंसि गाहा० भ० पा० नि० प० ॥ ३१ ॥ ( ग्रंथाग्रं० ११०० )

व्याख्या—वासावासमित्यादितः पविसित्तए त्ति यावत्, तत्र पडिग्गहधारिस्स पतद्ग्रहधारिणः स्थविरकल्पिकस्य वग्धारिअवुट्ठिकायंसि त्ति अच्छिन्नधारा वृष्टिः यस्यां वा वर्षा कल्पो तीव्रं वा श्च्योतति वर्षाकल्पं वा भित्त्वाऽन्तःकायमार्द्रयति या वृष्टिस्तत्र विहर्त्तुं न कल्पते, अपवादे त्वशिवादिकारणैर्भिक्षाकालाद्यकालमेघाद्ययोग्यक्षेत्रस्थाः श्रुतपाठकास्तपस्विनः क्षुदसहाश्च भिक्षार्थं पूर्वपूर्वाभावे और्णिकेन औष्ट्रिकेन जीर्णेन जीर्णेनेति लोकप्रसिद्धेन सौत्रेण वा कल्पेन तथा तालपत्रेण वा पलाशछत्रेण वा प्रावृता विहरन्त्यपि, संतरुत्तरंसि त्ति आन्तरः सौत्रकल्प उत्तर और्णिकस्ताभ्यां प्रावृतस्याल्पवृष्टौ गन्तुं कल्पते, अथवाऽन्तर इति कल्प उत्तरं वर्षाकल्पः कम्बल्यादि, चूर्णिकारस्तु 'अंतरं रयहरणं पडिग्गहो वा उत्तरं पाऊणकप्पो तेहिं सह' त्ति ॥ ३१ ॥

वासावासं प० निग्गंथस्स निग्गंथीए वा गाहा० पिंडवायपडिआए अणुपविट्ठस्स निगिज्झिअ निगिज्झिय वुट्ठिकाए निवइज्जा कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलंसि वा उवागच्छित्तए ॥ ३२ ॥

इह गए, पासइ मे भगवं तत्थ गए इह गयं तिकट्टु समणं भगवं महावीरं वंदइ नमंसइ, वंदित्ता नमंसित्ता सीहासणवरंसि पुरत्थाभिमुहे निसण्णे, तए णं तस्स सक्कस्स देविंदस्स देवरन्नो अयमेआरूवे अज्झत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ १६ ॥

व्याख्या—नमुत्थु णमित्यादितः समुप्पज्जित्थेति यावत्तत्र नमोऽस्त्विति सर्वत्र सम्बध्यते, सर्वत्र णमिति वाक्यालङ्कारे चतुर्थ्यर्थे षष्ठी च प्राकृतत्वात्, ततोऽर्हन्ति शक्रादिकृतां पूजामित्यर्हन्तस्तेभ्यो नम इति, बहुवचनमद्वैतोच्छेदेन बहुत्वख्यापनार्थम्, तथा कर्म्मारिहननात् 'अरिहंताणं'१'रुह जन्मनि'इति धातोः कर्मबीजाभावेन भवेऽप्ररोहणादरुहंताणमिति पाठत्रयम् । अथ नामादिचतुर्विधानप्यर्हतः सामान्यतो नमस्कृत्य, विशेषतो भावार्हतः पृथग् नमस्कर्त्तुमाह–भगवंताणमिति, "भगोऽर्क १ ज्ञान २ माहात्म्य ३ यशो ४ वैराग्य ५ मुक्तिषु ६ । रूप ७ वीर्य ८ प्रयत्ने ९ च्छा १० श्री ११ धर्म्मै १२ श्वर्य १३ योनिषु ॥ १ ॥" इत्यर्कयोनिवर्जद्वादशार्थभगयुक्तेभ्यः, तत्र यशस्वी शाश्वतवैरिणामहिमयूरादीनां वैरोपशमनात्, वैराग्यवान् "यदा मरुन्नरेन्द्रश्रीरत्वया नाथोपभुज्यते । यत्र तत्र रतिर्नाम, विरक्तत्वं तदापि ते ॥१॥" इत्युक्तेः २ वीर्यवानपरिमितबलवत्त्वात् ३ प्रयत्नः-तपःकर्म्मादावुत्साहः ४ इच्छाभावाज्जन्तूनामुद्दिधीर्षा ५ श्रीश्चतुस्त्रिंशदतिशयरूपा ६ ऐश्वर्यमनेकेन्द्रादिदेवकोटिसेव्यत्वं ७ ज्ञान ८ माहात्म्य ९ मुक्ति १० रूप ११ धर्म्म १२ वत्त्वं च प्रतीतमेव आइगराणमित्यादि आदिकरेभ्यः श्रुतधर्मस्यार्थापेक्षया नित्यत्वेऽपि

आयरियं वा जाव आहारित्तए, इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अण्णयरिं विगइं आहारित्तए तं एवइअं वा एवइक्खुत्तो वा ते य से वियरेज्जा, एवं से कप्पइ अन्नयरिं विगइं आहारित्तए, ते य से नो विअरेज्जा एवं से नो कप्पइ अन्नयरिं विगइं आहारित्तए, से किमाहु भंते! आयरिया पच्चवायं जाणंति ॥ ४८ ॥

व्याख्या—वासावासमित्यादितो जाणंति त्ति यावत्, तत्र एवइअं वा इयतीं वा एवइक्खुत्तो इति एतावतो वारान् अत्र प्रत्यपाया अस्या विकृतेर्ग्रहणेऽस्यायमपायो मोहोद्भवादिः ग्लानत्वादस्य गुणो वेति ॥ ४८ ॥

वासावासं प० भिक्खू इच्छिज्जा अन्नयरिं तेगिच्छिअं आउट्टित्तए तं चेव सव्वं भाणियव्वं ॥४९॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा अन्नयरं उरालं कल्लाणं सिवं धन्नं मंगल्लं सस्सिरीयं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहिरित्तए, तं चेव सव्वं भाणियव्वं ॥ ५० ॥ वासावासं प० भिक्खू इच्छिज्जा अपच्छिममारणंतिअसंलेहणाजूसणाझूसिए भत्तपाणपडिआइक्खिए पाओवगए कालं अणवकंखमाणे विहिरित्तए वा निक्खमित्तए वा पविसित्तए वा, असणं वा ४ आहारित्तए, उच्चारं वा पासवणं वा परिट्ठावित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए, नो से कप्पइ अणापुच्छित्ता, तं चेव ॥ ५१ ॥

शब्दापेक्षया स्वस्वतीर्थंच्यादिकरणात् । 'तीर्थकरेभ्यः' तीर्थं–सङ्घ आद्यगणधरो वा तत्करणात् । 'स्वयं सम्बुद्धेभ्यः' स्वयमेव–परोपदेशं विनैव सम्यक् तत्त्वावबोधात् । कुत एवं यतः 'पुरुषोत्तमेभ्यः' भगवन्तः संसारेऽपि वसन्तः सन्तः सदा परार्थकृतो गौणीभूतस्वार्था उचितक्रियोपेता अदैन्याः कृतज्ञा देवगुरुमहामानिनो गम्भीराशया इत्यादि गुणगणान्वितत्वात् । उत्तमत्वमेवोपमात्रयेणाह–'पुरुषसिंहेभ्यः' पुरुषाः सन्तः सिंहा इव कर्म्मारिष्वतिक्रूरत्वात् परीषहेषु सावज्ञत्वात् उपसर्गेभ्यो निर्भयत्वाच्च पुरुषसिंहास्तेभ्यः । 'पुरुषवरपुण्डरीकेभ्यः' पुण्डरीकाणि च—धवलकमलानि वराणि च तानि पुण्डरीकाणि च वरपुण्डरीकाणि पुरुषवरपुण्डरीकाणीव पुरुषवरपुण्डरीकाणि तेभ्यो, धवलकमलसदृशाश्च भगवन्तः कर्म्मपङ्के सम्भूता अपि दिव्यभोगजलेन वर्द्धितास्त्यक्त्वा चोभयं जगल्लक्ष्मीनिवासास्तिर्यङ्नरामरसेव्याश्च पुण्डरीकवद्वर्त्तन्ते, धवलता चामीषां सदाऽशुभमलरहितत्वादिति । एवं 'पुरुषवरगन्धहस्तिभ्यः' ईति-मारि-दुर्भिक्ष-परचक्रादिक्षुद्रगजानां भगवद्विहारपवनगन्धादेव भङ्गात्, न चामी पुरुषाणामेवोत्तमाः, किन्तु सकलजीवलोकस्यापीत्यत आह—'लोकोत्तमेभ्यो' लोकस्य–भव्यसङ्घातस्योत्तमाश्चतुस्त्रिंशदतिशयोपेतत्वात्, लोकोत्तमत्वमेवाह–'लोकनाथेभ्यः' लोकस्य–भव्यलोकस्य नाथा–योगक्षेमकारिणस्तत्राप्राप्तस्य सम्यग्दर्शनादेर्लम्भकत्वाद्योगकारित्वं, तस्यैव च प्राप्तस्य तत्तदुपद्रवाभावापादनेन पालकत्वात् क्षेमकारित्वमिति तेभ्यः । तात्त्विकं च नाथत्वं कथमित्याह–'लोकहितेभ्यः' लोकस्य–एकेन्द्रियादिप्राणिगणस्य पञ्चास्तिकायात्मकस्य वा तद्रक्षणप्रकर्षोपदेशेन सम्यक्प्ररूपणतश्च हिता–अनुकूलवृत्तयस्तेभ्यः । नाथत्वं हितत्वं च भव्यानां यथावस्थितवस्तुप्रदीपनेन स्यादित्याह–

केसरतमालपत्रमिश्रशर्कराक्वथितशीतलक्षीरलक्षणं समाधिपानकं पाययित्वा पूगफलादिद्रव्यैर्मधुरविरेचः कार्यते, निर्यामकास्तु उद्वर्त्तनाद्यर्थमष्टचत्वारिंशत्, परिट्ठावित्तए त्ति व्युत्स्रष्टुं धर्म्मजागरिकां–आज्ञा १ ऽपाय २ विपाक ३ संस्थानविचय ४ भेदधर्म्मध्यानविधानादिना जागरणं धर्म्मजागरिका तां जागरयितुं–अनुष्ठातुमिति ॥ ५१ ॥

वासावासं प० भिक्खू इच्छिज्जा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा अन्नयरं वा उवहिं आयावित्तए वा पयावित्तए वा नो से कप्पइ एगं वा अणेगं वा अप्पडिन्नवित्ता गाहावइकुलं भत्ता० पा० नि० प० असणं वा ४ आहारित्तए, बहिआ विहारभूमिं वा विआरभूमिं वा सज्झायं वा करित्तए काउस्सग्गं वा ठाणं वा ठाइत्तए, अत्थि अ इत्थ केइ अभिसमण्णागए अहासंनिहिए एगे वा अणेगे वा, कप्पइ से एवं वइत्तए इमं ता अज्जो! तुमं मुहुत्तगं जाणाहि जावताव अहं गाहावइकुलं जाव काउस्सग्गं वा ठाणं वा ठाइत्तए, से अ से पडिसुणिज्जा एवं से कप्पइ गाहावइ कुलं तं चेव सव्वं भाणियव्वं, से य से नो पडिसुणिज्जा एवं से नो कप्पइ गाहावइकुलं जाव काउस्सग्गं वा ठाणं वा ठाइत्तए ॥ ५२ ॥

व्याख्या—वासावासमित्यादितः ठाणं वा ठाइत्तए त्ति पर्यन्तम्, तत्र वत्थं वेत्यादि पादप्रोञ्छनं–रजोहरणं, आतापयितुं–एकवारमातपे दातुं, प्रतापयितुं–पुनः पुनः अनातापनाच्च कुत्सापनकादयो दोषाः, वस्त्राद्युपधावातपे

'लोकप्रदीपेभ्यः' लोकस्य–देशनायोग्यविशिष्टतिर्यग्नरामररूपस्योपदेशप्रभाभिर्मिथ्यात्वध्वान्तविध्वंसनेन पदार्थसार्थप्रकृष्टप्रकाशकत्वात् प्रदीपा इव प्रदीपा इति तेभ्यः । 'लोकप्रद्योतकरेभ्यः' लोकस्य—लोकालोकरूपस्य समस्तवस्त्वात्मकस्य केवलालोकपूर्वकप्रवचनमरीचिमण्डलप्रवर्त्तनेन प्रद्योतं–प्रकाशं कुर्वन्तीत्येवंशीला, यद्वा लोकस्य–उत्कृष्टमतेर्गणधरादिभव्यसत्त्वस्य प्रद्योतं–विशिष्टज्ञानशक्तिं तत्क्षणद्वादशाङ्गीविरचनानुमेयां कुर्वन्तीति लोकप्रद्योतकरास्तेभ्यः । अनयोश्च पूर्वोक्तयोर्द्वयोर्विशेषणयोर्द्रष्टदृश्यलोककृतो भेद इति । 'अभयदयेभ्यः' सप्तभयहरणादभयं दयन्ते इत्यभयदाः सप्त भयस्थानानि त्विमानि—"इह १ परलोका २ दाण ३ मकम्हा ४ आजीवि ५ मरण ६ मसिलोगा ७ । सत्तभयट्ठाणाइं, जिणेहिं सिद्धंतभणिआइं ॥ १ ॥" अथवा प्राणान्तिकोपसर्गकारिष्वपि न भयं दयंतेऽथवाऽभया–सर्वप्राणिभयत्यागवती दया–कृपा येषां ते तथा तेभ्यः । अथ च यथाऽनर्थत्यागकारिणोऽमी तथाऽर्थप्रापका अपीत्याह—'चक्षुर्दयेभ्यः' चक्षुरिव चक्षुः–शुभाशुभार्थविभागोपदर्शकत्वात् श्रुतज्ञानं तद्दयन्त इति चक्षुर्दयास्तेभ्यः । यथा हि किल लोके कान्तारगतानां चौरैश्चक्षुर्बद्ध्वा विलुप्तधनानां जनानां कश्चित् चक्षुर्दत्त्वेप्सितमार्गप्रदर्शनेनोपकारी स्यादेवमेतेऽपि भगवन्तः संसारकान्तारान्तर्गतानां कुवासनया सद्ज्ञानचक्षुराच्छाद्य रागादिचौरैर्विलुप्तधर्मधनानां श्रुतचक्षुर्दत्त्वा निर्वाणमार्गं प्रापयन्त उपकारिणो भवेयुरिति दर्शयन्नाह—'मार्गदयेभ्यः' मार्गं–सम्यग्दर्शनादिकं मुक्तिपथं दयंते इति मार्गदयास्तेभ्यः । अथ यथा चक्षुरुद्घाट्य दर्शयित्वा च मार्गं तान्निरुपद्रवमास्पदं प्रापयन् परमोपकारी स्यादेवमेतेऽपीत्याह–'शरणदयेभ्यः' शरणं—त्राणं नानाविधोपद्रवोपद्रुतानां रक्षास्पदं निर्वाणरूपं तद्-

वा २ तओ मत्तगाइं गिन्हित्तए १ तं जहा—उच्चारमत्तए १, पासवणमत्तए २, खेलमत्तए ३ ॥ ५६ ॥

व्याख्या—वासावासमित्यादितः खेलमत्तए त्ति यावत् सूत्रद्वयी, तत्र तओ उच्चारपासवणभूमीओ त्ति अनधिसहिष्णोस्तिस्रोऽन्तः अधिसहिष्णोश्च बहिस्तिस्रः दूरव्याघाते मध्या भूमिस्तद्व्याघाते त्वासन्नेति आसन्नमध्यदूरभेदात् तिस्रः ग्रीष्मेति प्राग्वत् । ओसन्नमित्यादि ओसन्नं ति प्रायेण—बाहुल्येनेत्यर्थः, प्राणाश्च शङ्खनकेन्द्रगोपककुम्थ्यादयः, तृणानि—प्रतीतानि, बीजानि—तत्तद्वनस्पतीनां नवोद्भिन्नकिशलयानि, पनका—उल्लयः, हरितानि—बीजेभ्यो जातानि, अथवा पाणायतणा य त्ति प्राणानां—जीवानामायतनानि स्थानभूतानि बीजानि पनका हरितानि चेति योज्यम्, क्वचित्पाणायतण त्ति पाठस्तत्र प्राणायतनमित्यादि व्याख्येयम् तओ मत्तगाइं ति त्रीणि मात्रकाणि तदभावे वेलातिक्रमणे वेगधारणे आत्मविराधना वर्षति च बहिर्गमने संयमविराधना । अत्र चूर्णिः—'वाहिं नेतस्स गुम्मिआइगहणं तेण मत्तए वोसिरित्ता वाहिं णित्ता परिट्ठवेइ, पासवणे वि अभिग्गहिओ धरेइ तस्सासइ जो जाहे वोसिरइ सो ताहे धारेइ ण निक्खिवइ सुवंतो वा उच्छंगे ठितयं चेव उवरिं दंडए वा दोरेणं बंधइ गोसे असंसत्तिआए भूमीए अन्नत्थ परिट्ठवेइ' त्ति ॥ ५५ ॥ ५६ ॥

वासावासं प० नो कप्पइ निग्गंथाण वा २ परं पज्जोसवणाओ गोलोमप्पमाणमित्ते वि केसे

यन्त इति शरणदयास्तेभ्यः । यथा हि लोके चक्षुरादिदानाद्दुःस्थानां जीवितद इत्यभिधीयते तथैतेऽपीत्याह—'जीवदयेभ्यः' जीवनं जीवो–भावप्राणधारणममरणं तं दयन्ते इति, यद्वा जीवेषु दया येषामिति जीवदयास्तेभ्यः । क्वचित् 'बोहिदयाणं' इति पाठस्तत्र बोधिः—तत्त्वार्थरुचिरूपा जिनोक्तधर्म्मावाप्तिस्तां दयन्त इति । अनन्तरोक्तं विशेषणकदम्बकं च भगवतां धर्म्मात्मकतया सम्पन्नमित्येतदेवाह—'धर्म्मदयेभ्यः' धर्म्मं–देशसर्वचारित्ररूपं दयन्ते इति धर्म्मदयास्तेभ्यः । यथा च धर्म्मदयत्वं तथाऽऽह—'धर्मदेशकेभ्यः' धर्म्मं–पूर्वोक्तप्रकारं यथाभव्यमवन्ध्यदेशनातो देशयन्तीति धर्मदेशकास्तेभ्यः । धर्म्मदेशकत्वं चैतेषां धर्म्मस्वामित्वे सति न पुनर्नटवदिति दर्शयन्नाह—'धर्म्मनायकेभ्यः' धर्म्मस्य—क्षायिकज्ञानादेस्तद्वशीकारात्तत्फलप्रकर्षपरिभोगाच्च नायकास्तेभ्यः । 'धर्म्मसारथिभ्यो' धर्म्मरथस्य सारथय इव यथा च किल सारथी रथं रथिकमश्वांश्च सम्यक् प्रवर्त्तयति रक्षति च एवं भगवन्तोऽपि संयमात्मप्रवचनाख्यानां चारित्रधर्म्माङ्गानां रक्षोपदेशदानादिना धर्म्मसारथयः स्युः, धर्म्मसारथिकतायां सम्प्रदायस्त्वेवम्—

एकदा श्रीमहावीरप्रभुः पृथिव्यां विहरन् राजगृहपुराद्बहिरुद्याने समवसृतः । तत्र च श्रेणिकधारिण्योर्मेघकुमारनामा नन्दनश्चन्दनप्रतिमया प्रभोर्गिरा संसाराद्विरक्तोऽष्टौ प्रियाः परित्यज्य प्रव्रजितः । प्रभुणा च ग्रहणासेवनादिशिक्षार्थं स्थविराणामर्पितस्तत्र च निर्गच्छदागच्छदनेकवाचंयमचरणप्रमार्जनरेणुगुण्डितगात्रस्तस्यां रजन्यां क्षणमात्रमपि निद्रामप्राप्नुवन्, "क्व मे सुखावासे कुसुमशय्याशयनं ? क्व चास्यां दुःखावासवसतौ भूस्रस्तरे लुठनं ?" इति वैसदृश्येनोपमयन् "इत्थं कदर्थनां सोढुमशक्तोऽहमिति प्रातः प्रभुमापृच्छ्य पुनरपि गृहिभावमाश्रयिष्ये," इति

वा तस्स केशाः कर्त्तर्या कर्त्तनीयाः । पक्खिआ आरोवण त्ति पाक्षिकं बन्धदानं संस्तारकदवरकाणां पक्षे पक्षे बन्धा मोक्तव्याः प्रतिलेखितव्याश्चेत्यर्थः, अथवाऽऽरोपणाप्रायश्चित्तं पक्षे पक्षे ग्राह्यं सर्वकालं वर्षासु विशेषतः । मासिए खुरमुंडे त्ति मासि मासि असहिष्णुना मुण्डनं कारणीयम्, अद्धमासिए कत्तरिमुंडे त्ति यदि कर्त्तर्या कारयति तदा पक्षे पक्षे गुप्तं कारणीयं, क्षुरकर्त्तर्योश्च लोचे प्रायश्चित्तं निशीथोक्तं यथासङ्ख्यं लघुगुरुमासलक्षणं ज्ञेयम् । छम्मासिए लोए त्ति षाण्मासिको लोचः, संवच्छरिए थेरकप्पे त्ति स्थविराणां–वृद्धानां जराजर्जरत्वेनासामर्थ्यात् दृष्टिरक्षार्थं वा अर्थात्तरुणानां चातुर्मासिकः, अत्र संवत्सरो–वर्षारात्रः 'संवच्छरं वा वि परं पमाणं बीअं च वासं न तहिं वसिज्ज'त्ति वचनात् ततः संवत्सरे–वर्षासु भवः सांवत्सरिको वा लोचः स्थविरकल्पे स्थविरकल्पस्थितानां ध्रुवो लोच इति, वाशब्दो विकल्पार्थः अपवादतो नित्यलोचाकरणेऽपि पर्युषणापर्वण्यवश्यं लोचः कार्य इति सूचयति, अथवा एष सर्वोऽप्युक्तविधिरापृच्छय भिक्षाचर्यागमनविकृतिग्रहणादिर्मात्रकावसानः सांवत्सरिको–वर्षाकालसम्बन्धी स्थविरकल्पः–स्थविरमर्यादा वाशब्दः किञ्चिज्जिनकल्पिकानामपि सामान्यमिति सूचयति प्रायः स्थविराणामेवायं कल्प इत्यर्थः ॥ ५७ ॥

वासावासं प० नो निग्गंथाण वा २ परं पज्जोसवणाओ अहिगरणं वइत्तए, जे णं निग्गंथो वा २ परं पज्जोसवणाओ अहिगरणं वयइ से णं अकप्पेणं अज्जो वयसीति वत्तव्वं सिया, जे णं निग्गंथो वा २ परं पज्जोसवणाओ अहिगरणं वयइ से निज्जूहियव्वे सिया ॥ ५८ ॥

ध्यात्वोद्गते सूरे प्रभोरन्तिकमागत्य प्रभुं प्रणतः, प्रभुणा च प्रथमत एवामृततिरस्कारिण्या वाण्या वादितः—"हे वत्स !
निर्गच्छदागच्छत्साधुभिर्घट्टितोऽपि किं दुर्ध्यातवान्?, यतः—"को चक्कवट्टिरिद्धिं, चइउं दासत्तणं समभिलसइ।
को वररयणाइं मोत्तुं, परिगिण्हइ उवलखण्डाइं ॥ १ ॥ नेरइयाण वि दुक्खं, झिज्जइ कालेण किं पुण नराणं। ता
न चिरं तुह होही, दुक्खमिणं मा समुव्वियसु ॥ २ ॥ जीअं जलविंदुसमं, संपत्तीओ तरंगलोलाओ। सुविणयसमं
च पेमं, जं जाणसु तं करिज्जासु ॥ ३ ॥ वरमग्गिंमि पवेसो, वरं विसुद्धेण कम्मुणा मरणं। मा गहिअव्वयभंगो, मा
जीअं खलिअसीलस्स ॥ ४ ॥" इत्यादिकमुपदिश्य भगवानेव प्राग्भवौ स्मारयति हे मेघ! तावकीनावेव प्राग्भवौ
श्रवणगोचरीकुरु। यत्त्वं साम्प्रतीनादितो भवात्तृतीयभवे वैताढ्यभूमौ श्वेतः षड्रदः सहस्रहस्तिनीशः सुमेरुप्रभनामा
हस्त्यभूः। अन्यदा च ग्रीष्मे दवाद्भीतः हस्तिनीर्जवाद्विहाय तृषितो धावमानः पङ्किलमेकं सरः प्राविशस्तत्र चाप्राप्त-
पयाः पङ्क एव निमग्नः, प्रत्यर्थिदन्तिना दन्ताभ्यां विद्धो महाव्यथां सहमानः सप्त दिनान्यस्थाः, एवं विंशत्युत्तरश-
तमायुः परिपाल्य मृत्वा च विन्ध्यभूमौ सप्तहस्तिनीशतनायको रक्तश्चतुर्दन्तो दन्ती समुत्पेदिवान्। एकदा च तथैव
दवं वीक्ष्य जातजातिस्मृतिर्वर्षारात्रादिमध्यान्ते सपरिवारः समूलं वल्ल्याद्युन्मूल्य योजनमानं स्थण्डिलं निर्मितवान्।
अन्यदा दवाद्भीतः सन् प्रागुक्ते सत्त्वसङ्कुले स्थण्डिले गत्वा सत्त्वरं प्रविष्टः संलीनाङ्गः स्थितोऽपि गात्रकण्डूयने-
च्छया पादमेकमुत्क्षिप्तवान्, तत्र भूम्यामन्यत्रानवाप्तावकाशः शशकः प्राविशत्। वपुः कण्डूयित्वा पादमधो मुञ्चन्
शशकमालोक्य तदनुकम्पया सशङ्कः सार्द्धदिनद्वयं तदवस्थ एव स्थितवान्। शान्ते च दवे प्रचलिते च शशके गिरेः

शारीरमानसानामन्तं–विनाशं कुर्वन्तीति, उत्तमयाऽनुपालनया द्वितीयभवे, मध्यमयाऽप्यनुपालनया तु तृतीयभवे, जघन्ययाऽप्यनुपालनया ससाष्टौ वा भवग्रहणानि नातिक्रामन्ति ॥ ६३ ॥ न चैतत्स्वमनीषिकयोच्यते–किन्तु भगवदुपदेशपारतन्त्र्येणेत्याह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे रायगिहे नगरे गुणसिलए चेइए बहूणं समणाणं बहूणं समणीणं बहूणं सावयाणं बहूणं सावियाणं बहूणं देवाणं बहूणं देवीणं मज्झगए चेव एवमाइक्खइ, एवं भासइ, एवं पण्णवेइ, एवं परूवेइ, पज्जोसवणाकप्पो नाम अज्झयणं सअट्ठं सहेउयं सकारणं ससुत्तं सअट्ठं सउभयं सवागरणं भुज्जो भुज्जो उवदंसेइ त्ति बेमि ॥ ६४ ॥

इति पज्जोसवणाकप्पो नाम दसासुअक्खंधस्स अट्ठमं अज्झयणं सम्मत्तं ॥

व्याख्या—तेणं कालेणमित्यादितो बेमि त्ति यावत्, तत्र तस्मिन् काले–चतुर्थारकप्रान्ते तस्मिन् समये–राजगृहसमवसरणावसरे मध्यगतः–श्रमणादिदेव्यन्तपरिपन्मध्यवर्त्ती चेव त्ति अवधारणे मध्यगत एव न पुनरेकान्ते, अनेनोद्धाव्य शिर इत्युक्तम्, क्वचिच्च सदेवमणुआसुराए परिसाए मज्झगए इति पाठस्तत्र परि–सर्वतः सीदतीति परिषत् परिषद्ग्रहणात्समवसरणे गृहिणामपि कथ्यते इत्युक्तं, एवमाख्याति–यथोक्तं कथयति, एवं भाषते–वाग्योगेन,

कूटमिव त्वं भूमावपतस्ततो दिनत्रयं क्षुत्तृड्बाधितोऽपि कृपापरः शतमेकमब्दानामायुः परिपाल्यात्र श्रेणिकधारिण्योः पुत्रत्वेनोत्पन्नः। तदानीं त्वज्ञेनापि त्वया कृपापरतया मनागपि व्यथा नागण्यत, इदानीं तु जगद्वन्द्यैः साधुभिर्घट्यमानोऽपि दूयसे ?," इति स्वाम्युक्तं श्रुत्वा स्मृत्वा च पूर्वभवौ पुनरायातसंवेगः प्रभुं प्रणम्याभ्यधात्—"हे वीर! चिरं जीयाः यदेवं मामुत्पथप्रस्थितं रथ्यौ सुसारथिरिव पुनः पन्थानमानीतवान्। अतः प्रभृत्यमीषां पादरजोऽपि वन्द्यं मे, आस्तामन्यत्, नेत्रे विमुच्य शरीरमपि व्युत्सृष्टं, कुर्वतां संघट्टादिकं शरीरे न मनागपि दूष्याम्यहमित्यत्रार्थेऽभिग्रहो भवतु"। इत्येवं स्थिरीकृतो मेघस्तीव्रं तपस्तप्त्वा मासिकीं च संलेखनां कृत्वा विजयविमाने देवोऽजनि। ततश्च्युतो महाविदेहे सेत्स्यतीति, तदेवं भगवन्तो धर्मसारथयः। इतिमेघकुमारनिदर्शनम् ॥

'धर्म्मवरचातुरन्तचक्रवर्तिभ्यः' त्रयः समुद्राश्चतुर्थो हिमवानिति चत्वारः क्षितेरन्तास्तेषु प्रभुतया भवा इति चातुरन्तास्ते च ते चक्रवर्त्तिनश्च चातुरन्तचक्रवर्त्तिनः धर्मेषु वराः—श्रेष्ठास्तेषु चातुरन्तचक्रवर्त्तिन इव धर्मवरचातुरन्तचक्रवर्त्तिनः, यथा हि पृथिव्यां शेषराजातिशायिनश्चातुरन्तचक्रवर्त्तिनो भवन्त्येवं भगवन्तोऽपि धर्म्मवरेषु शेषप्रणेतृषु सातिशयाः प्रोच्यन्त इति तेभ्यः, यद्वाऽन्यकुतीर्थिकापेक्षया धर्मवरेण नरकादिचतुर्गत्यन्तकरणाच्चतुरन्तेन मिथ्यात्वादिरिपुच्छेदकत्वाच्चक्रेणेव वर्त्तितुं शीलं येषां ते तथा तेभ्यः। दीवोत्ताणमित्यादि, अत्र च प्रथमा चतुर्थ्यर्थे षष्ठ्यर्थतया योज्या, तत्र दीपः समस्तार्थप्रकाशकत्वाद्दीप इव, दुःस्थितस्य संसारसागरान्तर्वर्त्तिप्राणिगणस्याश्वासहेतुत्वाद् द्वीप इव वा अनर्थप्रतिहननहेतुत्वात्त्राणं, अर्थसम्पादनहेतुत्वाच्च शरणं। गम्यते सुस्थित्यर्थं दुःस्थितैराश्रीयत इति

साद्यनन्तत्वात् अक्षतं वा परिपूर्णत्वात्, अव्याबाधं परेषां पीडाकारित्वाभावात्, अपुनरावृत्ति पुनर्भवेऽनवतारात्, सिद्धिः—लोकान्तक्षेत्ररूपा सा चासौ गतिश्च सैव नामधेयमभिधा यस्य ईदृशं स्थानं व्यवहारतः सिद्धिक्षेत्रं, निश्चयतो यथावस्थितमात्मस्वरूपं सम्यग् अशेषकर्म्मविच्युतेः प्राप्ताः संप्राप्तास्तेभ्यः । जीवस्वरूपविशेषणान्यपीमानि उपचाराल्लोकाग्रे ज्ञेयानि । आद्यन्तकृतो नमस्कारो मध्यव्यापीत्यतोऽन्ते नमो जिनेभ्य इत्युक्तमिति । जितभयेभ्यः—क्षपितभयेभ्यः, न चात्र पौनरुक्त्यम्, यतः—"सज्झायझाणतवओ–सहेसु उवएसथुइपयाणेसु । संतगुणकित्तणेसु अ, न हुंति पुणरुत्तदोसाओ ॥ १ ॥" त्ति, अनेन जिनजन्मादिषु शक्रः स्तौतीति शक्रस्तव इत्यभिधीयत इति । एवं सर्वान् भावार्हतः स्तुत्वा पुनरधिकृतं वीरं स्तौति । 'नमोत्थु णं समणस्सेत्यादिना जाव संपाविउकामस्स त्ति' यावत्करणात् 'सयंसंबुद्धस्स' इत्यादि सिद्धिगइनामधेअं ठाणमित्यन्तं दृश्यम् । यद्यपि भगवतः सर्वत्र निःस्पृहत्वात् सिद्धिगतौ कामो नास्ति, तथापि तदनुरूपचेष्टनात् सम्प्राप्तुकाम इव तस्याप्राप्तस्येत्यर्थः । तत्र—ब्राह्मणकुण्डग्रामे देवानन्दाकुक्षौ स्थितं इह—सौधर्मदेवलोकस्थितोऽहं यतः—पश्यति मां भगवान् तत्र गत इह गतं ज्ञानेनेति शेष इति कृत्वा इति हेतोः 'पासउ' इति पाठे पश्यतु मामिति, पुरत्थेत्यादि, पूर्वाभिमुखो निषण्ण—उपविष्टः अयमेतद्रूपः सङ्कल्पः समुदपद्यत, आत्मन्यधि अध्यात्मं तत्र भव आध्यात्मिक आत्मविषय इत्यर्थः, चिन्ता सञ्जाताऽस्मिन्निति चिन्तितः चिन्तात्मको, न ध्यानात्मकः, प्रार्थनं प्रार्थः स सञ्जातोऽस्मिन्निति प्रार्थितोऽभिलाषात्मकः मनोगतो वाचा न प्रकाशितः ॥१६॥

न खलु एअं भूअं, न एअं भव्वं, न एअं भविस्सं, जन्नं अरहंता वा चक्कवट्टी वा बलदेवा

वा वासुदेवा वा अंतकुलेसु वा पंतकुलेसु वा तुच्छकुलेसु वा दरिद्दकुलेसु वा किवणकुलेसु वा
भिक्खायरकुलेसु वा माहणकुलेसु वा, आयाइंसु वा, आयाइंति वा, आयाइस्संति वा ॥ १७ ॥

व्याख्या—'न खलु एअं भूअमित्यादित आयाइस्संति वेति' यावत्, [तत्र त्रिषष्टिः शलाकापुरुषाः एतेषु कुलेषु न आयान्ति नागच्छन् नागमिष्यन्ति च ] अन्त्यकुलेषु–जघन्यकुलेषु अन्त्यवर्णत्वात् शूद्रकुलेषु वा, प्रान्तकुलेषु–अधमकुलेषु, तुच्छकुलेषु–अल्पकुटुम्बेष्वल्पर्द्धिषु वा, दरिद्रकुलेषु–सर्वथा निर्धनकुलेषु। कृपणाः–किराटादयः, भिक्षाचराः–तालाचराद्या, ब्राह्मणा–धिग्जातयः। आयासिषुः–जज्ञिरे, आयान्ति–जायन्ते, आयास्यन्ति–जनिष्यन्ति ॥१७॥

एवं खलु अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, उग्गकुलेसु वा भोगकुलेसु वा राइन्नकुलेसु वा इक्खागकुलेसु वा खत्तियकुलेसु वा हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु वा विसुद्धजाइकुलवंसेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा ॥ १८ ॥

व्याख्या—'एवं खलिवत्यादित आयाइस्संति वेति' यावत्तत्र उग्रा–आदिदेवेनारक्षकतया ये नियुक्ता, भोगा–गुरुतया ये व्यवहृता, राजन्या–ये वयस्यतया स्थापिता, इक्ष्वाकव–आद्यवंश्याः, क्षत्रिया–ये शेषप्रकृतितया स्थापिता राजकुलीना, हरिवंशो–हरिवर्षक्षेत्रानीतयुगलोद्भव इति, अन्यतरेष्विति ज्ञातमल्लकिलेच्छकिकौरव्यादिकुलेषु, तत्र ज्ञाता–श्रीऋषभस्वजनवंशजा इक्ष्वाकुवंशजा एव, मल्लकिनो लेच्छकिनश्च राजविशेषाः, कौरव्यास्तेभ्योऽपि विशिष्टाः कुरुवंशजाः

१ अयं पाठो बहुष्वादर्शेषु न दृश्यते, उपयुक्तश्च प्रतिभाति

'विसुद्धजाइकुलवंसेसु त्ति' जातिः—मातृपक्षः कुलं-पितृसमुत्थं विशुद्धे जातिकुले येषु ते च ते वंशाः—पुरुषान्वयाश्च तेषु १८

अत्थि पुण एसे वि भावे लोगच्छेरयभूए अणंताहिं उस्सप्पिणीओसप्पिणीहिं विइक्कंताहिं समुप्पज्जइ । १०० । नामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइअस्स अणिज्जिण्णस्स उदएणं जन्नं अरहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा, अंतकुलेसु वा पंतकुलेसु वा तुच्छदरिद्दभिक्खागकिविणमाहणकुलेसु वा, आयाइंसु वा आयाइंति वा आयाइस्संति वा, कुच्छिंसि गब्भत्ताए वक्कमिंसु वा वक्कमंति वा वक्कमिस्संति वा, नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमन्ति वा निक्खमिस्संति वा, ॥ १९ ॥

व्याख्या—'अत्थि पुण एसे इत्यादितो निक्खमिस्संति वेति' यावत्, तत्र अस्ति पुनरयमपि भावो भवितव्यताख्यो लोकाश्चर्यभूतः पदार्थः कदाचित्समुत्पद्यते । आश्चर्याणि चास्यामवसर्पिण्यां दश जातानि, तथाहि—

"उवसग्ग १ गब्भहरणं २, इत्थीतित्थं ३ अभाविआ परिसा ४ । कण्हस्स अवरकंका ५, अवयरणं चंदसूराणं ६ ॥ १ ॥ हरिवंसकुलुप्पत्ती ७, चमरुप्पाओ ८ अ अट्ठसयसिद्धा ९ । अस्संजयाण पूआ १०, दस वि अणंतेण कालेण ॥ २ ॥"

व्याख्या—उपसृज्यते—च्याव्यते प्राणी धर्मादेभिरित्युपसर्गा—देवादिकृतोपद्रवास्ते च भगवतो महावीरस्य छद्म-

स्थावस्थायां भूयांसोऽग्रे वक्ष्यमाणलक्षणा बभूवुः । केवल्यवस्थायामपि नमन्निखिलनरनाकिनिकायनायकस्यापि जघन्य-
तोऽपि कोटिसङ्ख्यभक्तिभरनिर्भरामरपद्पदपटलजुष्टपदपद्मस्यापि विविधर्द्धिलब्धिमद्वरविनेयसहस्रपरिवृतस्यापि स्व-
भावप्रशमितयोजनशतमध्यगतवैरमारिविड्वरदुर्भिक्षाद्युपद्रवस्याप्यनुत्तरपुण्यसंभारस्यापि मनुष्यमात्रेणापि चिरपरि-
चितेनापि शिष्याभासेनापि गोशालकेन कृत उपसर्गः । इदं च किल न कदाचिद् भूतपूर्वं, तीर्थङ्करा हि अनुत्तरपुण्य-
सम्भारतया नोपसर्गभाजनमपि तु सकलनरामरतिरश्चां सत्कारादिस्थानमेवेत्यनन्तकालभाव्ययमर्थो लोकेऽद्भुतभूत
इति । तत्र केवल्यवस्थायां गोशालककृतोपसर्गो यथा—एकदा श्रीमहावीरः श्रावस्त्यां विहरति स्म गोशालकश्च,
तत्र च गौतमस्वामी गोचरगतो बहुजनशब्दमश्रौषीद्यथा श्रावस्त्यां द्वौ जिनौ सर्वज्ञौ महावीरो गोशालकश्च, ततो
भगवदन्तिकमागत्य गौतमो गोशालकोत्थानं पृष्टवान् । भगवांश्चोवाच यथा—'अयं मङ्खलिनाम्नो मङ्खस्य सुभद्राभिधा-
नाया भार्यायाः पुत्रः शरवणग्रामे गोबहुलब्राह्मणगोशालायां सञ्जातः । षड्वर्षाणि च छद्मस्थेन मया सार्द्धं विहृतोऽस्मत्त
एव बहुश्रुतीभूत इति नायं जिनो नापि सर्वज्ञः ।' इदं च भगवद्वचनमाकर्ण्य बहुजनो नगर्यास्त्रिकचतुष्कादिषु परस्परं
कथयामास—'गोशालको मङ्खलिपुत्रो न जिनो नापि सर्वज्ञः' इतिलोकोक्तिमाकर्ण्य गोशालकः कुपितः सन्नान-
न्दाभिधानं भगवदन्तेवासिनं गोचरगतमपश्यत्तमवादीच्च—"भो ! आनन्द ! एहि, तावदेकमौपम्यं निशामय, यथा—
किल केचन वणिजोऽर्थार्थिनो विविधपण्यभृतशकटा देशान्तरं गच्छन्तो महाटवीं प्रविष्टाः पिपासितास्तत्र जलं
गवेषयन्तश्चत्वारि वल्मीकशिखराणि शाड्वलवृक्षकक्षान्तरद्राक्षुः । क्षिप्रं चैकं विचिक्षिपुस्ततो विपुलजलमवापुः, ततो

यावत्पिपासमापीतवन्तस्तेन पयसा पयःपात्राणि च परिपूरयामासुः । ततोऽपायसम्भाविना वृद्धेन निवार्यमाणा अप्यतिलोभाद् द्वितीयतृतीयशिखरे विभिदुस्तयोश्च क्रमेण सुवर्णं रत्नानि च समासादयामासुः । पुनस्तथैव चतुर्थं भिन्दाना अतिघोरविषमतिकायमञ्जनपुञ्जतेजसमतिचञ्चलजिह्वायुगलमनाकलनीयकोपप्रसरमहीश्वरं सङ्घट्टितवन्तः, ततोऽसौ कोपाद्वल्मीकशिखरमारुह्य मार्त्तण्डमण्डलमवलोक्य निर्निमेषया दृष्ट्या समन्तादवलोकयंस्तान् भस्मसाच्चकार । तन्निवारकवृद्धवाणिजकं तु न्यायदर्शीत्यनुकम्पया वनदेवता स्वस्थानं सञ्जहारेति । एवं त्वदीयधर्माचार्यमात्मीयसम्पदाऽपरितुष्टमसदवर्णवादविधायिनमहं स्वकीयेन तपसाऽद्यैव भस्मसात्करिष्यामीत्येप प्रचलितोऽहं त्वं तु तस्येममर्थमावेदय, भवन्तं च वृद्धवणिजमिव न्यायदर्शित्वाद्रक्षिष्यामि" । इति श्रुत्वाऽसावानन्दमुनिर्भीतो भगवदन्तिकमुपागत्य तं सर्वमावेदयत् । भगवताऽप्यसावभिहितः—'एप आगच्छति गोशालकस्ततः साधवः शीघ्रमितोऽपसरन्तु प्रेरणां च तस्मै कश्चिदपि मादादिति गौतमादीनां निवेदयेति" । ततस्तैस्तथैव कृते गोशालक आगत्य भगवन्तं प्रत्यभिदधौ—'शोभनमायुष्मन् ! काश्यप ! मामेवं वदसि गोशालको मङ्खलिपुत्रोऽयमित्यादि, योऽसौ गोशालकस्तवान्तेवासी स देवभूयं गतः, अहं त्वन्य एव तच्छरीरकं परीषहसहनसमर्थमास्थाय वर्त्ते' इत्यादिकं कल्पितं वस्तूद्ग्राहयन् तत्प्रेरणाप्रवृत्तयोर्द्वयोः साध्वोः सर्वानुभूतिसुनक्षत्रनाम्नोस्तेन तेजसा दग्धयोर्भगवताऽभिहितो—'हे गोशालक ! कश्चिच्चौरो ग्रामेयकैः प्रारभ्यमाणस्तथाविधदुर्गमलभमानोऽङ्गुल्या तृणेन वात्मानमावृण्वन्नावृतः किं भवति? अनावृत एवासौ, एवं त्वमप्यन्यथा जल्पनेनात्मानमाच्छादयन् किमाच्छादितो भवसि? स एव त्वं गोशालको यो मया

वहुश्रुतीकृतस्तदेवं मावोचः" । एवं भगवतः समभावतया यथावद्ब्रुवाणस्य तपस्तेजोऽसौ कोपाग्निससर्ज, उच्चावचा-
क्रोशैश्चाक्रोशयामास । तत्तेजश्च भगवत्यप्रभवत्तं प्रदक्षिणीकृत्य गोशालकशरीरमेवानुतापयदनुप्रविवेश, तेन च
दग्धशरीरोऽसौ दर्शितानेकविक्रियः सप्तमरात्रौ कालमकार्षीदिति १ । तथा गर्भस्य—उदरसत्त्वस्य हरणं—उदरान्तरस-
ङ्क्रामणं गर्भहरणमेतदपि तीर्थकरापेक्षयाऽभूतपूर्वं सद् भगवतो महावीरस्य जातमित्यनन्तकालभावित्वादाश्चर्यमेवेति
२ । तथा स्त्री—योषित्तस्यास्तीर्थकरत्वेनोत्पन्नायास्तीर्थं—द्वादशाङ्गं सङ्घो वा स्त्रीतीर्थं, तीर्थं हि पुरुषसिंहाः पुरुषवर-
गन्धहस्तिनस्त्रिभुवनेऽप्यव्याहतप्रभुभावाः प्रवर्त्तयन्ति । इह त्ववसर्प्पिण्यां मिथिलानगरीपतेः कुम्भकमहाराजस्य
दुहिता मल्ल्यभिधाना एकोनविंशतितमतीर्थकरस्थानोत्पन्ना तीर्थं प्रवर्त्तितवतीत्यनन्तकालजातत्वादस्य भावस्याश्चर्य-
तेति ३ । 'अभाविआ परिस त्ति' अभव्या—अयोग्या चारित्रधर्म्मस्य पर्षत्—तीर्थकरसमवसरणश्रोतृलोकः । श्रूयते हि
भगवतो वर्द्धमानस्य जृम्भिकग्रामाद्बहिरुत्पन्नकेवलस्य तदनन्तरमिलितचतुर्विधदेवनिकायविरचितसमवसरणस्य भ-
क्तिकुतूहलाकृष्टसमायातानेकनरामरविशिष्टतिरश्चां स्वस्वभाषानुसारिणाऽतिमनोहारिणा महाध्वनिना कल्पपरिपाल-
नयैव धर्म्मकथा बभूव, यतो न केनापि तत्र विरतिः प्रतिपन्ना, न चैतदपि कस्यापि तीर्थकृतो भूतपूर्वमितीदमा-
श्चर्यमिति ४ । तथा कृष्णस्य नवमवासुदेवस्य अपरकङ्का राजधानी गतिविषया जाताऽप्यजातपूर्वत्वादाश्चर्यम् । श्रूयते
हि पाण्डवभार्या द्रौपदी धातकीखण्डभरतक्षेत्रापरकङ्काराजधानीनिवासिपद्मराजेन देवसामर्थ्येनापहृता । द्वारवती-
वास्तव्यश्च कृष्णवासुदेवो नारदादुपलब्धतद्व्यतिकरः समाराधितसुस्थिताभिधानलवणसमुद्राधिपतिदेवः पञ्चभिः

पाण्डवैः सह द्वियोजनलक्षप्रमाणजलनिधिमतिक्रम्य पद्मराजं रणविमर्देन विजित्य द्रौपदीमानीतवान्। तत्र च कपिलनामा वासुदेवो मुनिसुव्रताभिधानतत्रत्यजिनात् कृष्णवासुदेवागमनवार्त्तामुपलभ्य सबहुमानं कृष्णदर्शनार्थमागतः, कृष्णश्च तदा समुद्रमुल्लङ्घयति स्म, ततस्तेन शङ्खः पूरितः, कृष्णेनापि तथैव, ततः परस्परं शङ्खशब्दश्रवणमजायतेति ५। तथा भगवतो महावीरस्य वन्दनार्थमवतरणमाकाशात्समवसरणभूम्यां चन्द्रसूर्ययोः शाश्वतविमानोपेतयोर्बभूवेदमप्याश्चर्यमेवेति ६। तथा हरेः—पुरुषविशेषस्य वंशः—पुत्रपौत्रादिपरम्परा हरिवंशस्तल्लक्षणं यत्कुलं तस्योत्पत्तिः। कुलं ह्यनेकधाऽतो हरिवंशेन विशिष्यते एतदप्याश्चर्यमेवेति। श्रूयते हि भरतक्षेत्रापेक्षया यत्तृतीयं हरिवर्षाख्यं मिथुनकक्षेत्रं ततः केनापि पूर्वविरोधिना व्यन्तरामरेण मिथुनकमेकं भरतक्षेत्रे क्षिप्तं, तच्च पुण्यानुभावाद्राज्यं प्राप्तं, ततो हरिवर्षजात् हरिनाम्नः पुरुषाद्यो वंशः स तथेति ७। तथा चमरस्य—असुरकुमारराजस्योत्पातः—ऊर्द्धगमनं चमरोत्पातः, सोऽप्याकस्मिकत्वादाश्चर्यमिति। श्रूयते हि चमरचञ्चाराजधानीनिवासी चमरेन्द्रोऽभिनवोत्पन्नः सन् ऊर्द्धमवधिनाऽऽलोकयामास, ततः स्वशीर्षोपरि सौधर्मव्यवस्थितं शक्रं ददर्श, ततो मत्सराध्मातः शक्रतिरस्काराहितमतिरिहागत्य भगवन्तं महावीरं छद्मस्थावस्थायामेकरात्रिकीं प्रतिमां प्रतिपन्नं सुसुमारनगरोद्यानवर्त्तिनं सबहुमानं प्रणम्य भगवंस्त्वत्पादपङ्कजवनं मे शरणमरिपराजितस्येति विकल्प्य विरचितघोररूपो लक्षयोजनमानशरीरः परिघरत्नप्रहरणं परितो भ्रमयन् गर्जन्नास्फोटयन् देवांस्त्रासयन्नुत्पपात, सौधर्म्मावतंसकविमानवेदिकायां पादन्यासं कृत्वा शक्रं चाक्रोशयामास। शक्रोऽपि कोपाज्ज्वल्यमानस्फारस्फुलिङ्गशतसमाकुलं कुलिशं तं प्रति मुमोच। स च भ-

वा कम्मस्सेत्यादि, नाम्नो—नामकर्मणो गोत्रकर्म्मणो वा अथवा नाम्ना संज्ञया गोत्रस्य—नीचैर्गोत्रस्याक्षीणस्य—स्थितेरक्षयात् अवेदितस्य—तद्रसस्याननुभूतत्वात् अनिर्जीर्णस्य—तत्प्रदेशानां जीवप्रदेशेभ्योऽपरिशाटनात् तस्योदयेन । भगवता नीचैर्गोत्रं भरतसुतमरीचिजन्मनि स्थूलसप्तविंशतिभवापेक्षया तृतीयभवे निबद्धं, तथाहि—पश्चिममहाविदेहे नयसारनामा ग्रामाधिपतिरेकदा स्वाम्यादेशाद्दारुनिमित्तं सपाथेयोऽटव्यां गतः, तत्र च भोजनावसरे भृतकैरुपनीतायां रसवत्यां यदि कश्चिदतिथिर्मिलति तदा शोभनमितिबुद्ध्या इतस्ततो विलोकयन् सार्थभ्रष्टान् क्षुत्तृड्बाधिततनून् साधून् दृष्ट्वा हृष्टोऽहो मे भाग्यमिति रोमाञ्चिततनुः सादरं साधूनाहूय विपुलया रसवत्या प्रत्यलाभयत्, भोजनादिना च कृतकृत्यीभूय साधुसमीपे गत्वा नत्वा चोवाच, चलन्तु भगवन्तो दर्शयामि मार्गं, तदनु तेन सह चलद्भिः साधुभिर्योग्योऽयमित्यवधार्याध्वन्येव वृक्षाध उपविश्य धर्म्मदेशनया सम्यक्त्वं प्रापितः । स चात्मानं धन्यं मन्यमानः साधून्नत्वा स्वग्रामं प्राप्तः । प्रान्ते च पञ्चनमस्कृतिस्मृतिपुरस्सरं मृत्वा द्वितीयभवे सौधर्म्मे कल्पे पल्योपमायुः सुरः । ततश्च्युतस्तृतीयभवे मरीचिनामा भरतसुतोऽभूत् । स चैकदा सबहुमानं देवेन्द्रादिविधीयमानं प्रथमजिनमहिमानं दृष्ट्वा श्रुत्वा च धर्म्मं सम्यक्त्वलब्धबुद्धिः प्रव्रजितः, ततः स स्थविरान्तिकेऽधीतैकादशाङ्गीकोऽन्यदा ग्रीष्मकालेऽस्नानादिना पीडितवपुः संयममार्गादुद्विग्नमना गृहे मे गन्तुमनुचितं श्रामण्यगुणानपि मेरुगिरिसमभारान् वोढुमहमशक्त इति चिन्तापरः स्वकीयस्वरूपं प्रकटयन्नेवैतत्कुलिङ्गं चिन्तयति । तद्यथा—श्रमणास्त्रिदण्डविरता, अहं तु नैवमतो मे त्रिदण्डिकं त्रिदण्डचिन्हमस्तु, तथा श्रमणा लोचेन्द्रियाभ्यां द्रव्यभावाभ्यां मुण्डा नाहमेवमतो मे क्षुर-

कृत्य वन्दते स्तौति च 'भो मरीचे यावन्तो लाभास्ते त्वयैव लब्धाः, यतस्त्वं वीरनामा चरमस्तीर्थकृत् प्रियमित्रनामा चक्रवर्त्ती त्रिपृष्ठनामा प्रथमो वासुदेवश्च भविष्यसी'त्यादि प्रागुक्तं प्रादुष्कृत्य 'न च ते पारिव्रज्यं वंदे न चापि तवेदं जन्म किन्तु चरमस्तीर्थकृद्भविष्यस्ततो वंदे' इत्यादि मधुराभिर्वाग्भिः स्तुत्वा नत्वा पुनः पितरमभिवन्द्य विनीतां नगरीं प्राप्तः। मरीचिरपि भरतवचनं श्रुत्वा हर्षोद्रेकात्त्रिपदीमास्फोट्य नृत्यं कुर्वन्निदमवोचत्। "जइ वासुदेवपढमो, मूआइविदेहचक्कवट्टित्तं। चरमो तित्थयराणं, होउ अलं इत्तिअं मज्झ॥ १॥ अहयं च दसाराणं, पिआ मे चक्कवट्टिवंसस्स। अज्जो तित्थयराणं अहो कुलं उत्तमं मज्झ॥ २॥" इति च जातिमदहेतुकं नीचैर्गोत्रं बद्धवान्, यदुक्तं—"जाति १ लाभ २ कुलै ३ श्वर्य ४ बल ५ रूप ६ तपः ७ श्रुतैः ८। कुर्वन्मदं पुनस्तानि, हीनानि लभते जनः॥ १॥" इति। तदनु मरीचिर्भगवति निर्वृते साधुभिः सह विहरन् प्राग्वत्साधुभ्यश्च शिष्यान् समर्पयति। एकदा च तं ग्लानीभूतं न कोऽपि साधुः प्रतिजागर्त्ति, सोऽचिन्तयदहो एते बहुपरिचिता अपि मां न प्रतिजाग्रति। यदि वा कथमेते कृतकृत्याः स्वदेहेऽपि गतस्पृहाः संयमिनो मामीदृशमविरतं प्रतिजाग्रति, तस्माद्रोगविमुक्तस्य ममैकं प्रतिजागरकं प्रव्राजयितुं युक्तमिति चिन्तापरस्य तस्यैकदा नीरोगतायां सञ्जातायां कपिलनामा राजपुत्रो धर्म्मशुश्रूषया तदन्तिके समागतो निजदेशनया प्रतिबुद्धस्तेन प्रेरितो भो कपिल! याहि साधुसमीपे प्रपद्यस्व च त्रैलोक्यालङ्कारं त्रैलोक्याग्र्यपदैकहेतुं मुनिमार्गमित्युक्ते कर्मोदयान्मुनिमार्गानभिमुखः कपिलः प्रोवाच, यद्येवं किमिति भवद्भिस्तत्परित्यागेनैतत्पारिव्रज्यं स्वीकृतं? मरीचिरुवाच, पापोऽहं श्रमणास्त्रिदण्डविरता अहं तु

नैनमित्यादिविभाषा पूर्ववत् । पुनरपि कपिलः प्रोवाच, किं भवद्दर्शने सर्वथा धर्मो नास्त्येवेत्युक्ते मरीचिरचिन्तयत्, प्रचुरकर्मा खल्वयं जिनोक्तमार्गं न प्रपद्यतेऽतो वरं मे मदुचितः सहायः संवृत्त इति विचिन्त्य सम्पूर्णः खलु साधुमार्गे धर्मः किञ्चित्तु मम मार्गेऽपीत्यर्थाभिधायकं कपिला इत्थं पि इहयंपि त्ति उत्सूत्रमिश्रितमेव वाक्यं मरीचिरवोचत् । तद्वचः श्रुत्वा च कपिलस्तदन्तिक एव प्रव्रजितः । मरीचिनाऽप्यनेन दुर्वचनेन कोटाकोटिसागरप्रमाणः संसारोऽभिनिर्वर्त्तितः, त्रिपद्यास्फोटकाले च नीचैर्गोत्रं बद्धमिति । ततोऽनालोचिततत्कर्मा चतुरशीतिलक्षपूर्वायुः परिपाल्य मृत्वा चतुर्थे भवे ब्रह्मलोके दशसागरस्थितिः सुरः सञ्जातः । कपिलोऽपि ग्रन्थार्थपरिज्ञानशून्योऽप्यासुरिप्रभृत्यनेकशिष्यान् प्रव्राज्य तत्क्रियानिरतो मृत्वा ब्रह्मलोके देवः सञ्जातः, तत्र च मया प्राग्भवे किं कृतमित्यवधिं प्रयुज्य स्वतीर्थमोहादागत्य च पञ्चवर्णमण्डलावस्थोऽन्तर्हितः षष्ठितन्त्रादिकं कापिलेयशास्त्रं स्वशिष्यवर्गस्य पुरः कथितवान् । मरीचिस्तु ब्रह्मलोकाच्युतः पञ्चमे भवे कोल्लाकसन्निवेशेऽशीतिलक्षपूर्वायुः कौशिकनामा ब्राह्मणः स च द्रव्योपार्जनपरायणो विषयासक्तो हिंसादिषु निःशूको भूयांसं कालं गृहे स्थित्वा प्रान्ते च त्रिदण्डी भूत्वा मृत्वा च पद्मानन्दकाव्यानुसारेण षष्ठे भवे सौधर्मे सुरः तदपेक्षया च द्वाविंशतितमो मनुजभवो न गण्यत इति न भवाधिक्यशङ्काऽपि । श्रीवीरचरित्राद्यनुसारेण तु तिर्यगादिभवानुभूतिलक्षणे संसारे प्रभूतकालं परिभ्रम्य षष्ठे भवे स्थूणायां नगर्यां द्वासप्ततिलक्षपूर्वायुः पुष्पनामा द्विजः प्रान्ते च त्रिदण्डी भूत्वा मृत्वा च सप्तमे भवे सौधर्मकल्पे मध्यस्थितिः सुरः ७, ततश्च्युतोऽष्टमे भवे चैत्यसन्निवेशे षष्टिलक्षपूर्वायुरग्निद्योतो नाम ब्राह्मणः प्रान्ते च त्रिदण्डी भूत्वा मृत्वा

च ८ नवमे भवे द्वितीये कल्पे मध्यस्थितिकोऽमरः ९, ततश्च्युतो दशमे भवे मन्दरसन्निवेशे षट्पञ्चाशल्लक्षपूर्वायुरग्निभूतनामा ब्राह्मणोऽन्ते त्रिदण्डी भूत्वा मृत्वा १० चैकादशे भवे सनत्कुमारे कल्पे मध्यस्थितिकः सुरः ११, ततश्च्युतो द्वादशे भवे श्वेतम्ब्यां नगर्यां चतुश्चत्वारिंशल्लक्षपूर्वायुर्भारद्वाजनामा ब्राह्मणोऽन्ते त्रिदण्डिकतया मृत्वा १२ त्रयोदशे भवे माहेन्द्रे कल्पे मध्यस्थितिः सुरः १३, ततश्च्युतः कियन्तमपि कालं संसारे संसृत्य चतुर्दशे भवे राजगृहे चतुस्त्रिंशल्लक्षपूर्वायुः स्थावरो नाम ब्राह्मणोऽन्ते त्रिदण्डी भूत्वा मृत्वा च १४ पञ्चदशे भवे ब्रह्मलोके मध्यमस्थितिकोऽमरः १५, ततश्च्युतो भूयःकालं संसारे भ्रान्त्वा षोडशे भवे विश्वभूतिनामा विशाखभूतेः प्रियाया धारिण्याः कुक्षौ कोटिवर्षायुः क्षत्रियोऽभूत्। स च सम्भूतमुनिपादान्ते व्रतमादाय वर्षसहस्रं दुस्तपं तपस्तपन् मासोपवासपारणके मथुरायां प्रविष्टः, तत्र च परिणयनार्थमागतेन विशाखनन्दिनाम्ना पितृव्यभ्रात्रा तपःकृशाङ्गयष्टिमेकया गवा भुवि पातितमालोक्य कपित्थपातनं तव क्वेत्यादि हसितः सन् क्रुधा तां गां शृङ्गयोर्गृहीत्वा गगनेऽभ्रमयत् मदीयेनानेनोग्रतपसा भवान्तरे भूयिष्ठवीर्यो भूयासमिति निदानं च चक्रे १६। ततो मृत्वा सप्तदशे भवे महाशुक्रे उत्कृष्टस्थितिः सुरः १७, ततश्च्युतोऽष्टादशे भवे पोतनपुरे प्रजापते राज्ञो मृगावत्याः कुक्षौ चतुरशीतिवर्षलक्षायुस्त्रिपृष्ठनामा वासुदेवः १८, ततो मृत्वैकोनविंशतितमे भवे सप्तमपृथिव्यां त्रयस्त्रिंशत्सागरोपमस्थितिर्नारकः १९, तत उद्धृत्य विंशतितमे भवे सिंहः २०, ततो मृत्वैकविंशतितमे भवे चतुर्थपृथिव्यां नारकः २१, तत उद्धृत्य तिर्यग्मनुष्यादिभूयोभवान् भ्रान्त्वा द्वाविंशतितमे भवे मनुजत्वमवाप्योपार्जितशुभकर्मा २२, त्रयोविंशतितमे भवे मूकायां राजधान्यां

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २० ॥

व्याख्या—अयं च णमित्यादितो गब्भत्ताए वक्कंत इति यावत् सुगमम् ॥ २० ॥

तं जीअमेअं तीअपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवराईणं अरहंते भगवंते तहप्पगारेहिंतो अंतकुलेहिंतो पंतकुलेहिंतो वा तुच्छ० दरिद्द० भिक्खाग० किवणकुलेहिंतो वा माहणकुलेहिंतो वा तहप्पगारेसु उग्गकुलेसु वा भोगकुलेसु वा रायन्न० नाय० खत्तिअ० हरिवंसकुलेसु वा अण्णयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु वा जाव रज्जसिरिं कारेमाणेसु पालेमाणेसु साहराविक्तए । तं सेयं खलु मम वि समणं भगवं महावीरं चरमतित्थयरं पुव्वतित्थयरनिद्दिट्ठं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तिअकुंडग्गामे नयरे नायाणं खत्तिआणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारिआए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरावि-

त्तए। जे वि य णं से तिसलाए खत्तिआणीए गब्भे तं त्रि य णं देवानंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहरावित्तए, त्तिकट्टु एवं संपेहेइ संपेहित्ता हरिणेगमेसिं पायत्ताणिआहिवइं देवं सद्दावेइ सद्दावित्ता एवं वयासि ॥ २१ ॥

व्याख्या—तं जीअमित्यादित एवं वयासीति यावत्, तत्र जीतं–आचरितं कल्प इत्येकार्थिनः तीअपच्चुप्पन्नत्ति 'वातीतादौ' इति व्याकरणसूत्रेणाकारलोपेऽतीतवर्त्तमानानागतानामित्यर्थः, ज्ञातानां–श्रीऋषभस्वामिवंशजानां क्षत्रियविशेषाणां मध्य इत्यर्थः, तिसलाए खत्तिआणीए गब्भे त्ति गर्भः–पुत्रिकारूपः साहरावित्तए त्ति सङ्क्रमयितुं संपेहइ त्ति पर्यालोचयति हरेः–इन्द्रस्य नैगमं–आदेशमिच्छतीति हरिनैगमेषी केचित्तु हरेरिन्द्रस्य सम्बन्धी नैगमेषीनामा देव इति तं पदात्यनीकाधिपतिं सद्दावेइ त्ति आकारयति ॥ २१ ॥

एवं खलु देवाणुप्पिआ न एअं भूअं न एअं भव्वं न एअं भविस्सं। जन्नं अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा अंत० पंत० किवण० दरिद्द० तुच्छ० भिक्खाग० माहणकुलेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा। एवं खलु अरिहंता वा चक्कवट्टी वा बलदेवा वा वासुदेवा वा उग्गकुलेसु वा भोग० रायन्न० नाय० खत्तिअ० इक्खाग० हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु आयाइंसु वा आयाइंति वा आयाइस्संति वा ॥२२॥

व्याख्या—एवं खल्वित्यादित आयाइस्संति वेति यावत्, तत्र खल्विति वाक्योपक्रमे, शेषं पूर्ववत् ॥ २२ ॥

अत्थि पुण एसे वि भावे लोगच्छेरयभूए अणंताहिं उस्सप्पिणीहिं ओसप्पिणीहिं विइक्कंताहिं समुप्पज्जइ। नामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइअस्स अणिज्जिन्नस्स उदएणं जन्नं अरिहंता वा चक्क० बल० वासुदेवा वा अंतकुलेसु वा पंत० तुच्छ० किवण० दरिद्द० भिक्खागकुलेसु वा आयाइंसु वा आयाइंति वा आयाइस्संति वा। नो चेव णं जोणीजम्मणनिक्खमणेणं निक्खमिंसु वा निक्खमंति वा निक्खमिस्संति वा ॥ २३ ॥

व्याख्या—अत्थि पुणेत्यादितो निक्खमिस्संति वेति पर्यन्तं सुगमम् ॥ २३ ॥

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे नयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते ॥ २४ ॥

व्याख्या—अयं च णमित्यादितो वक्कंते त्ति पर्यन्तं प्राग्वत् ॥ २४ ॥

तं जीअमेअं तीअपच्चुप्पन्नमणागयाणं सक्काणं देविंदाणं देवराईणं अरहंते भगवंते तहप्पगारेहिंतो अंत० पंत० तुच्छ० किवण० दरिद्द० वणीमग० जाव माहणकुलेहिं तो तहप्पगारेसु उग्ग०

भोग० रायन्न० नाय० खत्तिअ० इक्खाग० हरिवंसकुलेसु वा अन्नयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु साहराविचए ॥ २५ ॥

व्याख्या—तं जीअमेअमित्यादितः साहराविचए त्ति पर्यन्तं प्राग्वत् ॥ २५ ॥

तं गच्छ णं तुमं देवाणुप्पिआ समणं भगवं महावीरं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तिअकुंडग्गामे नगरे नायाणं खत्तिआणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारिआए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, जे वि अ णं से तिसलाए खत्तिआणीए गब्भे तं पि अ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, साहरित्ता मम एअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि ॥ २६ ॥

व्याख्या—तं गच्छ णं तुममित्यादितः पच्चप्पिणाहि त्ति पर्यन्तम्, तत्र ममेमामाज्ञप्तिं—आज्ञां शीघ्रमेव प्रत्यर्पय—मदाज्ञां कृतार्थीकृत्यागत्य च निवेदयेत्यर्थः, शेषं सुकरम् ॥ २६ ॥

तएणं से हरिणेगमेसी पायत्ताणिआहिवई देवे सक्केणं देविंदेणं देवरन्ना एवं वुत्तेसमाणे हट्ठ जाव हिअए करयलजाव त्ति कट्टु जं देवो आणवेइत्ति आणाए विणएणं वयणं पडिसुणेइ, पडि-

सुणित्ता उत्तरपुरत्थिमं दिसीभागं अवक्कमइ अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणइ वेउव्विअसमुग्घाएणं समोहणित्ता संखिज्जाइं जोअणाइं दंडं निसिरइ, तं जहा–रयणाणं वयराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगंधिआणं जोईरसाणं अंजणाणं अंजणपुलयाणं जायरूवाणं सुभगाणं अंकाणं फलिहाणं रिट्ठाणं अहाबायरे पुग्गले परिसाडिअ अहासुहुमे पुग्गले परिआएइ ॥ २७ ॥

व्याख्या—तएणं से हरिणेगमेसीत्यादितः परिआएइत्ति यावत्, तत्र आज्ञाया–आदेशस्य वचनं विनयेन प्रतिशृणोति–कर्तुमभ्युपगच्छति उत्तरपुरत्थिमं ति ईशानकोणकम् अवक्कमइत्ति अपक्रामति–व्रजति वेउव्वियसमुग्घाएणं ति उत्तरवैक्रियरूपकरणाय प्रयत्नविशेषेण समोहणइ त्ति समुद्धंति–आत्मप्रदेशान् विक्षिपति समोहण्णइ त्ति पाठे समुद्धन्यते समुद्घातवान् भवतीत्यर्थः, तत्स्वरूपमेवाह–संखिज्जाइमित्यादिना दंडं ति दण्ड इव दण्ड–ऊर्द्धाध आयतः शरीरबाहल्यो जीवप्रदेशकर्म्मपुद्गलराशिस्तं निसृजति–निष्काशयतीत्यर्थः, तत्कुर्वाणस्तु विविधविशिष्टपुद्गलानादत्त इति दर्शयन्नाह तं रयणाणमित्यादि रत्नानां–कर्केतनप्रभृतीनां यद्यपि रत्नादिपुद्गला औदारिका एव भवन्ति, वैक्रियसमुद्घाते च वैक्रिया एव ग्राह्याः, तथापि तेषां रत्नादिपुद्गलानामिव सारताख्यापनाय रत्नानामिवेति व्याख्ये-

यम्, अन्ये वदन्ति औदारिका अपि गृहीताः सन्तो वैक्रियपरिणामभाजो भवन्तीति, तेन च दण्डेन रत्नादीनां यथा-बादरान्–असारान् गृहीतान् पुद्गलान् परिशात्य यथासूक्ष्मान्–सारान् पर्यादत्ते ॥ २७ ॥

परिआइत्ता दुच्चंपि वेउव्विअसमुग्घाएणं समोहणइ समोहणित्ता उत्तरवेउव्विअरूवं विउव्वइ उत्तरवेउव्विअरूवं विउव्वित्ता ताए उक्किट्ठाए तुरिआए चवलाए चंडाए जयणाए उद्धुआए सिग्घाए दिव्वाए देवगईए वीईवयमाणे वीईवयमाणे तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झं मज्झेणं जेणेव जंबुद्दीवे दीवे भारहे वासे जेणेव माहणकुंडग्गामे नयरे जेणेव उसभदत्तस्स माहणस्स गिहे जेणेव देवाणंदा माहणी तेणेव उवागच्छइ उवागच्छित्ता आलोए समणस्स भगवओ महावीरस्स पणामं करेइ, पणामं करित्ता देवाणंदाए माहणीए सपरिजणाए ओसोवणिं दलइ, ओसोवणिं दलित्ता असुहे पुग्गले अवहरइ, अवहरित्ता सुभे पुग्गले पक्खिवइ, पक्खिवित्ता अणुजाणउ मे भयवं तिकट्टु समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं करयलसंपुडेणं गिण्हइ, गिण्हित्ता जेणेव खत्तिअकुंडग्गामे नयरे जेणेव सिद्धत्थस्स खत्तिअस्स गिहे जेणेव तिसला खत्तिआणी तेणेव उवागच्छइ उवागच्छित्ता तिसलाए खत्तिआणीए सपरिजणाए

ओसोवणिं दलइ दलित्ता असुहे पुग्गले अवहरइ अवहरित्ता सुहे पुग्गले पक्खिवइ पक्खिवित्ता समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं तिसलाए खत्तिआणीए कुच्छिंसि गब्भत्ताए साहरइ, जे वि अ णं से तिसलाए खत्तिआणीए गब्भे तंपि अ णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहरइ साहरित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगए ॥ २८ ॥

व्याख्या—परिआइत्तेत्यादितस्तामेव दिसिं पडिगए त्ति यावत्, तत्र दुच्चंपि त्ति द्वितीयमपि वारं समुद्घातं करोति वेउव्विअं ति उत्तरवैक्रियरूपं तच्च भवधारणीयरूपादन्यदेव येन देवा मनुष्यलोके आयान्ति, ताए उक्किट्ठाए इत्यादि, तया—देवजनप्रतीतया, उत्कृष्टया—प्रशस्तविहायोगतिनामकर्म्मणा यः स्वगत्युत्कर्षस्तद्वतया, त्वरितया मानसौत्सुक्यात्, चपलया कायतः, चण्डया—सम्भारवत्या, जयिन्या—अशेषकर्मगतिजेत्र्या उद्धुतया—अशेषशरीरावयवकम्पकारिण्या, शीघ्रया—वेगवत्या, अन्ये वदन्ति उत्कृष्टया—प्रशस्तविहायोगतिनामकर्म्मोदयात् प्रशस्तया, त्वरितया—शीघ्रसञ्चरणात् त्वरा सञ्जाता अस्यामिति त्वरिता तया, चपलया—चपलेव विद्युदिव चपला तया, चण्डया—क्रोधाविष्टस्येव श्रमासंवेदनात् चण्डेव चण्डा तया, जवनया—परमोत्कृष्टवेगपरिणामोपेतया, उद्धुतया—प्रचण्डपवनोद्धूतस्य दिगन्तव्यापिनो रेणुकाराशेरिव या गतिः सा उद्धुता तया उद्धुतया, दर्पातिशयात् शीघ्रया

निरन्तरशीघ्रत्वगुणयोगादित्यपि केचित्, 'छेआए' इत्यपि क्वचित्तत्र छेकया–अपायपरिहारनिपुणया, दिव्यया–देवजनोचितया, देवगत्या व्यतिव्रजन् मज्झं मज्झेणं ति मध्यभागे आलोके–दर्शनमात्रे ओसोवणिं ति अवस्वापिनीं–निद्रां दलइ त्ति ददाति अव्याबाधमिति भगवतो विशेषणं तत्पीडापरिहारात्, अव्याबाधेन–सुखेन संहर्तुरपि पीडाया अभावात्, यद्वाऽव्याबाधमव्याबाधेन–सुखं सुखेनेत्यर्थः, यतस्तथाविधकरव्यापारेण संस्पृश्य स्त्रीगर्भच्छवि-च्छेदकरणेनापि ईषदपि बाधां विनैव नखाग्रे रोमकूपे वा प्रवेशयितुं ततो निष्काशयितुं वा समर्थो हरिनैगमेषीति। उक्तं च भगवत्याम्–"भंते! हरिणेगमेसी सक्कदूए इत्थीगब्भं साहरमाणे गब्भाओ गब्भं साहरइ? १ गब्भाओ जोणिं साहरइ? २ जोणीओ गब्भं साहरइ? ३ जोणीओ जोणिं साहरइ? ४ गोयमा! नो गब्भाओ गब्भं साहरइ १, नो गब्भाओ जोणिं साहरइ २, परामुसिअ परामुसिअ अव्वाबाहं अव्वाबाहेणं जोणीओ गब्भं साहरइ ३, नो जोणीओ-जोणिं साहरइ ४। पहू णं भंते! से इत्थीगब्भं नहसिरंसि वा रोमकूवंसि वा साहरित्तए वा नीहरित्तए वा? हंता पहू, नो चेव णं तस्स गब्भस्स किंचि आबाहं विबाहं वा उप्पाइज्जा, छविच्छेअं पुण करिज्जत्ति" साहरइ त्ति संहरति–योनिद्वारेण निष्काश्य गर्भं गर्भाशयं प्रवेशयतीत्यर्थः। यस्या दिशो–अवधेः प्रादुर्भूतः–प्रकट्यभूदागत इत्यर्थः ॥२८॥

ताए उक्किट्ठाए तुरिआए चवलाए चंडाए जयणाए उद्धुआए सिग्घाए दिव्वाए देवगईए,

तिरिअमसंखिज्जाणं दीवसमुद्दाणं मज्झं मज्झेणं जोअणसाहस्सिएहिं विग्गहेहिं उप्पयमाणे उप्पयमाणे जेणामेव सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सक्कंसि सीहासणंसि सक्के देविंदे देवराया तेणामेव उवागच्छइ, उवागच्छित्ता सक्कस्स देविंदस्स देवरन्नो एअमाणत्तिअं खिप्पामेव पच्चप्पिणइ ॥ २९ ॥

व्याख्या—ताए उक्किट्ठाए त्ति प्रभृति पच्चप्पिणइ त्ति पर्यन्तम्, तत्र विग्गहेहि त्ति वीखाभिः—गतिभिरित्यर्थः उत्पतन्—उर्द्ध्वं गच्छन् ॥ २९ ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से वासाणं तच्चे मासे पंचमे पक्खे आसोअबहुले तस्स णं आसोअबहुलस्स तेरसीपक्खेणं बासीइ राइंदिएहिं विइक्कंतेहिं तेसीइमस्स राइंदिअस्स अंतरावट्टमाणे हिआणुकंपएणं देवेणं हरिणेगमेसिणा सक्कवयणसंदिट्ठेणं माहणकुंडग्गामाओ नयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे नयरे नायाणं खत्तिआणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारिआए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए पुव्वरत्तावरत्तका-

लसमयंसि हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं अव्वाबाहं अव्वाबाहेणं कुच्छिसि गब्भ-
त्ताए साहरिए ॥ ३० ॥

व्याख्या—तेणं कालेणमित्यादितः साहरिए त्ति पर्यन्तम्, तत्र वासाणं ति श्रावणादीनां वर्षाकालमासानां
मध्ये तृतीय आश्विनमासः पञ्चमः पक्षः आश्विनस्य बहुलः—कृष्णस्तस्याश्विनबहुलस्य या त्रयोदशी तिथिस्तस्याः
पक्षः—पश्चार्द्धं रात्रिरित्यर्थः, हितः शक्रस्य स्वस्य च, अनुकम्पकस्तु—भगवतो भक्तः अनुकम्पाशब्दस्य तु
भक्तिवाचकत्वमपि यथा 'आयरिअअणुकंपाए गच्छो अणुकंपिओ महाभागो' इत्यत्र ॥ ३० ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तिन्नाणोवगए आविहुत्था, साहरिज्जिस्सामित्ति
जाणइ, साहरिज्जमाणे नो जाणइ, साहरिएमित्ति जाणइ। जं रयणिं च णं समणे भगवं महावीरे
देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए
कुच्छिसि गब्भत्ताए साहरीए, तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा-
ओहीरमाणी ओहीरमाणी इमे एआरूवे उराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस-
महासुमिणे तिसलाए खत्तिआणीए हडे पासित्ताणं पडिबुद्धा तं जहा गयवसहगाहा ॥ ३१ ॥

व्याख्या—तणं कालेणमित्यादितो गयवसहगाहेति पर्यन्तम्, तत्र संहरणमपि च्यवनवदेव, नवरं संह्रियमाणः पुनर्न जानाति, तत्र ज्ञानागोचरत्वे संहरणस्यैकसामयिकत्वं हेतुरिति केचित्, केचित्पुनरान्तर्मौहूर्त्तिकत्वेऽपि छाद्मस्थिकोपयोगापेक्षया संहरणकालस्य सूक्ष्मतरत्वमित्युभयथापि विचार्यमाणं न चेतश्चमत्करोति, यतस्तत्कर्त्तुरुपयोगविषयत्वेनैकसामयिकत्वं हरिनैगमेष्यपेक्षया विशिष्टज्ञानशक्तिमतो भगवतो ज्ञानागोचरत्वं चेत्युभयमपि विरुध्येत, तस्माद्दिव्यशक्तिवशात् अल्पेनैव कालेन तेन तथा संहरणं विहितं, यथा भगवतो न मनागपि बाधाऽभूदित्यर्थवत्त्वेन साहरिज्जमाणे नो जाणइ त्ति विशेषणं भगवतः संहरणे सर्वथाऽनाबाधसंसूचकम् । अनाबाधावस्थायां च सत्यपि ज्ञानगोचरत्वे तदगोचरत्वव्यपदेशः सुप्रतीत एव । यतः—'तहिं देवा वंतरिया, वरतरुणीगीअवाइअरवेणं । निच्चं सुहिया पमुइआ, गयं पि कालं न याणंति ॥ १ ॥" त्ति । लोकेऽप्यतिसुखितो ब्रूते यन्मयाऽद्य यावद् गच्छन् कालो नावगत इति । किञ्च कालस्य सूक्ष्मत्वमधिकृत्य ज्ञानागोचरत्वे सर्वथा ज्ञानाभावः सम्पद्यते, निराबाधत्वमधिकृत्य तु तथा वक्तव्ये कथञ्चिज्ज्ञानागोचरत्वमपि न विरुध्येत । तथा च "साहरिज्जमाणे वि जाणइ त्ति" नाचाराङ्गविरोधोऽपीत्येवमपि व्याख्यानं घटत इति विचार्य यथागमं चतुरैर्विचार्यमिति ॥ ३१ ॥

जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए । तं रयणिं च णं सा तिसला

खत्तिआणी तंसि तारिसगंसि वासघरंसि अब्भिंतरओ सचित्तकम्मे बाहिरओ दूमिअघट्ठमट्ठे विचित्तउल्लोअचिल्लिअतले मणिरयणपणासिअंधयारे बहुसमसुविभत्तभूमिभागे पंचवन्नसरससुरहिमुक्कपुप्फपुंजोवयारकलिए कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामे सुगंधवरगंधिए गंधवट्टिभूए, तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ बिब्बोअणे उभओ उन्नए मज्झे णयगंभीरे गंगापुलिणवालुआउद्दालसालिसए उअविअखोमिअदुगुल्लपट्टपडिच्छन्ने सुविरइअरयत्ताणे रत्तंसुअसंवुडे सुरम्मे आइणगरूअबूरनवणीअतूलतुल्लफासे सुगंधवरकुसुमचुन्नसयणोवयारकलिए पुव्वरत्तावरत्तकालसमयंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एआरूवे उराले जाव चउद्दस महासुमिणे पासित्ता णं पडिबुद्धा तंजहा—गय १ वसह २ सीह ३ मभिसेअ ४ दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९ । पउमसर १० सागर ११ विमाण १२, भवण १२ रयणुच्चय १३ सिहिं च १४ ॥ १ ॥ ३२ ॥

व्याख्या—जं रयणिं च णमित्यादितः सिहिं चेति पर्यन्तम्, तत्र तंसीत्यादि तस्मिन् तादृशके—वक्तुमशक्यस्वरूपे प्रकृष्टपुण्यवतां योग्य इति यावत् वासघरंसि त्ति वासभवने अब्भिंतरओ त्ति अभ्यन्तरे भित्तिभागे सचि-

त्रकर्म्मणि—चित्रकर्म्मसंयुक्ते वाहिरओ त्ति वाह्यतः दूमिअ त्ति धवलितं घृष्टं—कोमलपापाणादिनाऽत एव मृष्टं—मसृणं यत्तत्तथा तस्मिन् विचित्तउल्लोअचित्तिअतले त्ति विचित्रं—आश्चर्यावहमुल्लोचस्य—वितानस्य विचित्रं—विविधचित्रोपेतं तलं—अधोभागो यत्र तत्तथा तस्मिन् विचित्तउल्लोअचिल्लिअतले त्ति क्वचित्तत्र विचित्रो—विविधचित्रकलित उल्लोक—उपरिभागो यत्र, चिल्लिअं—दीप्यमानं तलं—अधोभागो यत्र, ततो विशेषणकर्म्मधारये विचित्रोल्लोकचिल्लिअतलं तस्मिन्, वहुसमसुविभत्तभूमिभागे त्ति वहु—अत्यर्थं पञ्चवर्णमणिकुट्टिमतलाऽऽकलितत्वात्समो—अनिम्नोन्नतः सुविभक्तो—विहितविविधस्वस्तिको भूमिभागो यत्र तत्तथा तत्र पंचवन्नेत्यादि, पञ्चवर्णेन सरसेन सुरभिणा मुक्तेन—क्षिप्तेन पुष्पपुञ्जलक्षणेन उपचारेण—पूजया कलिते कालागुरुपवरेत्यादि, कालागुरु च—कृष्णागुरु प्रवरकुन्दुरुक्कं च—चीडाभिधो गन्धद्रव्यविशेपः तुरुष्कं च—सिल्हकं दह्यमानो धूपश्च—दशाङ्गादिगन्धद्रव्यसंयोगोद्भूत इति द्वन्द्वे तेपां सम्बन्धी यो मघमघायमानो—अतिशयगन्धवान् गन्ध उद्धुत—उद्भूतस्तेनाभिरामे सुगंधवरगंधिए त्ति सुष्ठु गन्धवराणां—प्रधानवासानां गन्धो यस्मिन्नस्ति तत्सुगन्धवरगन्धिकं तस्मिन् सुगंधवरगंधगंधिए त्ति क्वचित्तत्र सुगन्धाः—सुरभयो ये वरगन्धाः—प्रधानचूर्णास्तेषां गन्धो यत्र तत्तथा तत्र गंधवट्टीभूए त्ति गन्धवर्त्तिः—गन्धद्रव्यगुटिका गन्धः कस्तुरिकेति गन्धवर्त्तिः—कस्तूरिका गुटिका वा तद्भूते सौरभ्यातिशयात् तत्कल्प इत्यर्थः । तंसीत्यादि पूर्ववत्, शयनीये—तल्पे

सालिंगणवट्टिए त्ति सह आलिङ्गनवर्त्त्या—शरीरप्रमाणगण्डोपधानेन यत्तत्सालिङ्गनवर्त्तिकं तत्र उभयतः शिरोऽन्त-पादान्तयोः बिब्बोअणे त्ति उपधाने गण्डुके यत्र तत्र अत एवोभयत उन्नते, मध्ये नतगम्भीरे नतं च तद्गम्भीरं च महत्त्वान्नतगम्भीरं तत्र गंगापुलिनेत्यादि, गङ्गातटवालुकाभिरवदालेन पादादिन्यासेऽधोगमनेन सालिसए त्ति सदृशके अथवा प्राकृतत्वाद्विशेषणस्य परनिपातेऽवदालेन पादादिविन्यासेऽधोगमनेन गङ्गातटवालुकाभिः सदृशके इत्यर्थः । उअविअ त्ति परिकर्म्मितं यत् क्षौमं—अतसीमयं दुकूलं—वस्त्रं तस्य युगलापेक्षया यः पट्टः—एकः शाटकः तेन प्रतिच्छन्ने—आच्छादिते पडिच्छए त्ति पाठे तु स प्रतिच्छद—आच्छादनं यस्येत्यादि सुविरइअरयत्ताणे त्ति सुष्ठु विरचितं शुचि वा रचितं रजस्त्राणं—आच्छादनविशेषोपरिभोगावस्थायां यत्र, रक्तांशुकसंवृते—मशकगृहाभिधानरक्तवस्त्रावृते सुरम्ये—अतिरमणीये आइणगेत्यादि आजिनकं—स्वभावादतिसुकुमालश्चर्म्ममयो वस्त्रविशेषः रूतं—कर्पासपक्ष्म, बूरो—वनस्पतिविशेषः, नवनीतं—म्रक्षणं, तूलं—अर्कतूलं, एभिस्तुल्यः स्पर्शो यस्य तत्तथा तस्मिन् । सुगन्धवरकुसुमेत्यादि सुगन्धाभ्यां वरकुसुमचूर्णाभ्यां सत्कुसुमजातिवासयोगाभ्यां यः शयनस्य—शय्याया उपचारः—पूजा तेन कलिते पुव्वरत्तेत्यादि मध्यरात्रे ॥ ३२ ॥

तएणं सा तिसला खत्तिआणी तप्पढमयाए, चउद्दंतमूसिअगलिअविपुलजलहरहारनिकर-

खीरसागरससंककिरणदगरययरययमहासेलपंडुरतरं समागयमहुअरसुगंधदाणवासिअकवोल-मूलं, देवरायकुंजरवरप्पमाणं, पिच्छइ, सजलघणविपुलजलहरगज्जिअगंभीरचारुघोसं, इभं, सुभं, सव्वलक्खणकयंबिअं वरोरुं । १ ॥ ३२ ॥

व्याख्या—तएणमित्यादितो वरोरुमिति पर्यन्तम्, तत्र तएणं सा इत्यादि, ततः सा त्रिशला क्षत्रियाणी तत्प्रथमतया इभं स्वप्ने पश्यति । अत्र च प्रथममिभदर्शनं सामान्यवृत्तिमाश्रित्योक्तम्, अन्यथा ऋषभमाता प्रथमं वृषभं वीरजननी तु सिंहमपश्यदिति वृद्धाः । चतुर्दन्तं—चतुर्दन्तमुशलं तओअचउद्दंतमिति क्वचित्, तत्र ततश्चेति योजने तएणमित्यनेन पुनरुक्तता स्यात् अतस्ततौजसो—महाबलाश्चत्वारो दन्ता यस्येति व्याख्येयम् । ऊसिअगलिअ त्ति उच्छ्रितस्तथा गलितविपुलजलधरो—निर्जलविस्तीर्णमेघः, हारनिकरः—पुञ्जीकृतहारः, क्षीरसागरः—प्रतीतः, शशाङ्ककिरणाः—चन्द्रमरीचयो, दकरजांसि—शीकरा, रजतमहाशैलो—वैताढ्यः, एतेषां द्वन्द्वे तद्वत्पाण्डुरतरो—अतिशयेन धवलस्तत उच्छ्रितश्चासौ गलितविपुलजलधरक्षीरसागरशशाङ्ककिरणदकरजोरजतमहाशैलपाण्डुरतरश्चेति कर्मधारयः, यद्वा मुदं श्रितो मुच्छ्रितः—क्षुधादिबाधानाबाधितत्वेन शुभचेष्टः क्रोधानाविष्टो वा, तथा च ततौज(जा)श्चतुर्दन्तश्चासौ मुच्छ्रितश्चासौ गलितविपुलजलधरक्षीरसागरशशांककिरणदकरजोरजतमहाशैलपाण्डुरतरश्चेति विशेषणकर्म्मधारयः । ऊसिअं ति सविभक्तिकपाठे तु उच्छ्रितमुच्चमिति भिन्नविशेषणं, समागय त्ति समागता मधुकरा—भ्रमरा यत्र तथा-

श्रीभर–उत्कृष्टशोभासमुदयस्तेन, पिल्लण त्ति यत्प्रेरणेव प्रेरणा तयैव विसर्प्पत्–उल्लसदत एव कान्तं–दीप्तिमत् शोभमानं च चारु च–प्रधानं ककुदं–स्कन्धो यस्य स तथा तं, तणुसुद्ध त्ति तनूनि–सूक्ष्माणि शुद्धानि–शुचीनि सुकुमालानि–मृदुस्पर्शवन्ति यानि रोमाणि तेषां स्निग्धा छविर्यस्य स तथा तं, तथा थिरसुबद्ध त्ति स्थिरं–दृढं अत एव सुबद्धं तथा मांसलमत एवोपचितं–पुष्टं लष्टं–प्रधानं सुविभक्तं–यथावत्सन्निविष्टावयवं एवंविधं सुन्दरमङ्गं–देहं यस्य स तथा तं, घणवट्ट त्ति घने–निचिते वृत्ते–वर्त्तुले लष्टोत्कृष्टे–लष्टादप्युत्कृष्टेऽतिश्रेष्ठे तुप्पग्ग त्ति म्रक्षिताग्रे तिक्ख त्ति तीक्ष्णे शृङ्गे यस्य स तथा तं, क्वचित्तु तुप्पपुप्फग्गतिक्खसिंगमिति पाठः, तत्र तुप्पे–म्रक्षिते पुष्पं गोरोचनासूचकं बिन्दुरूपं तदग्रे–उपरिभागे ययोरीदृशे तीक्ष्णे शृङ्गे यस्य स तथा तं, दान्तं–अक्रूरं, शिवं–उपद्रवोपशामकं, समाण त्ति समानाः–तुल्यप्रमाणाः अत एव शोभमानाः शुद्धाः–श्वेता दोषरहिता वा दन्ता यस्य स तथा तं, अमिअ त्ति अमिता–मानरहिता गुणा येभ्यः, एवंविधानि यानि मङ्गलानि तेषां मुखमिव मुखं–द्वारम् ॥ २ ॥ ३४ ॥

तओ पुणो हारनिकरखीरसागरससंककिरणदगरयरययमहासेलपंडुरतरं, २०० रमणिज्जपिच्छणिज्जं, थिरलट्ठपउट्ठवट्टपीवरसुसिलिट्ठविसिट्ठतिक्खदाढाविडंबियमुहं, परिकम्मिअजच्चकमलकोमलपमाणसोभंतलट्ठउट्ठं, रत्तुप्पलपत्तमउअसुकुमालतालुनिल्लालिअग्गजीहं, मूसागयपवरकणगताविअआवत्तायंतवट्टतडिविमलसरिसनयणं, विसालपीवरवरोरुं, पडिपुन्नविमलखंधं,

मिउविसयसुहुमलक्खणपसत्थविच्छिन्नकेसराडोवसोहिअं, ऊसिअसुनिम्मिअसुजायअप्फोडिअलंगूलं, सोमं, सोमाकारं, लीलायंतं, नहयलाओ ओवयमाणं, नियगवयणमइवयंतं, पिच्छइ, सा गाढतिक्खग्गनहं, सीहं, वयणसिरीपल्लवपत्तचारुजीहं। ३। ३५॥

व्याख्या—तओ पुणो हारेत्यादितश्चारुजीहमिति पर्यन्तं, तत्र ततः पुनर्नभस्तलादवपतन्तं—अवतरन्तं तदनु निजकवदनमतिपतन्तं—प्रविशन्तं सा त्रिशला सिंहं पश्यति। कीदृशं? पुनः हारेत्यादि व्याख्या प्राग्वत्। रमणिज्जपिच्छणिज्जं ति रमणीयं—मनोहरं अत एव प्रेक्षणीयं—द्रष्टुमर्हम्, थिरेत्यादि, स्थिरौ—दृढौ लष्टौ—कान्तौ प्रकोष्टौ—कलाचिके यस्य स तथा, वृत्ता—वर्त्तुलाः पीवराः—पुष्टाः सुश्लिष्टाः—अन्योऽन्यं सुसम्बद्धाः विशिष्टाः—प्रधानाः तीक्ष्णा या दाढा—दंष्ट्रास्ताभिर्विडम्बितं—अलङ्कृतं मुखं यस्य स तथा, ततो विशेषणकर्मधारयः तं, विडंबिअं ति विवृतमिति केचित् परिकम्मिअ त्ति परिकर्मिताविव परिकर्म्मितौ जात्यकमलवत्कोमलौ प्रमाणेन—मात्रया शोभमानौ लष्टौ—प्रधानौ ओष्ठौ यस्य स तथा तं, रत्तुप्पल त्ति रक्तोत्पलपत्रवन्मृदुकं—सुकुमालं च यत्तालु तच्च निर्लालिता—निष्काशिता लपलपायमाना वा अग्रा अग्र्या वा—प्रधाना या जिह्वा सा च विद्यते यस्य स तथा तं, मूसागय त्ति मूषा—मृन्मयभाजनविशेषस्तत्र गतं—प्राप्तं वरं—प्रधानं तापितं—अग्निसम्पर्केण द्रवीकृतं अत एवावर्त्तायमानं यत्कनकं—सुवर्णं प्राकृतत्वाद्विशेषणयोः परनिपाते मूषागतकनकतापिताऽऽवर्त्तायमानं तद्वद्वृत्ते विमलतडित्सदृशे च नयने—लोचने

यस्य स तथा तं, विसालपीवर त्ति विशालौ विस्तीर्णौ पीवरौ-पुष्टौ वरौ-प्रधानौ ऊरू यस्य स तथा तं, तथा प्रतिपूर्णो-अन्यूनो विमलः स्कन्धो यस्य स तथा तं, तथा मिउविसय त्ति मृदूनि-सुकुमाराणि विशदानि-धवलानि सूक्ष्माणि-तनूनि लक्षणैः प्रशस्तानि प्रशस्तलक्षणानि विस्तीर्णानि-दीर्घाणि यानि केसराणि-स्कन्धसम्बन्धिरोमाणि तेषामाटोप-उद्धतता तेन शोभितं, तथा ऊसिअ त्ति उच्छ्रितं-उदग्रं सुनिर्म्मितं-कुण्डलीकृतं सुजातं-सशोभं यथा स्यात्तथाऽऽस्फोटित-माच्छोटितं लाङ्गूलं-पुच्छं येन स तथा तं, सोमं सौम्यं वा-मनसाऽक्रूरमित्यर्थः, सोमाकारं-सुन्दराकृतिं लीलायन्तं मन्थरगतिं, गाढ त्ति गाढं-अत्यर्थं तीक्ष्णान्यग्राणि येषामेवंविधा नखा यस्य तं, तथा वयण त्ति वदनस्य-मुखविवरस्य श्रिये-रक्तत्वमृदुत्वाभ्यां शोभायै पल्लव इव प्रासा-प्रसारिता चार्वी जिह्वा येन स तथा तं वयणसिरिपलंबपत्तचारुजीहमिति पाठे तु वदनस्य श्रीः-शोभा यया सा वदनश्रीस्तथाविधा प्रलम्बा-लम्बमाना पत्रवच्चार्वी च जिह्वा यस्येति व्याख्येयम् । ३ । ३५ ॥

तओ पुणो पुन्नचंदवयणा, उच्चागयट्ठाणलट्ठसंठिअं, पसत्थरूवं, सुपइट्ठिअकणगमयकुम्मसरिसोवमाणचलणं, अच्चुन्नयपीणरइअमंसलउन्नयतणुतंबनिद्धनहं, कमलपलाससुकुमालकरचरणकोमलवरंगुलिं, कुरुविंदावत्तवट्टाणुपुव्वजंघं, निगूढजाणुं, गयवरकरसरिसपीवरोरुं, चामीकररइअमेहलाजुत्तकंतविच्छिन्नसोणिचक्कं, जच्चंजणभमरजलयपयरउज्जुअसमसंहिअतणु-

करयल-अआइज्जलडहसुकुमालमउअरमणिज्जरोमराइं, नाभीमंडलसुंदरविसालपसत्थजघणं, करयल-अआइज्जलडहसुकुमालमउअरमणिज्जरोमराइं, नाणामणिरयणकणगविमलमहातवणिज्जाभरणभूसणविराइअमंगुवंगिं, हारविरायंतकुंदमालपरिणद्धजलजलितं थणजुअलविमलकलसं, आइअपत्तिअविभूसिएणं सुभगजालुज्जलेणं मुत्ताकलावएणं उरत्थदीणारमालविरइएणं कंठमणिसुत्तएण य कुंडलजुअलुल्लसंतअंसोवसत्तसोभंतसप्पभेणं सोभागुणसमुदएणं आणणकुडुंबिएणं कमलामलविसालरमणिज्जलोअणं, कमलपज्जलंतकरगहिअमुक्कतोयं, लीलावायकयपक्खएणं सुविसदकसिणघणसण्हलंबंतकेसहत्थं, पउमद्दहकमलवासिणिं, सिरिं, भगवइं, पिच्छइ, हिमवंतसेलसिहरे दिसागइंदोरुपीवरकराभिसिच्चमाणिं । ४ । ३६ ॥

व्याख्या—तओ पुणो पुन्नेत्यादितः कराभिसिच्चमाणिं ति यावत्, तत्र ततः पुनः पूर्णचन्द्रवदना त्रिशला पद्महृदान्तःकमलवासिनीं हिमवच्छैलशिखरे दिग्गजेन्द्रोरुपीवरकराभिषिच्यमानां भगवतीं श्रीदेवीं पश्यति । कीदृशीं? उच्चागय त्ति उच्चं हिमवति आगतं–प्राप्तं उच्चागतं यद्वोच्चो योऽगः–पर्वतो हिमवान् तत्र जातमुच्चागजं एवंविधं यत्स्थानं कमलं तच्चैवम्–'योजनशतोच्चो, द्वादशकलान्वितः द्विपञ्चाशदुत्तरयोजनसहस्रपृथुलः, स्वर्णमयो, हिमवन्नामा नगः । तन्मध्यभागे क्रोशद्वयोच्चं तत्र दशयोजनोद्वेधः, पञ्चशतयोजनपृथुलः, सहस्रयोजनदीर्घो, वज्रतलः, पद्महृदनामा हृदः ।

एकयोजनपृथुदीर्घं, नीलरत्नमयदशयोजननालं, वज्रमयमूलं, रिष्टरत्नमयकन्दं, रक्तस्वर्णमयबाह्यपत्रं, जाम्बूनदमयाभ्यन्तरपत्रं, चैकं कमलं। तत्र कोशद्वयपृथुलायामा क्रोशैकोच्चा रक्तकनकमयकेसरा, कनकमयी कर्णिका, तस्या मध्ये क्रोशैकदीर्घं, क्रोशार्द्धपृथुलं, किञ्चिन्न्यूनक्रोशोच्चं, पञ्चशतधनुरुच्चतदर्द्धमानपृथुपूर्वदक्षिणोत्तररूपदिक्त्रयवर्त्तिद्वारत्रिकं, श्रीदेवीभवनं। तन्मध्ये सार्द्धशतद्वयधनुर्माना मणिवेदिका, तदुपरि च श्रीदेवीयोग्यं शयनीयं। तन्मुख्यकमलपरितश्च श्रीदेव्याभरणभूतानि वलयाकाराणि तदर्द्धमानानि अष्टोत्तरशतपद्मानि। तत्परितो द्वितीयवलये वायव्येशानोत्तरदिक्षु चतुःसहस्रसामानिकसुराणां चतुःसहस्रसङ्ख्याकानि कमलानि, पूर्वदिशि चतसृणां महत्तरदेवीनां चत्वारि कमलानि, आग्नेय्यां गुरुस्थानीयाभ्यन्तरपार्षदाष्टसहस्रसुराणामष्टसहस्रकमलानि, दक्षिणस्यां मित्रस्थानीयमध्यमपार्षददशसहस्रसुराणां दशसहस्रकमलानि, नैर्ऋत्यां किङ्करस्थानीयबाह्यपार्षदद्वादशसहस्रसुराणां द्वादशसहस्रकमलानि, पश्चिमायां हस्त्य १ श्व २ रथ ३ पदाति ४ महिष ५ गन्धर्व ६ नाट्य ७ रूपसप्तसैन्यस्वामिनां सप्तसङ्ख्यानि पद्मानि। ततस्तृतीयवलये षोडशसहस्राङ्गरक्षकदेवानां षोडशसहस्रकमलानि। चतुर्थवलये द्वात्रिंशल्लक्षाभ्यन्तराभियोगिकदेवानां द्वात्रिंशल्लक्षकमलानि। पञ्चमे वलये चत्वारिंशल्लक्षमध्यमाभियोगिकदेवानां चत्वारिंशल्लक्षकमलानि। षष्ठे वलयेऽष्टचत्वारिंशल्लक्षबाह्याभियोगिकसुराणामष्टचत्वारिंशल्लक्षकमलानि। एवं चात्मना सह षड्भिर्वलयैः सर्वसङ्ख्यया कमलानि एका कोटिः १ विंशतिर्लक्षाः २० पञ्चाशत्सहस्राः ५० शतमेकं १ विंशति २० श्चेति।' एवमेभिश्च कमलैः परिवृते कमले लष्टं—प्रधानं यथा स्यात्तथा संस्थितां—प्रासां अन्यत्रावस्थिताऽपि पद्महदवासिनी भवत्येवेति तत्रैव संस्थितामिति सू-

चनार्थमिदं विशेषणम्, पसत्थरूवं त्ति प्रशस्तरूपां सुपइट्ठिअ त्ति सुप्रतिष्ठितौ–समतलनिवेशौ कनकमयकूर्मणोन्न-तत्वात्सदृशमुपमानं ययोस्तादृशौ च चरणौ यस्याः सा तथा तां अच्चुन्नय त्ति अत्युन्नतं पीनमङ्गुष्ठाद्यङ्गं तत्र रजिता-रञ्जिता लाक्षारसेन रञ्जिता इव मांसला उन्नता–मध्योन्नतास्तनवः–तलिनास्ताम्रा–अरुणाः स्निग्धा–अरूक्षा नखा यस्याः सा तथा तां, यद्वाऽत्युन्नतानपि–निजरूपदर्पोद्धुरानपि प्रीणयन्तीति अत्युन्नतप्रीणा इति नखविशेषणमेव कार्यम् । कमलपलास त्ति कमलस्य पलाशानि–पत्राणि तद्वत्सुकुमालौ करचरणौ यस्याः सा चासौ कोमलव-राङ्गुलिश्चेति कुरुविंदावत्त त्ति कुरुविन्दावर्त्त–भूषणविशेष आवर्त्तविशेषो वा तद्वत्यौ वृत्तानुपूर्वे च जङ्घे यस्याः सा तथा तां, निगूढजानु त्ति गुप्तजानुं, गयवर त्ति गजवरकरो–गजेन्द्रशुण्डा तत्सदृशे पीवरे–पुष्टे ऊरू यस्यास्तां, चामीकर त्ति चामीकररचितमेखलायुक्तं कान्तं विस्तीर्णं श्रोणिचक्रं–कटिचक्रं यस्यास्तां, जच्चंजण त्ति जात्याञ्जनं–मर्दिताञ्जनं तथा च जात्याञ्जनभ्रमरजलदप्रकर इव वर्णेन तत्सदृशीत्यर्थः, ऋजुका–सरला समा–ऽविषमा संहिता–निरन्तरा तनुका–सूक्ष्मा आदेया–सुभगा लटभा–सविलासा सुकुमालमृदुका–सुकुमारेभ्योऽपि शिरीषपुष्पादिभ्योऽपि मृद्वी रमणीया–मनोज्ञा रोमराजी यस्यास्तां, नाभीमंडल त्ति नाभीमण्डलेन सुन्दरं–विशालं प्रशस्तं सुलक्षणत्वाज्जघनं यस्यास्तां, करयलमाइअ त्ति करतलेन–मुष्टिना माइअ त्ति मेयं–मानयोग्यं मानं वा प्रशस्तत्रिवलीकं–वलित्रययुक्तं मध्यं यस्यास्तां नाणामणि त्ति नानाप्रकाराणि यान्याभरणानि भूषणानि चेति योज्यम् । मणयः–चन्द्रकान्ताद्याः,

रत्नानि–वैडूर्यादीनि, कनकं–पीतवर्णं, तपनीयं–तदेव रक्तं, तच्च जात्यत्वाद्विमलमहच्छब्दाभ्यां विशेषितं तेषां यान्याभरणानि–अङ्गपरिधेयानि, यानि च भूषणानि–उपाङ्गपरिधेयानि, तैर्विराजितानि यथाक्रममङ्गानि–शिरःप्रभृतीनि उपाङ्गानि–चाङ्गुल्यादीनि यस्यास्तां, मंगु त्ति मागमस्त्वार्षत्वात् हारविरायंत त्ति हारेण विराजत् कुन्दमालया–कुन्दादिकुसुममालया परिणद्धं–व्याप्तं जलजलिंत त्ति जाज्वल्यमानं–देदीप्यमानं स्तनयुगलमेव विमलौ कलशौ यस्यास्तां, आइअपत्तिअ इत्यादि, अत्र मुक्ताकलापकेन कण्ठमणिसूत्रकेण शोभागुणसमुदयेन चेति विशेषणत्रयेण सविशेषणेन उपलक्षितामिति भगवतीविशेषणमध्याहृत्य व्याख्येयम्, तथाहि–आइअ त्ति आमर्यादया स्थानौचित्येन चिता–न्यस्ता या पत्रिका–मरकतपत्राणि ताभिर्विभूपितोऽलङ्कृतोऽथवा आदृतप्रत्ययितैः–सादरविश्वस्तविज्ञानिकैर्विभूपितो–विरचितमण्डनस्तेन सुभग त्ति सुभगै–र्दृष्टिहारिभिर्जालै–र्गुच्छविशेषैरुज्ज्वलस्तेन एवंविधेन मुक्ताकलापकेनोपलक्षितां तथा उरत्थदीणार त्ति चः–पुनरर्थे उरःस्थया दीनारमालया विरचितेन विराजितेन वा कण्ठमणिसूत्रकेण–कण्ठस्थरत्नमयसूत्रेणोपलक्षितां तथा कुंडल त्ति 'देहलीप्रदीप'न्यायेन चकारस्यात्रापि सम्बन्धात् पुनः कीदृशीं भगवतीं आर्षत्वादंसोपसक्तमिति विशेषणस्यापि परनिपातेनांसयोः–स्कन्धयोरुपसक्तं–लग्नं यत्कुण्डलयुगलं तस्योल्लसन्ती–शोभमाना सती प्रशस्ता प्रभा यत्रैवंविधेन शोभागुणसमुदयेन–दीप्तिलक्षणगुणप्राग्भारेण किंलक्षणेन आननकौटुम्बिकेन–यथा किल राज्ञः शोभाकारिणः कौटुम्बिकाः तथा मुखनरेन्द्रस्य शोभाकारित्वेन यः कौटुम्बि-

कम्रार्थोऽसोपसक्तकुण्डलयुगलोल्लसत्प्रभः शोभागुणसमुदयस्तेनोपलक्षितामिति, कमलामलविशालरमणीयलोचनामिति तु स्पष्टमेव, कमलपज्जलंत त्ति प्राग्वत् परनिपाते प्रज्वलन्तौ—दीप्तिमन्तौ यौ करौ ताभ्यां गृहीते ये कमले ताभ्या मुक्तं—क्षरत्तोयं—मकरन्दरूपं जलं यस्याः सा तथा तां, लील त्ति लीलया न पुनः खेदापनोदार्थं खेदस्यैवाभावात् वातार्थं—वातोत्क्षेपार्थं कृतो यः पक्षकः—तालवृन्तं तेनोपलक्षितामित्यत्राप्यध्याहार्यम्, यद्वा लीलार्थं—शोभार्थं परैः सह स्पर्द्धया यो वादस्तत्र कृतो—विहितो यः पक्षः—प्रतिज्ञापरिग्रहः कप्रत्यये तेन सुविसद त्ति सुविशदः—स्पष्टो न पुनर्जटाजूटवदविवृतः कृष्णः—श्यामो घनो—ऽविरलः सूक्ष्मः—तलिनो लम्बमानः केशहस्तः—केशपाशो यस्यास्ताम् ४॥३६॥

तओ पुणो सरसकुसुममंदारदामरमणिज्जभूअं, चंपगासोगपुन्नागनागपिअंगुसिरीसमुग्गरमल्लिआजाइजूहिअकोल्लकोज्जकोरिंटपत्तदमणयनवमालिअबउलतिलयवासंतिअपउमुप्पलपाडलकुंदाइमुत्तसहकारसुरभिगंधिं, अणुवमसणोहरेणं गंधेणं दसदिसाओ वि वासयंतं, सव्वोउअसुरभिकुसुममल्लधवलविलसंतकंतबहुवन्नभत्तिचित्तं, छप्पयमहुअरिभमरगणगुमगुमायंतनिलिंतगुंजंतदेसभागं, दामं, पिच्छइ, नभंगणतलाओ ओवयंतं। ५ ॥ ३७ ॥

व्याख्या—तओ पुणो सरसेत्यादित ओवयंतमिति पर्यन्तम्, तत्र ततः पुनर्नभस्तलादवपतद्दाम पश्यति कीदृशं सरस त्ति सरसकुसुमानि यानि मन्दारदामानि—कल्पद्रुममालास्तैः परिकरितत्वाद्रमणीयभूतं रम्यमित्यर्थः, चंपगा-

सोग त्ति चम्पकाशोकादीनां सहकारान्तानां यः सुरभिर्गन्धः सोऽस्ति यस्य तत्, अणुवम त्ति अनुपममनोहरेण गन्धेन व्यवहितस्याप्यपेः सम्बन्धाद्दशापि दिशो वासयत्, सव्वोउअ त्ति सर्वर्तुकं यत्सुरभिकुसुममाल्यं तेन धवलं तच्च तद्विलसत्कान्तबहुवर्णभक्तिचित्रं चेति विशेषणकर्मधारयः, अनेन धवलवर्णस्याधिक्यं लक्ष्यते, छप्पयमहुअरि त्ति प्राकृतत्वात् प्राग्वद्विशेषणानां परत्वेऽपि गुमगुमायमानो—मधुरं ध्वनन् निलीयमानः—स्थानान्तरादागत्य च तत्र लीयमानो गुञ्जन्—शब्दविशेषं कुर्वंश्च षट्पदमधुकरीभ्रमराणां—वर्णादिभेदभिन्नभ्रमरजातीनां गणः—समुदायो देशभागेषु तस्मिन् तस्मिन् देशे यस्य तद् गुमगुमायमाननिलीयमानगुञ्जत्पट्पदमधुकरीभ्रमरगणदेशभागमित्यर्थः । ५ ॥ ३७ ॥

ससिं च गोखीरफेणदगरयरययकलसपंडुरं, सुभं, हिअयनयणकंतं, पडिपुन्नं, तिमिरनिकरघणगुहिरवितिमिरकरं, पमाणपक्खंतरायलेहं, कुमुअवणविबोहगं, निसासोहगं, सुपरिमट्ठदप्पणतलोवमं, हंसपडुवन्नं, जोइसमुहमंडगं, तमरिपुं, मयणसरापूरं, समुद्दगपूरगं, दुम्मणं जणं दइअवज्जिअं पायएहिं सोसयंतं, पुणो सोमचारुरूवं, पिच्छइ । सा गगणमंडलविसालसोमचंकम्ममाणातिलयं, रोहिणिमणहिअयवल्लहं, देवी पुन्नचंदं समुल्लसंतं । ६ ॥ ३८ ॥

व्याख्या—ससिं चेत्यादितः समुल्लसंतमिति पर्यन्तं, तत्र ततः पुनः सा त्रिशला देवी षष्ठे स्वप्ने शशिनं च पश्यति ।

कीदृशं ? गोक्षीरफेनदकरजोरजतकलशपाण्डुरं, शुभं, हृदयनयनकान्तं, प्रतिपूर्णं—षोडशकलासंयुक्तमित्यर्थः । तिमिर त्ति
तिमिरनिकरेण घणगुहिर त्ति निविडगम्भीरस्य वनकुञ्जादेः वितिमिरं ति तिमिराणामभावस्तत्करणशीलं, पमाण-
पक्खं ति प्रमाणपक्षयोर्वर्पादिप्रमाणहेत्वोः शुक्लकृष्णपक्षयोरन्तर्मध्ये राजन्ती लेखाः—कला यस्याथवा चान्द्रमासापे-
क्षया प्रमाणपक्षयोरन्ते पूर्णमास्यां रागदा—हर्षदायिन्यो लेखाः—कला यस्य तं परिपूर्णकलमित्यर्थः, कुमुदवनविबो-
धकं, निशायाः शोभकं, सुपरिमृष्टेन दर्प्पणतलेनोपमा यस्य तं, हंसस्येव पटुः—धवलो वर्णो यस्य तं, ज्योतिषां मुख-
मण्डकं, तमोरिपुं, मदनस्य शरापूरं—तूणीरमिव यस्मादुदिते किल चन्द्रे कामः कामिनः स्वशराणां लक्षीकरोति, स-
मुद्रस्य दकं—पानीयं पूरयतीति चन्द्रिकया तदुल्लासकारित्वादिति तं, दुर्मनरकं दयितवर्जितं जनं—विरहिणीलोकं
पादकैः—प्रशंसायां कप्रत्यये किरणैः शोषयन्तं तापातिरेककरणात्, पुनःशब्दः प्रथममेव योजितः, सौम्यं सन्तं
चारुरूपं, गगण त्ति प्राग्वत्परनिपाते विशालस्य गगनमण्डलस्य सौम्यं चङ्क्रम्यमाणं जङ्गमतिलकमिव विभूषाहेतु-
त्वात्, रोहिण्याः मनः—चित्तं तस्य हितदो—अनुकूलदायी वल्लभः—प्रियस्तं, हितद इति त्वेकपाक्षिकप्रेमनिरासार्थं
सर्वनक्षत्राधिपतित्वेऽपि यदत्र रोहिणीमनोहितदवल्लभ इति विशेषणं तल्लोकरूढ्या । पूर्णो—अविकलश्चन्द्र—आल्हा-
दोऽस्मादथवा पूर्णश्चन्द्रो—दीप्तिर्घनाघनावृतत्वाद्यस्य तं अत एव समुल्लसन्तं—प्रतिक्षणं देदीप्यमानम् । ६ । ३८ ॥

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंतरूवं, रत्तासोगपगासकिंसुअसुअमुहगुंज-

च्छरायसरिसं, कमलवणालंकरणं, अंकणं जोइसस्स, अंबरतलपईवं, हिमपडलगलग्गहं, गहगणोरुनायगं, रत्तिविणासं, उदयत्थमणेसु मुहुत्तसुहदंसणं, दुन्निरिक्खरूवं, रत्तिमुद्धंतदुप्पयारप्पमद्दणं, सीअवेगमहणं, पिच्छइ, मेरुगिरिसययपरिअट्टयं, विसालं, सूरं, रस्सीसहस्सपयलिअदित्तसोहं । ७ । ३९ ॥

व्याख्या—तओ पुणो तमेत्यादितो दित्तसोहमित्यन्तम्, तत्र ततः पुनः सप्तमे स्वप्ने सूर्यं पश्यति । कीदृशं ? तम त्ति तमःपटलस्याभावोऽतमःपटलं तेन परिस्फुटं—सर्वदिक्षु प्रकटं यद्वा तमःपटलं परिस्फोटयतीति तमःपटलपरिस्फोटस्तं, चेव तेअस त्ति चैवशब्दस्यावधारणार्थस्य व्यवहितस्यापि सम्बन्धात्तेजसैव प्रज्वलद्रूपं, प्रकृत्या हि सूर्यमण्डलवर्त्तिबादरपृथ्वीकायिकाः शीतला एव। अथवा चेव त्ति समुच्चयार्थः, रत्तासोग त्ति रक्ताशोकश्च प्रकाशकिंशुकश्च—पुष्पितपलाशः शुकमुखं च गुञ्जार्द्धश्च तेषां रागेण सदृशमारक्तत्वात्, कमलवनमलङ्करोति—विकाशश्रिया विभूषयतीति कमलवनालङ्करणस्तं, ज्योतिषां समूहो ज्यौतिषं—ज्योतिश्चक्रं तस्याङ्कनं—मेषादिराशिसङ्क्रमणादिना लक्षणज्ञापकं, अम्बरतलप्रदीपं, हिमपटलं गलेगृह्णातीति हिमपटलगलग्रहः—अवश्यायराशेर्गले हस्तयितेत्यर्थः, ततस्तं, ग्रहगणस्य उरुः—महान्नायकस्तं, रात्रिविनाशमिति स्पष्टं, उदयास्तमयोर्मुहूर्त्तसुखदर्शनं, अन्यदा तु दुर्निरीक्ष्यरूपमिति व्यक्तम् । रत्तिमुद्धंत त्ति रात्रौ मकारस्यालाक्षणिकत्वादुद्धावत-उच्छृङ्खलान् दुःप्रचारान्—चौरपारदारिकादीन्

दुष्टप्रचारान् प्रमर्द्दयति यस्तं, शीतवेगमथनं—जाड्यातिशयविध्वंसकं मेरुगिरिं सततं—निरन्तरं परिवर्त्तयति प्रदक्षिणयतीति मेरुगिरिसततपरिवर्त्तकस्तं, विशालं—विपुलमण्डलं, रश्मिसहस्रेण हेतुभूतेन प्रगलिता—प्रदलिता वा दीप्तानामपि चन्द्रादीनां शोभा यस्माद्येन वा स तथा तं, अत्र रश्मिसहस्राभिधानं रूढ्याऽवगन्तव्यम्, अन्यथाऽधिक्यमपि रविरश्मीनां लोकशास्त्रेपूच्यते यथा—"ऋतुभेदात् पुनस्तस्याऽतिरिच्यन्तेऽपि रश्मयः । शतानि द्वादश मधौ, त्रयोदश तु माधवे ॥ १ ॥ चतुर्दश पुनर्ज्येष्ठे, नभो नभस्ययोस्तथा । पञ्चदशैव चाषाढे, षोडशैव तथाश्विने ॥ २ ॥ कार्त्तिके त्वेकादश च, शतान्येवं तपस्यपि । मार्गे च दश सार्द्धानि, शतान्येवं च फाल्गुने ॥ ३ ॥ पोष एव परं मासि, सहस्रं किरणा रवेः ।" इति । ७ ॥ ३९ ॥

तओ पुणो जच्चकणगलट्ठिपइट्ठिअं, समूहनीलरत्तपीअसुक्किलसुकुमालुल्लसिअमोरपिच्छकयमुद्धयं, धयं, अहिअसस्सिरीअं, फालिअसंखंककुंददगरयरययकलसपंडुरेण मत्थयत्थेण सीहेण रायमाणेण रायमाणं, भित्तु गगणतलमंडलं चेव ववसिएणं पिच्छइ, सिवमउअमारुअलयाहयकंपमाणं, अइप्पमाणं, जणपिच्छणिज्जरूवं । ८ ॥ ४० ॥

व्याख्या—तओ पुणो जच्चेत्यादितः पिच्छणिज्जरूवमित्यन्तम्, तत्र ततः पुनरष्टमे स्वप्ने ध्वजं पश्यति, जात्यकनकलष्टिप्रतिष्ठितं, समूहोऽस्त्येषामिति समूहा अभ्रादित्वाद् अप्रत्यये समूहवन्तः—प्रचुरा इत्यर्थः, तैर्नीलरक्तपीतशुक्लैः

कृष्णस्य नीलादनतिविप्रकर्षात् पञ्चवर्णैः सुकुमारैः—कोमलैरुल्लसद्भिः—वातेन स्फुरद्भिर्मयूरपिच्छैः कृता मूर्द्धजा इव—केशा इव यस्य स तथा तं, ध्वजमिति प्राग् योजितमेव । अधिकसश्रीकं—अतीवशोभायुक्तं, फालिअ त्ति स्फटिकं च शङ्खश्च—कम्बुः अथवा स्फाटितो—भिन्नः शङ्खः अङ्कश्च—रत्नविशेषः कुन्दश्च—कुन्दमाल्यं दकरजांसि च—जलकणाः रजतकलशो—रूप्यकुम्भस्तद्वत्पाण्डुरेण मस्तकस्थेन राजमानेन गगनमण्डलं भेत्तुं व्यवसितेनेव—कृतोद्यमेनेव अत्युच्चैस्त्वादियमुत्प्रेक्षा एवंविधेन सिंहेन—भगवल्लाञ्छनभूतसिंहाकारपताकया सिंहचित्रेण वा राजमानं सिवमउअ त्ति शिवः—सौम्यो मृदुको—अचण्डो यो मारुतो—वातस्तस्य लयः—श्लेषस्तेनाहतं—अन्दोलितमत एव कम्पमानं—इतस्ततो नृत्यन्तं, अथवार्षत्वात् लयाहय त्ति आहतविशेषणस्य प्राग्निपातेऽपि शिवमृदुकमारुताहतलतावत्कम्पमानमिति व्याख्येयम् । अतिप्रमाणं—महाप्रमाणं जनप्रेक्षणीयरूपम् । ८ ॥ ४० ॥

तओ पुणो जच्चकंचणुज्जलंतरूवं, निम्मलजलपुन्नमुत्तमं, दिप्पमाणसोहं, कमलकलावपरिरायमाणं, पडिपुन्नयसव्वमंगलभेअसमागमं, पवररयणपरायंतकमलट्ठिअं, नयणभूसणकरं, पभासमाणं, सव्वओ चेव दीवयंतं, सोमलच्छीनिभेलणं, सव्वपावपरिवज्जिअं, सुभं, भासुरं, सिरिवरं, सव्वोउअसुरभिकुसुमआसत्तमल्लदामं, पिच्छइ, सा रययपुन्नकलसं ॥ ९ ॥ ४१ ॥

व्याख्या—तओ पुणो जच्चकंचणेत्यादितः पुण्णकलसमित्यन्तम्, तत्र ततः सा नवमे स्वप्ने रजतपूर्णकलशं—रूप्य-

मयं पूर्णकलशं पश्यति, कीदृशं? जात्यकाञ्चनवत् उत्प्राबल्येन ज्वलत्—दिप्यमानं रूपं यस्य, केचित्तु रजतशब्दस्य रूप्यवाचकत्वेऽपि 'जच्चकंचणु' इत्यादिवचनेन विसंवादसम्भवादत्र कनकमेव ग्राह्मम्, तथा च स्वर्णमयमित्यर्थः। जच्च त्ति जात्यकाञ्चनेन उत्प्राबल्येन ज्वलद्रूपं यस्य तमिति व्याख्यानयन्ति, तत्रोक्तव्याख्यानानुसारेण विसंवादगन्धस्याप्यभावात् कथं तदनुरोधेन कल्पनया व्याख्यानं युक्तमिति बोध्यम्। निर्मलजलपूर्णं, उत्तमं, दीप्यमानशोभं, कमलकलापेन परि समन्ताद्राजमानम्, पडिपुन्नय त्ति प्रतिपूर्णकानां सर्वमङ्गलभेदानां समागमो—मेलापकः स्थानमित्यर्थः, क्वचिच्च पडिबुज्झंतसव्वमंगलालयसमागममिति पाठः, तत्र प्रतिबुध्यमानानि—जागरूकाणि यानि सर्वमङ्गलानि तेषामालयो—निवासभूतः समागमः—सम्मुखागमनं यस्य तं, प्रवररत्नैः प्रकर्षेण राजति कमले स्थितं, यद्वा प्रवरा रचना यस्यैवंविधः परागः—पुष्परजोऽन्तर्गर्भे यस्यैतादृशे कमले स्थितं, नयनानामानन्दकत्वाद्भूषणकरं, प्रभासमानं—स्वयं दीप्यमानं प्रभया समानं वा अत एव सर्वा दिशो दीपयन्तं, सौम्यलक्ष्म्याः—प्रशस्तसम्पदो निभेलणं ति देश्यत्वाद् गृहं, सर्वैः पापैः—अशिवैः परिवर्जितं, अत एव शुभं, भासुरं—दीप्तं, श्रिया—त्रिवर्गसम्पत्त्या वरं—श्रेष्ठं तदागमसूचकत्वात्, सर्वर्त्तुजानां सुरभिकुसुमानामासक्तं—कण्ठस्थं माल्यदाम—प्रशस्तमाला यस्मिन् तं, अत्र दामशब्दः परोऽपि प्रशंसार्थः, यथा वनान्तकपोलपालीत्यादौ अन्तपालीशब्दौ। ९ ॥ ४१ ॥

तओ पुण रविकिरणतरुणबोहिअसहस्सपत्तसुरभितरपिंजरजलं, जलचरपहकरपरिहत्थगम-

च्छपरिभुज्जमाणजलसंचयं, महंतं जलंतमिव कमलकुवलयउप्पलतामरसपुंडरीओरुसप्पमाणसिरिसमुदएणं रमणिज्जरूवसोभं, पमुइअंतभमरगणमत्तमहुअरिगणुक्करोलिज्झमाणकमलं, कायंबकबलाहयचक्ककलहंससारसगव्वियसउणगणमिहुणसेविज्जमाणसलिलं, पउमिणिपत्तोवलग्गजलबिंदुनिचयचित्तं, पिच्छइ। सा हिअयनयणकंतं, पउमसरं नाम सरं, सररुहाभिरामं। १०॥ ४२॥

व्याख्या—तओ पुण रविकिरणेत्यादितः सररुहाभिराममित्यन्तम्, तत्र ततः पुनः सा दशमे स्वप्ने पद्मसरः पश्यति, तरुणशब्दस्येह सम्बन्धात् तरुणरविकिरणैर्बोधितानि यानि सहस्रपत्राणि—पद्मानि तैः सुरभितरं पिञ्जरं च—पीतरक्तं जलं यस्य तत्तथा, अथवा पुणरवि त्ति पुनरपि किरणः—सूर्यस्तेन तरुणेन—अभिनवेन बोधितानीत्यादि योज्यम्। जलचरा—यादांसि तेषां पहकर त्ति देश्यत्वात् समूहस्तेन परिहत्थगं ति परिपूर्णं तच्च तन्मत्स्यपरिभुज्यमानजलसञ्चयं चेति विशेषणकर्मधारयः, महत् जलंत त्ति कमलं—सूर्यविकाशि, कुवलयं—नीलं, उत्पलं—रक्तं, तामरसं—महाम्भोजं, पुण्डरीकं—श्वेतमेपामुरुभिः—विशालैः सर्प्पद्भिः—उल्लसद्भिः श्रीसमुदयैः—कान्तिप्राग्भारैर्ज्वलदिव—देदीप्यमानमिव अत एव रमणीयरूपशोभं, पमुइअंत त्ति प्रमुदितमन्तः—चित्तं येषां ते प्रमुदितान्तरस्ते च ते भ्रमरगणाश्च

मत्ताः—समदा मधुकरीगणाश्च—भ्रमरजातिविशेषास्तेषामुत्कराः—समूहाः, अत्र समूहानामपि समूहाभिधानं बहुत्व-
ख्यापनार्थम्, ततस्तैरवलिह्यमानानि—आस्वाद्यमानानि कमलानि यत्र तत्, कायंवक त्ति कादम्बकाः—कलहंसाः,
बलाहका—बलाकाः, चक्काः—चक्रवाकाः, कला—मधुरध्वनयो, हंसा—राजहंसाः, सारसा—दीर्घजानुकास्ते च ते गर्विताः—
सुस्थानप्राप्तिदृप्ताः शकुनिगणाश्च—पक्षिसमूहास्तेषां मिथुनैः—द्वन्द्वैः सेव्यमानं सलिलं यस्य तत्, पद्मिनीपत्रोपलग्ना
ये जलबिन्दवस्तेषां निचयेन चित्रं मण्डितमिव, क्वचिच्च जलविंदुमुत्तचित्तमिति पाठः, तत्र जलबिन्दव एव मुक्ता-
मौक्तिकानि ताभिश्चित्रमिति व्याख्येयम् । हृदयनयनकान्तं, सररुहाभिरामं ति सरस्सु—सरसीषु अर्हं—पूज्यं अत
एवाभिरामं सरोर्हाभिरामं उच्चार्हतीति सूत्रेण हकारात्पूर्वमुकारः । १० ॥ ४२ ॥

तओ पुणो चंदकिरणरासिसरिससिरिवच्छसोहं, चउगमणपवद्धमाणजलसंचयं, चवलचंचलु-
च्चायप्पमाणकल्लोललोलंततोयं, पडुपवणाहयचलियचवलपागडतरंगरंगंतभंगखोखुब्भमाणसो-
भंतनिम्मलउक्कडउम्मीसहसंबंधधावमाणोनियत्तभासुरतराभिरामं, महामगरमच्छतिमिति-
मिंगिलनिरुद्धतिलितिलियाभिघायकप्पूरफेणपसरं, महानईतुरियवेगमागयभमगंगावत्तगुप्प-
माणुच्चलंतपच्चोनियत्तभममाणलोलसलिलं, पिच्छइ, खीरोयसायरं, सारयरयणिकरसो-
मवयणा । ११ ॥ ४३ ॥

व्याख्या—तओ पुणो चंदेत्यादितः सोमवयणेति पर्यन्तम्, तत्र ततः पुनरेकादशे स्वप्ने शरद्रजनीकरसौम्यवदना त्रिशला क्षीरोदसागरं पश्यति, चंद त्ति चन्द्रकिरणराशेः सदृशा श्रीर्यस्या एवंविधा वक्षःशोभा यस्य स तथा तं, वक्षःशब्देनात्र मध्यभागो लक्ष्यः, चउगमण त्ति चतुर्गमनेषु—चतुर्दिग्मार्गेषु प्रवर्द्धमानः प्रवर्त्तमानो वा—प्रसरन् जलसंचयो यस्य, चउगुणपवड्ढमाणजलसंचयमिति पाठस्तु कस्माच्चतुर्गुणत्वमित्यनपेक्ष्यैवाधिक्यमात्रस्यैव विवक्षितत्वात्सुगम एव चवल त्ति चपलेभ्योऽपि चञ्चलैरुच्चात्मप्रमाणैश्चात्युन्नतस्वमानैः कल्लोलैर्महातरङ्गैः—लोलत्—एकीभूय विरलीभवत्तोयं—पानीयं यस्य स तथा तं, पडुपवण त्ति पटुपवनाहतास्सन्तश्चलिताः—प्रवृत्ता अत एव चपलाः प्रकटाश्च—स्पष्टास्तरङ्गाः—सामान्येन कल्लोलाः तथा रङ्गन्त—इतस्ततः प्रेङ्खन्तो भङ्गाः—'भङ्गस्तरङ्गभेदे च' इति वचनात्, तरङ्गविशेषा एव तथा खोखुब्भमाण त्ति अतिक्षुभ्यन्तः शोभमानाः निर्म्मलाः—स्वच्छाः उत्कटा—दुस्सहा ऊर्म्मयो—विच्छित्तिमन्तः कल्लोलाः ततस्तरङ्गान्तभङ्गान्तोर्म्यन्तपदानां द्वन्द्वः तैः सह—सार्द्धं यः सम्बन्धस्तेन पूर्वं धावमानः—तीराभिमुखं सर्प्पन् भासुरतरो—अतिदीप्तिमान् अपनिवृत्तश्चाभिरामो दीप्तिमानेव यद्वा धावमानोऽपनिवृत्तश्च सन् भासुरतरोऽतिदीप्तिमान् अत एवाभि—समन्ततो रामो—रमणीयः, पश्यतां दृक्पथमागतोऽत्यन्तप्रीतिदायीत्यर्थः। एतदर्थानुपातिनी श्रीजयसुन्दरसूरिकृतार्या यथा—"कल्लोललोलसलिलं, धावदपसरद्बहूर्म्मिरम्यतटम्। नद्यागमसावर्त्तं, क्षीराब्धिं सैक्षत गभीरम्॥ १॥" यत्तु केचित् 'भयङ्करे तु डमरमाभीलं भासुरं तथा' इति शेषवचनात्, धावमानो

भासुरतरो–ऽतिभयङ्करोऽपनिवृत्तश्चाभिरामो हृद्य इति व्याख्यान्ति, तन्न ख्यातिमत् । यतस्तीर्थकृन्मातरः क्रूरात्मानमपि सिंहं सौम्याकारमेव स्वप्ने पश्यन्ति, कथं पुनः क्षीरसमुद्रमतिभयङ्करमिति स्वयमेवालोच्यम् । लोलंततोयेति निर्विभक्तिकपाठे तु तोयान्तपदेनापि सह विशेषणकर्म्मधारयः महामगर त्ति महान्तो मकराश्च मत्स्याश्च तिमयश्च तिमिङ्गिलाश्च निरुद्धाश्च तिलितिलिकाश्च–जलचरजन्तुभेदास्तेषामभिघातेन–पुच्छाद्यास्फोटनेन कर्पूर इव कर्पूर उज्ज्वलत्वात् फेनप्रसरो यत्र स तथा तं, महानई त्ति महानदीनां–गङ्गादीनां त्वरितवेगैरागतभ्रम–उत्पन्नभ्रमणो योऽसौ गङ्गावर्त्ताख्य आवर्त्तस्तत्र गुप्यत्–व्याकुलीभवत्, अत एवोच्चलत्–उच्छलत् प्रत्यवनिवृत्तं च–व्यावृत्तं भ्रममाणं–भ्रमणशीलं लोलं–स्वभावादस्थिरं सलिलं यस्य। ११ ॥ ४३ ॥

तओ पुणो तरुणसूरमंडलसमप्पभं, दिप्पमाणसोहं, उत्तमकंचणमहामणिसमूहपवरतेयअट्ठसहस्सदिप्पंतनहप्पईवं, कणगपयरलंबमाणमुत्तासमुज्जलं, जलंतदिव्वदामं, ईहामिगउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरसंसत्तकुंजरवणलयपउमलयभत्तिचित्तं, गंधव्वोपवज्जमाणसंपुन्नघोसं, निच्चं, सजलघणविउलजलहरगज्जियसद्दाणुनाइणा देवदुंदुहिमहारवेणं सयलमवि जीवलोयं पूरयंतं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूववासंगउत्तममघ-

मघंतगंधुद्धुयाभिरामं, निच्चालोयं, सेयं, सेयप्पभं, सुरवराभिरामं, पिच्छइ सा सातोवभोगं, वरविमाणपुंडरीयं । १२ ॥ ४४ ॥

व्याख्या—तओ पुणो तरुणेत्यादितः पुंडरीयमिति यावत्, तत्र ततः सा त्रिशला द्वादशे स्वप्ने विमानवरपुण्डरीकं प्रेक्षते, 'तरुणसूर त्ति' तरुणसूरमण्डलसमप्रभं, दीप्यमानशोभं, उत्तमकंचण त्ति उत्तमकाञ्चनमहामणिसमूहैः प्रवराणां तेअ त्ति, तेकंते—गच्छन्त्याधारभावमिति तेका अथवा त्रायन्ते पतद्गृहमिति त्रेयाः तेकानां त्रेयाणां वा—स्तम्भानामष्टोत्तरसहस्रेण दीप्यमानं सत् नभः प्रदीपयति—प्रकाशयति यत्तत्तथा, कणगपयर त्ति कनकप्रतरेषु—सुवर्णपत्रेषु लम्बमानाभिर्मुक्ताभिः समुज्वलं, कनकप्रकरैर्लम्बमानमुक्ताभिश्च समुज्वलमित्यन्ये, ज्वलद्दिव्यदाम, ईहामिग त्ति ईहामृगा—वृकाः, व्यालकाः—सर्पाः, रुरवो—मृगभेदाः, संसक्ताः—श्वापदविशेषाः, वनलता—अशोकलताद्याः, पद्मलताः—पद्मिन्यः, शेषाः प्रतीताः । एषां भक्तिभिः—विच्छित्तिभिश्चित्रं—नानारूपं गंधव्व त्ति गन्धर्वस्य—गीतस्योपवाद्यमानस्य—वादित्रस्य च सम्पूर्णो घोषो यत्र तत्तथा, नित्यं—शाश्वतं, सजलो घनोऽविरलः विपुलः—पृथुलो यो जलधरो—मेघस्तस्य गर्जितशब्दस्तद्वदनुनादिना—प्रतिरवयुक्तेन देवदुन्दुभिमहारवेण सकलमपि जीवलोकं पूरयन्तं—आप्याययन्तं चतुर्दशरज्ज्वात्मकं वा लोकं व्याप्नुवन्तं कालागुरुप्रवरकुंदुरुक्कतुरुष्काः प्रागिव ते च दह्यमानो धूपश्च—दशाङ्गादिर्वासाङ्गानि च—गन्धमालिनीग्रन्थोक्तसुरभीकरणोपायभूततत्तद्द्रव्याणि तेषामुत्तमेन मघमघायमानेन गन्धेन

उद्धुतेन–इतस्ततो विप्रसृतेनाभिरामं यत्तत्तथा, क्वचित् डज्झंतधूवसारसंगत इति पाठस्तत्र दह्यमानो यो धूपसार–उत्कृष्टधूपस्तस्य सङ्गतेन–हृदयङ्गमेनोत्तमेनेति व्याख्येयम्, नित्यालोकं–नित्योद्योतयुक्तं, श्वेतं, श्वेतप्रभं, सुरवराभिरामं ति सुरवरानभिरमयतीति यद्वा सुराणां वरा-अभि समन्तात् रामाः–स्त्रियो यस्मिन् सातस्य–सातवेदनीयस्य कर्म्मण उपभोगो यत्र पञ्चधा विषयसुखसम्पत्तेः, विमानवरेषु पुण्डरीकमिव श्रेष्ठत्वात् । १२ ॥ ४४ ॥

तओ पुणो पुलगवेरिंदनीलसासगकक्केयणलोहियक्खमरगयमसारगल्लपवालफलिहसोगंधियहंसगब्भअंजणचंदप्पहवररयणेहिं महियलपइट्ठियं गगनमंडलंतं पभासयंतं, तुंगं, मेरुगिरिसन्निकासं, पिच्छइ, सा रयणनिकररासिं । १३ ॥ ४५ ॥

व्याख्या—तओ पुणो पुलगेत्यादितो रयणनिकररासिमिति यावत्, तत्र ततः पुनः सा त्रिशला त्रयोदशे स्वप्ने रत्ननिकरराशिं पश्यति । पुलग त्ति पुलकादयो–रत्नविशेषाः प्रसिद्धाः, नवरं वेर त्ति वज्रं, सासग त्ति सस्यकं, चन्द्रप्रभः–चन्द्रकान्तः, महीतलप्रतिष्ठितमिति राशिविशेषणं, पुलकादिवररत्नैर्गगनमण्डलान्तं यावत्प्रकाशयन्तं, तुङ्ग–उच्चं तुङ्गत्वमनियतमित्याह–मेरुगिरेः सन्निकाशं–तुल्यं रत्ननिकराणां राशिरुच्छ्रितः समूहविशेषस्तम् । १३ । ४५ ॥

सिहिं च सा विउलुज्जलपिंगलमहुघयपरिसिच्चमाणनिद्धूमधगधगाइयजलंतजालुज्जलाभिरामं,

तरतमजोगजुत्तेहिं जालपयरेहिं अन्नुन्नमिव अणुप्पइन्नं, पिच्छइ, सा जालुज्जलणगअंबरं व कत्थइ पयंतं, अइवेगचंचलं, सिहिं । १४ ॥ ४६ ॥

व्याख्या—सिहिं चेत्यादितः सिहिमिति पर्यन्तम्, तत्र सिहिमिति 'गयवसह'गाथाया अन्ते सिहिं चेति यत्पदं तस्येदं ग्रहणवाक्यमत एव तत इति नोक्तम्, विशेष्यपदं तु स्वप्नवर्णकान्ते सिहिमिति शिखिनं चतुर्दशे स्वप्ने सा त्रिशला पश्यति । विउलुज्जल त्ति विपुला उज्ज्वलेन पिङ्गलेन च मधुघृतेन परिषिच्यमाना निर्धूमा धगधगायमाना—धगधगिति कुर्वत्यो ज्वलन्त्यो—दीप्यमाना या ज्वाला—अर्चिषस्ताभिरुज्ज्वलमत एवाभिरामं, तरतमयोगो विद्यते येषु ते तरतमयोगा अभ्रादित्वादप्रत्ययः, एका ज्वाला उच्चान्यातूच्चतराऽपरा चोच्चतमा इति तरतमयोगयुक्तैः, ज्वालानां प्रकरैः कलापैरन्योन्यमनुप्रकीर्णमिव—मिश्रितमिव स्पर्द्धया तदीया ज्वाला—अन्योऽन्यमनुप्रविशन्तीवेत्यर्थः, ज्वालानामुत्—ऊर्ध्वं ज्वलनं-ज्वालोज्ज्वलनं तदेव ज्वालोज्ज्वलनकमार्षत्वाद्विभक्तिलोपे तेन कत्थइ त्ति क्वचित् प्रदेशेऽम्बरं-आकाशं पचन्तमिव क्वचिदभ्रंलिहाभिर्ज्वालाभिराकाशमिव पक्तुमुद्यतमिति भावः । अतिवेगचञ्चलम् ॥ १४ ॥ ४६ ॥

इमे एयारिसे सुभे सोमे पियदंसणे सुरूवे सुमिणे दट्ठूण सयणमज्झे पडिबुद्धा । अरविंदलोयणा हरिसपुलइअंगी, "एए चउदस सुविणे, सव्वा पासेइ तित्थयरमाया । जं रयणिं वक्कमई, कुच्छिसि महायसो अरहा ॥ १ ॥" ॥ ४७ ॥

व्याख्या—इमे एआरिसेत्यादितः अरहेति पर्यन्तम्, तत्र इमान् एतादृशान् शुभान्—कल्याणहेतून् सोमे इति सौम्यान् उमा—कीर्त्तिस्तत्सहितान् वा प्रियं दर्शनं-स्वप्नेऽवभासो येषां ते तथा तान् सुरूपान्—शोभनस्वभावान् स्वप्नान् गजादीन् शयनमध्ये—निद्रान्तरे दृष्ट्वा प्रतिबुद्धा-जागरिता शेषं प्राग्वत् ॥ ४७ ॥

तएणं सा तिसला खत्तियाणी इमे एआरूवे उराले चउद्दसमहासुमिणे पासित्ता णं पडिबुद्धा समाणी हट्ठतुट्ठ जाव हयहियया धाराहयकयंबपुप्फगंपि व समुस्ससियरोमकूवा सुमिणुग्गहं करेइ, करित्ता सयणिज्जाओ अब्भुट्ठेइ, अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ, पच्चोरुहित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सयणिज्जे जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छइ, उवागच्छित्ता सिद्धत्थं खत्तियं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुण्णाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं सस्सिरीयाहिं हिययगमणिज्जाहिं हिअयपल्हायणिज्जाहिं मियमहुरमंजुलाहिं गिराहिं संलवमाणी संलवमाणी पडिबोहेइ ॥ ४८ ॥

व्याख्या—तएणं सेत्यादितः पडिबोहेइ त्ति पर्यन्तम्, तत्र स्वप्नानामवग्रहं-स्मरणं करोति, अत्वरितं-मानसौत्सुक्याभावात् अचपलं-कायतः असम्भ्रान्तया-ऽस्खलन्त्या अविलंबियाए त्ति पाठे अविलम्बितया—ऽविच्छिन्नया राज-

हंसगतिसदृश्या गत्या ताहिं इट्ठाहिं त्ति या विशिष्टगुणोपेतास्ताभिर्गीर्भिरिति सम्बन्धः, इष्टाभिः—तस्य वल्लभाभिः, कान्ताभिः—अभिलषिताभिः सदैव तेन प्रियाभिः—अद्वेष्याभिः सर्वेषामपि, मनोज्ञाभिः—मनोरमाभिः कथयाऽपि, मणामाहिं ति मनसाऽम्यन्ते—गम्यन्ते सुन्दरत्वातिशयात् पुनः पुनर्यास्ता मनोऽमास्ताभिः चिन्तयाऽपि मनःप्रियाभिरित्यर्थः, उदाराभिः—उदारनादवर्णोच्चारादियुक्ताभिः प्रधानाभिर्वा, कल्याणाभिः—समृद्धिकारिकाभिः, शिवाभिः—उपद्रवहन्त्रीभिर्गीर्दोषानुपद्रुताभिर्वा, धन्याभिः—धनलम्भिकाभिर्माङ्गल्याभिः—मङ्गले—ऽनर्थप्रतिघाते साध्वीभिः, सश्रीकाभिः—अलङ्कारादिशोभावतीभिः, हिअयगमणिज्जाहिं त्ति हृदये या गच्छन्ति कोमलत्वात्सुबोधत्वाच्च तास्तथा ताभिः हृदयप्रल्हादनीयाभिः—हृद्गतशोकाद्युच्छेदिकाभिर्मिता—वर्णपदवाक्यापेक्षया परिमिताः मधुराः—स्वरतो मञ्जुला—मनोरमाः शब्दतो यास्तास्ततः पदत्रयस्य कर्मधारयः ॥ ४८ ॥

तए णं सा तिसला खत्तियाणी सिद्धत्थेणं रन्ना अब्भणुण्णाया समाणी नाणामणिकणगरयणभत्तिचित्तंसि भद्दासणंसि निसीयइ, निसीइत्ता आसत्था वीसत्था सुहासणवरगया सिद्धत्थं खत्तियं ताहिं इट्ठाहिं जाव संलवमाणी संलवमाणी एवं वयासी ॥ ४९ ॥

व्याख्या—तए णं सा इत्यादित एवं वयासीति पर्यन्तम्, तत्र ततोऽनन्तरं णं—वाक्यालङ्कारे णाणामणि त्ति नानामणिकनकरत्नानां भक्तिभिः—विच्छित्तिभिश्चित्रे—विचित्रे शेषं प्राग्वत् ॥ ४९ ॥

उराला णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, कल्लाणा णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, एवं सिवा धन्ना मंगल्ला सस्सिरीया आरुग्गतुट्ठिदीहाउकल्लाण ३०० मंगल्लकारगा णं तुमे देवाणुप्पिए सुमिणा दिट्ठा, अत्थलाभो देवाणुप्पिए ! भोगलाभो देवाणुप्पिए ! पुत्तलाभो देवाणुप्पिए ! सुखलाभो देवाणुप्पिए! रज्जलाभो देवाणुप्पिए! एवं खलु तुमे देवाणुप्पिए! नवन्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाण राइंदियाणं विइक्कंताणं, अम्हं कुलकेउं अम्हं कुलदीवं कुलपव्वयं कुलवडिंसयं कुलतिलयं कुलकित्तिकरं कुलवित्तिकरं कुलदिणयरं कुलआधारं कुलनंदिकरं कुलजसकरं कुलपायवं कुलविवद्धणकरं, सुकुमालपाणिपायं अहीणसंपुन्नपंचिंदियसरीरं लक्खणवंजणगुणोववेयं माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पियदंसणं सुरूवं दारयं पयाहिसि ॥ ५२ ॥

व्याख्या—उराला णं तुमे इत्यादितः पयाहिसि त्ति पर्यन्तम्, तत्र देवाणुप्पिए त्ति हे सरलस्वभावे! अर्थो–हिरण्यादिः, भोगाः–शब्दादयः, पुत्रलाभः–सुतजन्म, सौख्यं–निर्वृतिः, राज्यं–सप्ताङ्गरूपं, भविष्यतीति शेषः । कुलकेत्वादीनि त्रयोदश पदानि केतु–चिन्हं ध्वजः केतुरिव केतुरद्भुतभूतत्वात्, पाठान्तरे कुलस्य हेतुः–कारणं, एवं दीप इव दीपः प्रकाशकत्वान्मङ्गलत्वाच्च, पर्वतो–ऽनभिभवनीयः स्थिराश्रयसाधर्म्यात्, अवतंसः–शेखर उत्तमत्वात्,

पडिच्छियमेयं सामी! इच्छियपडिच्छियमेयं सामी! सच्चे णं एसमट्ठे से जहेयं तुब्भे वयह त्तिकट्टु ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता सिद्धत्थेणं रन्ना अब्भणुन्नाया समाणी नाणा-मणिकणगरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सए सयणिज्जे तेणेव उवागच्छइ, उवागच्छित्ता एवं वयासी ॥ ५५ ॥

व्याख्या—एवमेयं सामीत्यादित एवं वयासि त्ति पर्यन्तं प्राग्वत् ॥ ५५ ॥

मा मे ते उत्तमा पहाणा मंगल्ला सुमिणा दिट्ठा, अन्नेहिं पावसुमिणेहिं पडिहम्मिस्संति त्तिकट्टु देवयगुरुजणसंबद्धाहिं पसत्थाहिं मंगल्लाहिं धम्मियाहिं लट्ठाहिं कहाहिं सुमिणजागरियं जागरमाणी पडिजागरमाणी विहरइ ॥ ५६ ॥

व्याख्या—मा मे ते उत्तमा इत्यादितो विहरइ त्ति पर्यन्तम्, तत्र उत्तमाः-स्वरूपतः, प्रधानाः-फलत, एतदेवाह—मङ्गल्या—मङ्गले साधवः सुमिणजागरिअं ति स्वप्नसंरक्षणार्थं जागरिकां जाग्रती—विदधती प्रतिजाग्रती—तानेव स्वप्नान् संरक्षणेनोपचरन्ती ॥ ५६ ॥

तए णं सिद्धत्थे खत्तिए पच्चूसकालसमयंसि कोडुंबियपुरिसे सद्दावेइ, सद्दावित्ता एवं वयासी ॥५७॥

व्याख्या—तएणं सिद्धत्थे इत्यादितो वयासीति पर्यन्तम्, तत्र पचूस त्ति प्रत्यूषकाललक्षणो यः समयो-ऽवसरस्तस्मिन् कौटुम्बिकपुरुषान्-आदेशकारिणः सद्दावेइ त्ति आह्वयति ॥ ५७ ॥

खिप्पामेव भो ! देवाणुप्पिया ! अज्ज सविसेसं बाहिरियं उवट्ठाणसालं गंधोदगसित्तसुइअसंमज्जिओवलित्तं सुगंधवरपंचवन्नपुप्फोवयारकलियं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुआभिरामं सुगंधवरगंधियं गंधवट्टिभूयं करेह कारवेह करित्ता य कारवित्ता य सीहासणं रयावेह रयावित्ता मम एयमाणत्तियं खिप्पामेव पच्चप्पिणह ॥ ५८ ॥

व्याख्या—खिप्पामेवेति प्रभृतितः पच्चप्पिणह त्ति पर्यन्तम्, तत्र उवट्ठाण त्ति उपस्थानशालां—आस्थानमण्डपं गन्धोदकेन सिक्ता, शुचिका-पवित्रा, सम्मार्जिता-कचवरापनयनेन, उपलिप्ता-छगणादिना या सा तथा तां, इदं च विशेषणं गन्धोदकसिक्तसम्मार्जितोपलिप्तशुचिकामित्येव दृश्यम्, शुचेः सिक्ताद्यनन्तरभावित्वात्, शेषं पूर्ववत् ॥५८॥

तए णं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठ तुट्ठ जाव हयहियया करयल जाव कट्टु एवं सामित्ति आणाए विणएणं वयणं पडिसुणंति, पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतियाओ पडिनिक्खमंति, पडिनिक्खमित्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छंति, उवागच्छित्ता खिप्पामेव सविसेसं बाहिरियं उवट्ठाणसालं गंधोदयसित्तसुइअ जाव

सीहासणं रयाविंति, रयावित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति, उवागच्छित्ता करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु सिद्धत्थस्स खत्तियस्स तमाणत्तियं पच्चप्पिणंति ॥ ५९ ॥

व्याख्या—तएणं ते कोडुंबियपुरिसेत्यादितः पच्चप्पिणंतीत्यन्तम्, तत्र एवमिति—यथादेशं स्वामिन्निति-आमन्त्रणार्थः, इतिः-उपदर्शने, शेषं सुखावसेयम् ॥ ५९ ॥

तए णं सिद्धत्थे खत्तिए कल्लं पाउप्पभाए रयणीए फुल्लुप्पलकमलकोमलुम्मीलियंमि अहापंडुरे पभाए रत्तासोगप्पगासकिंसुयसुयमुहगुंजद्धरागबंधुजीवगपारावयचलणनयणपरहुअसुरत्तलोअणजासुअणकुसुमरासिहिंगुलयनिअराइरेगरेहंतसरिसे कमलायरसंडविबोहए उट्ठियंमि सूरे सहस्सरस्सिंमि दिणयरे तेयसा जलंते तस्स य करपहरापरद्धंमि अंधयारे बालायवकुंकुमेणं खचियव्व जीवलोए सयणिज्जाओ अब्भुट्ठेइ ॥ ६० ॥

व्याख्या—तए णं सिद्धत्थेत्यादितोऽब्भुट्ठेइ त्ति पर्यन्तम्, तत्र कल्लं ति कल्यमिति—श्वः प्रादुः—प्रकाशे ततश्च प्रकाशप्रभातायां रजन्यां फुल्लं विकसितं तच्च तदुत्पलं च—पद्मं तच्च कमलश्च—हरिणविशेषस्तयोः कोमलं—अकठोरमुन्मीलितं—दलानां नयनयोश्च उन्मीलनं यस्मिन्, अथ—रजनीविभातानन्तरं दीर्घस्त्वार्षत्वात्, पाण्डुरे—शुक्ले प्रभाते

व्वलणकरणगुणनिम्माएहिं छेएहिं दक्खेहिं पट्ठेहिं कुसलेहिं मेहावीहिं जियपरिस्समेहिं पुरिसेहिं अट्ठिसुहाए मंससुहाए तयासुहाए रोमसुहाए चउव्विहाए सुहपरिक्कमणाए संवाहणाए संबाहिए समाणे, अवगयपरिस्समे अट्टणसालाओ पडिनिक्खमइ ॥ ६१ ॥

व्याख्या—सयणिज्जाओ इत्यादितः पडिनिक्खमइ त्ति पर्यन्तम्, तत्र 'अट्टणसाल त्ति अट्टनशाला—व्यायामशाला अनेकानि व्यायामानि व्यायामनिमित्तं योग्यादीनि यानि, तत्र योग्या च—गुणनिका, वल्गनं—चोल्ललनं, व्याममर्दनं—परस्परेण बाह्वाद्यङ्गमोटनं, मल्लयुद्धं प्रतीतम्, करणानि—चाङ्गभङ्गविशेषास्तैः श्रान्तः-सामान्येन, परिश्रान्तोऽङ्गप्रत्यङ्गापेक्षया सर्वतः, सयपाग त्ति शतकृत्वो यत्पक्वमपरापरौषधिरसेन सह शतेन, कार्षापणशतेन वा यत् पक्वं, एवं सहस्रपाकमपि, सुगन्धवरतैलादिभिरभ्यङ्गैरिति योगः, आदिशब्दात् घृतकर्पूरपानीयादिपरिग्रहः किम्भूतैः ? प्रीणनीयैः—रसरुधिरादिधातुसमताकारिभिः, दीपनीयैः—अग्निजननैः, मदनीयैः—कामवर्द्धनैः, बृंहणीयैः—मांसोपचयकारिभिः, दर्प्पणीयैः—बलकरैः, सर्वेन्द्रियाणि सर्वगात्राणि प्रल्हादयन्तीति, कर्त्तयनीयस्तैरभ्यङ्गैः-स्नेहनैः, अभ्यङ्गः क्रियते स यस्य सोऽभ्यङ्गितः सन्, ततस्तैलचर्म्मणि—तैलाभ्यक्तस्य सम्बाधनाकरणाय यच्चर्म्म तूलिकोपरि कडत्रं तत्तैलचर्म्म तत्र संवाहिए समाणे त्ति योगः कैरित्याह—पुरुषैः कथंभूतैः ? निपुणैरुपायकुशलैः पडिपुण्ण त्ति प्रतिपूर्णानां पाणिपादानां सुकुमालकोमलानि-अतिकोमलानि तलान्यधोभागापेक्षया येषा ते तथा तैः अब्भंगण त्ति अभ्यङ्गनपरिमर्द्दनोद्वलनानां

लेवणे आविद्धमणिसुवन्ने कप्पियहारद्धहारतिसरयपालंबपलंबमाणकडिसुत्तसुकयसोहे पिणद्धगेविज्जे अंगुलिज्जगललियकयाभरणे वरकडगतुडियथंभियभूए अहियरूवसस्सिरीए कुंडलउज्जोइआणणे मउडदित्तसिरए हारुत्थयसुकयरइयवच्छे मुद्दियापिंगलंगुलिए पालंबपलंबमाणसुकयपडउत्तरिज्जे नाणामणिरयणकणगविमलमहरिहनिउणोवियमिसिमिसिंतविरइयसुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए किं बहुणा कप्परुक्खएविव अलंकियविभूसिए नरिंदे, सकोरिंटमल्लदामेणं छत्तेणं धरिज्जमाणेणं सेअवरचामराहिं उद्धुव्वमाणीहिं मंगलजयजयसद्दकयालोए अणेगगणनायगदंडनायगराईसरतलवरमाडंबियकोडुंबियमंतिमहामंतिगणगदोवारियअमच्चचेडपीढमद्दनगरनिगमसेट्ठिसेणावइसत्थवाहदूयसंधिवालसद्धिं संपरिवुडे धवलमहामेहनिग्गए इव गहगणदिप्पंतरिक्खतारागणाण मज्झे ससिव्व पियदंसणे नरवई नरिंदे नरवसहे नरसीहे अब्भहियरायतेयलच्छीए दिप्पमाणे मज्जणघराओ पडिनिक्खमइ ॥ ६२ ॥

व्याख्या—अट्टणसालाओ इत्यादितः पडिनिक्खमइ त्ति पर्यन्तम्, तत्र समुत्तजाल त्ति समुक्तेन—मुक्ताफलयुक्तेन जालेन—गवाक्षेणाकुलो—व्याप्तोऽभिरामश्च यः स्नानमण्डपस्तत्र विचित्तमणि त्ति विचित्रमणिरत्नाभ्यां कुट्टिम-

कर्मधारयः, यद्वा कल्पितहारादिभिः सुकृता शोभा यस्य, पिनद्धानि–परिहितानि ग्रीवायां ग्रैवेयकानि–ग्रीवाभरणानि येन, अङ्गुलीयकानि–अङ्गुल्याभरणान्यूर्मिकाः ललितानि–शोभावन्ति कचाभरणानि च पुष्पादीनि यस्य, वराणि–प्रधानानि कटकानि–हस्ताभरणानि त्रुटिकाश्च–बाह्वाभरणानि तैः स्तम्भिताविव भुजौ यस्य, अधिकरूपेण सश्रीकः कुण्डलोद्योतिताननः मुकुटदीप्तशिरस्कः हारेणावस्तृतं–आच्छादितं तेनैव सुष्ठुकृतरतिकं च वक्षो यस्य, मुद्रिकाभिः सरत्नाङ्गुल्याभरणैः पिङ्गला अङ्गुलयो यस्य, प्रलम्बेन–दीर्घेण प्रलम्बमानेन च सुकृतं पटेनोत्तरीयकं–उत्तरासङ्गो येन, नानामणिकनकरत्नैर्विमलानि महार्हाणि–महार्घाणि निपुणेन शिल्पिना उविअ त्ति परिकर्म्मितानि मिसिमिसिंत त्ति देदीप्यमानानि यानि विरचितानि-निर्मितानि सुश्लिष्टानि-सुसन्धीनि विशिष्टानि-अन्येभ्यो विशेषवन्ति लष्टानि–मनोहराण्याविद्धानि–परिहितानि वीरवलयानि येन, यः कश्चिद्वीरः स मां विजित्य वलयान्येतानि मोचयत्विति स्पर्द्धया परिहितानि वलयानि वीरवलयान्युच्यन्ते, किं बहुना वर्णितेन? इति शेषः। कल्पवृक्ष इवालङ्कृतो दलादिभिर्विभूषितश्च फलपुष्पादिभिः कल्पवृक्षो, राजा पुनरलङ्कृतो मुकुटादिभिः विभूषितो वस्त्रादिभिः। सकोरिंटमल्लदामेणं ति सकोरिण्टानि–कोरिण्टकाख्यकुसुमस्तबकवन्ति माल्यदामानि–पुष्पस्रजो यत्र तत्तथा तेन, कोरिण्टकः–पुष्पवृक्षजातिस्तत्पुष्पाणि मालान्ते शोभार्थं दीयन्ते, मालायै हितानि माल्यानि–पुष्पाणि दामानि–मालाः धरिज्जमाणेणं ति ध्रियमाणेन, वाचनान्तरे तु सूर्याभवदलङ्कारवर्णकः स चैवम्–'एगावलिपिणद्धे' इत्यादि राजप्रश्नी-

यसूत्रे, तच्च विस्तरार्थिना राजप्रश्नीयात् ज्ञेयम् । सेअवरचामराहिं ति श्वेतवरचामरैरुद्धूयमानैः चामरस्य क्लीवत्वेऽपि स्त्रीत्वं गौडमतेन, मङ्गलभूतो जयशब्दः कृतो जनेनालोके-दर्शने यस्य स तथा, अणेगगणनायग त्ति अनेके ये गण-नायकाः-प्रकृतिमहत्तराः, दण्डनायकाः-तन्त्रपालाः, राजानो-माण्डलिकाः, ईश्वरा-युवराजानोऽणिमाद्यैश्वर्ययुक्ता इत्यन्ये, तलवराः-तुष्टराजदत्तपट्टबन्धविभूषिता राजस्थानीया, माडम्बिकाः-छिन्नमडम्बाधिपाः, कौटुम्बिकाः-कतिपयकुटुम्बस्वामिनः अवलगकाः ग्राममहत्तरा वा, मन्त्रिणः-सचिवा, महामन्त्रिणो-महामात्या मन्त्रिमण्डलप्रधानाः हस्तिसाधनाध्यक्षा वा, गणका-ज्योतिषिका भाण्डागारिका वा, दौवारिकाः-प्रतीहारा राजद्वारिका वा, अमात्या-राज्याधिष्ठायकाः, चेटाः-पादमूलिका दासा वा, पीठमर्दा-आस्थाने आसन्नासन्नसेवकाः वयस्या इत्यर्थः वेश्याचार्या वा, नागरा-नगरवासिप्रकृतयो राजदेयविभागाः, निगमाः-कारणिका वणिजो वा, श्रेष्ठिनः-श्रीदेवताध्यासितसौवर्णपट्टविभूषितोत्तमाङ्गाः, सेनापतयो-नृपतिनिरूपिताश्चतुरङ्गसैन्यनायकाः, सार्थवाहाः-सार्थनायकाः, दूता-अन्येषां गत्वा राजादेशनिवेदकाः, सन्धिपाला-राज्यसन्धिरक्षकाः, एषां द्वन्द्वस्ततस्तैरिह च तृतीयाबहुवचनलोपो द्रष्टव्यः, सार्द्धं न केवलं तत्सहितोऽपि तु तैः सं इति-समन्तात्परिवृतः नरपतिर्मज्जनगृहात्प्रतिनिष्क्रामतीति योगः, किम्भूतः? प्रियदर्शनः क इव? धवलमहामेघनिर्गत इव शशी तथा ससिव्व त्ति वतोऽन्यत्र सम्बन्धस्ततो ग्रहगणदीप्यमानऋक्षतारकगणानां मध्य इव वर्त्तमानः नरपतिः-नराणां पती रक्षिता, नरेन्द्रो-नरेष्वैश्वर्यानुभवनात्, नरवृषभो राज्यधुराधरणात्, नरसिंहः शौर्यातिशयात्, अभ्यधिकराजतेजोलक्ष्म्या दीप्यमानः ॥ ६२ ॥

मज्जणघराओ पडिनिक्खमइत्ता जेणेव बाहिरिया उवट्ठाणसाला तेणेव उवागच्छइ, उवागच्छित्ता सीहासणंसि पुरत्थाभिमुहे निसीअइ ॥ ६३ ॥

व्याख्या—मज्जणघरेत्यादितो निसीअइ त्ति पर्यन्तं सुगमम् ॥ ६३ ॥

सीहासणंसि पुरत्थाभिमुहे निसीइत्ता अप्पणो उत्तरपुरत्थिमे दिसीभाए अट्ठ भद्दासणाइं सेयवत्थपच्चुत्थयाइं सिद्धत्थयकयमंगलोवयाराइं रयावेइ रयावित्ता अप्पणो अदूरसामंते नाणामणिरयणमंडिअं अहिअपिच्छणिज्जं महग्घवरपट्टणुग्गयं सण्हपट्टभत्तिसयचित्तताणं ईहामिअउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवणलयपउमलयभत्तिचित्तं अब्भिंतरिअं जवणिअं अंच्छावेइ अंच्छावित्ता नाणामणिरयणभत्तिचित्तं अत्थरयमिउमसूरगोत्थयं सेयवत्थपच्चुत्थयं सुमउयं अंगसुहफरिसगं विसिट्ठं तिसलाए खत्तियाणीए भद्दासणं रयावेइ रयावित्ता कोडुंबियपुरिसे सद्दावेइ सद्दावित्ता एवं वयासी ॥ ६४ ॥

व्याख्या—सीहासणंसि इत्यादितो वयासी इति यावत्, तत्र श्वेतवस्त्रेण प्रत्यवस्तृतानि—आच्छादितानि, कृतः सिद्धार्थकप्रधानो मङ्गलायोपचारः—पूजा येषु प्राकृतत्वात् कृतशब्दस्य मध्ये निपातः, दूरं—विप्रकर्षः सामन्तं—समीपं

उभयाभावे नातिदूरे नातिसमीपे इत्यर्थः, यवनिकामांछयतीतिसम्बन्धः, नानामणिरत्नैर्मण्डितां अधिकं प्रेक्षणीयां—विलोकनीयां, महार्घा चासौ वरे पत्तने—वस्त्रोत्पत्तिस्थाने उद्गता च—व्यूता वरपट्टनाद्वा—प्रधानवेष्टनकादुद्गता—निर्गता, सूक्ष्मपट्टसूत्रमयो भक्तिशतचित्रस्तानको यस्यां, ईहामृगा—वृकाः, रुरवो—मृगभेदाः, शरभा—अष्टापदा, महाकाया—आटव्यपशवः, चमराः—आटव्यगावः, शेषं सुगमं व्याख्यातं च प्राक्। आस्थानशालाया अभ्यन्तरभागवर्त्तिनीं यवनिकां—काण्डपटीं आकर्षयत्यायतां कारयतीत्यर्थः। आस्तरकेण प्रतीतेन मृदुमसूरकेण चावस्तृतं—आच्छादितम्, अथवाऽस्तरजसा मृदुमसूरकेणेति योज्यम्, श्वेतवस्त्रेण प्रत्यवस्तृतं—उपर्याच्छादितं सुमृदुकं—कोमलमत एवाङ्गस्य सुखः—सुखकारी स्पर्शो यस्य, विशिष्टं—शोभनम् ॥ ६४ ॥

खिप्पामेव भो देवाणुप्पिया ! अट्ठंगमहानिमित्तसुत्तत्थधारए विविहसत्थकुसले सुविणलक्खणपाढए सद्दावेह, तएणं ते कोडुंबियपुरिसा सिद्धत्थेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठ जाव हियया करयल जाव पडिसुणंति ॥ ६५ ॥

व्याख्या—खिप्पामेव इत्यादितः पडिसुणंति त्ति यावत्, तत्र अष्टाङ्गं—अष्टावयवं यथा—"अङ्गं १ स्वप्नं २ स्वरं ३ चैव, भौमं ४ व्यञ्जन ५ लक्षणे ६। उत्पात ७ मन्तरिक्षं ८ च, निमित्तं स्मृतमष्टधा ॥ १ ॥" तत्र पुंसां दक्षिणाङ्गे स्त्रीणां वामाङ्गे स्फुरणं रम्यमित्याद्यङ्गविद्या १, स्वप्नानामुत्तममध्यमाधमविचारः स्वप्नविद्या २, गृहगोधा—कृक-

लास–काक–विनायक–वृक–दुर्गा–भैरवी–शृगालादीनां स्वरपरिज्ञानं स्वरविद्या ३, भौमं–भूमिकंपादिविज्ञानं भौमविद्या ४, व्यञ्जनं–मषीतिलकादि ५, लक्षणं–करचरणरेखादिसामुद्रिकोक्तम् ६, उत्पात–उल्कापातादिः "उल्कापाते प्रजा-पीडा, निर्घाते भूपतिक्षयः। अनावृष्टिश्च दिग्दाहे, दुर्भिक्षं पांसुवर्षणे ॥१॥" इत्यादि परिज्ञानम् ७, अन्तरिक्षं–ग्रहाणा-मुदयास्तादिपरिज्ञानम् ८, इत्याद्यष्टभेदं यन्महानिमित्तं परोक्षार्थप्रतिपत्तिकारणव्युत्पादकशास्त्रविशेषस्तस्य यौ सूत्रार्थौ तौ धारयन्ति पठन्ति वा तयोर्वा पारगा ये ते तथा, अनेन धारए पाठए पारए इति पाठत्रयं व्याख्यातम्। याव-त्करणात् 'हट्ठतुट्ठ चित्तमाणंदिआ' इत्यादि दृश्यम्, करयल त्ति यावत्करणात् परिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणंति त्ति प्रतिशृण्वन्ति–अभ्युपगच्छन्ति वचनं विनयेन, शेषं प्राग्वत् ॥ ६५ ॥

पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतिआओ पडिनिक्खमंति पडिनिक्खमित्ता कुंडग्गामं नगरं मज्झं मज्झेणं जेणेव सुविणलक्खणपाढगाणं गेहाइं तेणेव उवागच्छंति उवागच्छित्ता सुविणलक्खणपाढए सद्दावेंति ॥ ६६ ॥

व्याख्या—पडिसुणित्तेत्यादितः सद्दावेंति त्ति यावत् सुगमम् ॥ ६६ ॥

तएणं ते सुविणलक्खणपाढगा सिद्धत्थस्स खत्तिअस्स कोडुंबिअपुरिसेहिं सद्दाविया समाणा

ङ्कृतं शरीरं येषां । सिद्धार्थाश्च–सर्षपाः, हरितालिका च–दूर्वा, कृता मङ्गलनिमित्तं मूर्द्धनि–शिरसि यैः । स्वकेभ्यः स्वकेभ्यः—आत्मीयेभ्य आत्मीयेभ्य इत्यर्थः । भवनवरेषु–हर्म्येष्ववतंसक इव–शेखरक इव भवनवरावतंसकः तस्य प्रतिद्वारं–मूलद्वारं समीपद्वारं, तत्र एगओ मिलंति त्ति समुदायीभूय सम्मतीभवन्ति–सर्वसम्मतमेकं पुरस्कृत्यान्ये तदनुयायिनो भवन्तीत्यर्थः, यतः—"यत्र सर्वेऽपि नेतारः, सर्वे पण्डितमानिनः । सर्वे महत्त्वमिच्छन्ति, तद्वृन्दमवसीदति ॥ १ ॥" दृष्टान्तीभूता च राज्ञो मन्त्रिपरीक्षितशय्यैकशाय्यवलगकपञ्चशती, तद्यथा—काचित्सुभटानां पञ्चशती परस्परमसम्बद्धा सेवावृत्तिनिमित्तं कस्यचिद्राज्ञः पुरो ययौ, राज्ञा मन्त्रिणा च परीक्षानिमित्तमेकैव शय्या शयनाय प्रेपिता, ते चाहमिन्द्रत्वमापन्नाः निःस्वामिकाः परस्परं विवदमानाः सर्वेषामविशेषेण परिभोगो भवत्वित्याशयेन यथार्पितामेव शय्यामन्तराले विमुच्य तदभिमुखपादाः शयितवन्तः, प्रातश्च रहःसङ्केतितराजपुरुषै राज्ञे यथावद्व्यतिकरे निवेदिते कथमसम्बद्धा एते योद्धारः ? इति विचिन्त्य निर्भर्त्स्य निष्काशिता इति । स्वप्नपाठकाः पुनः—"दीर्घायुर्भव वृत्तवान् भव भव श्रीमान् यशस्वी भव, प्रज्ञावान् भव भूरिसत्त्वकरुणादानैकशोण्डो भव । भोगाढ्यो भव भाग्यवान् भव महासौभाग्यशाली भव, प्रौढश्रीर्भव कीर्त्तिमान् भव सदा कोटिम्भरस्त्वं भव ॥ १ ॥" इत्याद्याशीःपुरस्सरं जएणं विजएणं वद्धावेंति त्ति जयेन विजयेन च त्वं वर्द्धस्वेत्याचक्षत इत्यर्थः, जयविजयौ च प्राग्व्याख्येयौ ॥ ६७ ॥

व्याख्या—एवं खलु इत्यादितः पडिबुद्धा इति पर्यन्तं सुगमम् ॥ ७० ॥

तं जहा–'गयवसह' गाहा तं एएसिं चउद्दसण्हं महासुमिणाणं देवाणुप्पिया ! उरालाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ७१ ॥

व्याख्या—तं जहेत्यादितो भविस्सइ इति पर्यन्तं सुगमम् ॥ ७१ ॥

तए णं ते सुमिणलक्खणपाढगा सिद्धत्थस्स खत्तियस्स अंतिए एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ जाव हयहियया ते सुमिणे ओगिण्हंति, ओगिण्हित्ता ईहं अणुपविसंति, अणुपविसित्ता अन्नमन्नेणं सद्धिं संचालेंति, संचालित्ता तेसिं सुमिणाणं लद्धट्ठा गहियट्ठा पुच्छियट्ठा विणिच्छियट्ठा अहिगयट्ठा सिद्धत्थस्स रण्णो पुरओ सुमिणसत्थाइं उच्चारेमाणा उच्चारेमाणा सिद्धत्थं खत्तियं एवं वयासी ॥ ७२ ॥

व्याख्या—तए णं ते सुमिणेत्यादित एवं वयासी इति पर्यन्तम्, तत्र अन्नमन्नेणं सद्धिं संचालेंति त्ति अन्योऽन्येन सह सञ्चालयन्ति–संवादयन्ति पर्यालोचयन्तीत्यर्थः, क्वचित् संलावेंति त्ति पाठस्तत्रापि स एवार्थः, लद्धट्ठा इत्यादि लब्धार्थाः–स्वतः, गृहीतार्थाः पराभिप्रायग्रहणतः, पृष्टार्थाः–संशये सति परस्परतः, तत एव विनिश्चितार्था

ग्रसते समग्रमपि पुरुषः । कलयति दीनोऽपि महीं, ससुवर्णां सार्णवा नियतम् ॥ १४ ॥ हरणं प्रहरणभूषण–मणिमौक्तिककनकरूप्यकुप्यानाम् । धनमानम्लानिकरं, दारुणमरणावहं बहुशः ॥ १५ ॥ आरूढः शुभ्रमिभं, नदीतटे शालिभोजनं कुरुते । भुङ्क्ते भूमीमखिलां, स जातिहीनोऽपि धर्मधनः ॥ १६ ॥ निजभार्याया हरणे, वसुनाशः परिभवे च सङ्क्लेशः । गोत्रस्त्रीणां तु नृणां, जायेते बन्धुवधबन्धौ ॥ १७ ॥ शुभ्रेण दक्षिणस्यां, यः फणिना दश्यते निजभुजायाम् । आसादयति सहस्रं, कनकस्य स पञ्चरात्रेण ॥ १८ ॥ जायेत यस्य हरणं, निजशयनोपानहां पुनः स्वप्ने । तस्य म्रियते दयिता, निविडा स्वशरीरपीडापि ॥ १९ ॥ यो मानुषस्य मस्तक–चरणभुजानां च भक्षणं कुरुते । राज्यं कनकसहस्रं, तदर्द्धमाप्नोत्यसौ क्रमशः ॥ २० ॥ द्वारपरिघस्य शयन–प्रेङ्खोलनपादुकानिकेतानाम् । भञ्जनमपि यः पश्यति, तस्यापि कलत्रनाशः स्यात् ॥ २१ ॥ कमलाकररत्नाकर–जलसम्पूर्णापगाः सुहृन्मरणम् । यः पश्यति लभतेऽसा–वनिमित्तं वित्तमतिविपुलम् ॥ २२ ॥ अतितप्तं पानीयं, सगोमयं गडुलमौषधेन युतम् । यः पिबति सोऽपि नियतं, म्रियतेऽतीसाररोगेण ॥ २३ ॥ देवस्य प्रतिमाया, यात्रास्नपनोपहारपूजादीन् । यो विदधाति स्वप्ने, तस्य भवेत्सर्वतो वृद्धिः ॥ २४ ॥ स्वप्ने हृदयसरस्यां, यस्य प्रादुर्भवन्ति पद्मानि । कुष्टविनष्टशरीरो, यमवसतिं याति स त्वरितम् ॥ २५ ॥ आज्यं प्राज्यं स्वप्ने, यो विन्दति वीक्ष्यते यशस्तस्य । तस्याभ्यवहरणं वा, क्षीरान्नेनैव सह शस्तम् ॥ २६ ॥ हसने शोचनमचिरात्, प्रवर्त्तते नर्त्तनेऽपि वधबन्धाः । पठने कलहश्च नृणा–मेतत् प्राज्ञेन विज्ञेयम् ॥ २७ ॥ कृष्णं कृत्स्नमशस्तं, मुक्त्वा गोवाजिराजगजदेवान् । सकलं शुक्लं च शुभं, त्यक्त्वा कर्पासलवणा-

दीन् ॥ २८ ॥ दृष्टाः स्वप्ना ये स्वं, प्रति तेऽत्र शुभाशुभा नृणाम् । स्वस्य ये प्रत्यपरं, तस्य ज्ञेयास्ते स्वस्य नो किञ्चित्
॥ २९ ॥ दुःस्वप्ने देवगुरून्, पूजयति करोति शक्तितश्च तपः । सततं धर्मरतानां, दुःस्वप्नो भवति सुस्वप्नः ॥ ३० ॥

तथा आगमोऽपि यथा—"इत्थी वा पुरिसो वा सुविणंते एगं महंतं खीरकुंभं वा, (दधिकुंभं वा,) घयकुंभं
वा, महुकुंभं वा, पासमाणे पासइ उप्पाडेमाणे उप्पाडेइ, उप्पाडियमिति अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, तेणेव
भवग्गहणेणं सिज्झइ, जाव अंतं करेइ। इत्थी वा पुरिसो वा सुविणंते एगं हिरण्णरासिं वा, सुवण्णरासिं वा, रयणरासिं
वा, वयररासिं वा, पासमाणे पासइ, दुरूहमाणे दुरूहइ दुरूढमिति अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, तेणेव
भवग्गहणेणं जाव अंतं करेइ । इत्थी वा पुरिसो वा महंतं रययरासिं वा, तउअरासिं वा, तंवरासिं वा, सीसगरासिं वा,
पासमाणे पासइ, दुरूहमाणे दुरूहइ, दुरूढं अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, दुच्चेणं भवग्गहणेणं सिज्झइ बुज्झइ, जाव
अंतं करेइ । इत्थी वा पुरिसो वा जाव सुविणंते एगं महंतभवणं सव्वरयणामयं पासमाणे पासइ, अणुपविसमाणे
अणुपविसइ, अणुपविट्ठं अप्पाणं मन्नइ, तक्खणमेव बुज्झइ, तेणेव भवग्गहणेणं अंतं करेइ" ॥ ७२ ॥

एवं खलु देवाणुप्पिया ! अम्हं सुमिणसत्थे बायालीसं सुमिणा, तीसं महासुमिणा, बावत्तरिं
सव्वसुमिणा दिट्ठा । तत्थ णं देवाणुप्पिया ! अरहंतमायरो वा, चक्कवट्टिमायरो वा, अरहंत-
सि वा, चक्कहरंसि वा, गब्भं ४०० वक्कममाणंसि एएसिं तीसाए महासुमिणाणं इमे चउ-
द्दस महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७३ ॥

व्याख्या—एवं खल्वित्यादितः पडिबुज्झंति इति पर्यन्तम्, तत्र सुमिण त्ति सामान्यफला महासुमिण त्ति महाफलाः गर्भं व्युत्क्रामति प्रविशति सतीत्यर्थः, गर्भे वा व्युत्क्रामति उत्पद्यमाने ॥ ७३ ॥

तं जहा—'गयवसह'गाहा ॥ ७४ ॥

व्याख्या—तं जहेत्यादितो गाहा इत्यन्तं सुबोधम् ॥ ७४ ॥

वासुदेवमायरो वा वासुदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसन्हं महासुमिणाणं अन्नयरे सत्त महासुमिणे पासित्ता णं पडिबुज्झंति ॥ ७५ ॥

व्याख्या—वासुदेवेत्यादितः पडिबुज्झंति इति यावत् सुखावबोधम् ॥ ७५ ॥

बलदेवमायरो वा बलदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसन्हं महासुमिणाणं अन्नयरे चत्तारि महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७६ ॥

व्याख्या—बलदेवेत्यादितो बुज्झंति इति यावत् सुबोधम् ॥ ७६ ॥

मंडलियमायरो वा मंडलियंसि गब्भं वक्कममाणंसि एएसिं चउद्दसन्हं महासुमिणाणं अन्नयरं एगं महासुमिणं पासित्ताणं पडिबुज्झंति ॥ ७७ ॥

व्याख्या—इमे य णं इत्यादितः पयाहिसि इति पर्यन्तम्, तत्र इमे य णं देवानुप्रिय ! त्रिशलया क्षत्रियाण्या चतुर्द्दश महास्वप्ना दृष्टा इत्यादि प्राग्वत् ॥ ७८ ॥

से वि य णं दारए उम्मुक्कबालभावे विण्णायपरिणयमित्ते जोव्वणगमणुप्पत्ते सूरे वीरे विक्कंते विच्छिन्नविपुलबलवाहणे चाउरंतचक्कवट्टी रज्जवई राया भविस्सइ । जिणे वा तेलुक्कनायगे धम्मवरचाउरंतचक्कवट्टी ॥ ७९ ॥

व्याख्या—से वि य णं इत्यादितः चक्कवट्टी इति पर्यन्तम्, तत्र जिनो वा त्रैलोक्यनायको धर्म्मवरचातुरंतचक्रवर्त्ती । तत्र चतुर्द्दशानामपि स्वप्नानां पृथक् फलं त्वेवं—चतुर्दन्तदन्तिदर्शनाच्चतुर्द्धा धर्म्मोपदेष्टा भविष्यति १, वृषभदर्शनात् भरतक्षेत्रे बोधिबीजं वापयिष्यति २, सिंहदर्शनात् मदनादिदुर्गजभज्यमानं भव्यवनं रक्षिष्यति ३, लक्ष्मीदर्शनाद्वार्षिकदानं दत्त्वा तीर्थङ्करलक्ष्मीभोक्ता भविष्यति ४, दामदर्शनात् त्रिभुवनस्य मस्तकधार्यो भविष्यति ५, चन्द्रदर्शनात् कुवलये मुदं दास्यति ६, सूर्यदर्शनात् भामण्डलविभूषितो भविष्यति ७, ध्वजदर्शनात् धर्म्मध्वजश्रिया विभूषितो भविष्यति ८, कलशदर्शनात् धर्म्मप्रासादशिखरस्थितिं करिष्यति ९, पद्मसरोदर्शनात् सुरसञ्चारितस्वर्णसरोजेषु स्थापितक्रमो भविष्यति १०, रत्नाकरदर्शनात् केवलालोकरत्नस्थानं भविष्यति ११, विमानदर्शनादनुत्तरसुरपर्यन्तवै-

मानिकदेवानामाराध्यो भविष्यति १२, रत्नराशिदर्शनात् रत्नप्राकारमण्डितो भविष्यति १३, निर्धूमाग्निदर्शनात् भव्यात्मकल्याणशुद्धिकारको भविष्यति १४, इति । सामुदायिकफलं तु चतुर्दशस्वप्ननिरीक्षणाच्चतुर्दशरज्ज्वात्मकलोकाग्रस्थायी भविष्यतीति ॥ ७९ ॥

तं उराला णं देवाणुप्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव आरुग्गतुट्ठिदीहाउकल्लाणमंगल्लकारगा णं देवाणुप्पिया ! तिसलाए खत्तियाणीए सुमिणा दिट्ठा ॥ ८० ॥

व्याख्या—तं उराला णमित्यादितः सुमिणा दिट्ठेति यावत् प्राग्वत् ॥ ८० ॥

तए णं सिद्धत्थे राया तेसिं सुविणलक्खणपाढगाणं अंतिए एयमट्ठं सोच्चा निसम्म हट्ठतुट्ठ जाव हियए करयल जाव ते सुविणलक्खणपाढए एवं वयासी ॥ ८१ ॥

व्याख्या—तए णमित्यादित एवं वयासीति यावत् प्राग्वत् ॥ ८१ ॥

एवमेयं देवाणुप्पिया ! तहमेयं दे० अवितहमेयं दे० इच्छियमेयं दे० पडिच्छियमेयं दे० इच्छियपडिच्छियमेयं दे० सच्चे णं एसमट्ठे से जहेयं तुब्भे वयह त्तिकट्टु ते सुमिणे सम्मं पडिच्छइ पडिच्छित्ता ते सुविणलक्खणपाढए विउलेणं असणेणं पुप्फवत्थगंधमल्लालंकारेणं सक्का-

रेइ सम्माणेइ सक्कारित्ता सम्माणित्ता विउलं जीवियारिहं पीइदाणं दलइ दलइत्ता पडिविसज्जेइ ॥ ८२ ॥

व्याख्या—एवमेयमित्यादितः पडिविसज्जेइ त्ति यावत्, तत्र तान् स्वप्नलक्षणपाठकान् विपुलेनाशनेन—शाल्यादिना पुष्पाणि—अग्रथितानि गन्धा—वासा माल्यानि—ग्रथितपुष्पाणि अलङ्कारो—मुकुटादिस्तेषां समाहारद्वन्द्वः, सत्कारयति—प्रवरवस्त्रादिना सन्मानयति—तथाविधवचनादिप्रतिपत्त्या जीविकोचितं—आजन्मनिर्वाहयोग्यं प्रीतिदानं दत्त्वा प्रतिविसर्जयति राजेति ॥ ८२ ॥

तए णं से सिद्धत्थे खत्तिए सीहासणाओ अब्भुट्ठेइ अब्भुट्ठित्ता जेणेव तिसला खत्तियाणी जवणियंतरिया तेणेव उवागच्छइ उवागच्छित्ता तिसलं खत्तियाणिं एवं वयासी ॥ ८३ ॥

व्याख्या—तए णमित्यादित एवं वयासीति यावत् प्राग्वत् ॥ ८३ ॥

एवं खलु देवाणुप्पिए! सुविणसत्थंसि बायालीसं सुमिणा तीसं महासुमिणा जाव एगं महासुमिणं पासित्ता णं पडिबुज्झंति ॥ ८४ ॥

व्याख्या—एवं खल्वित्यादितो बुज्झंतीति यावत् प्राग्वत् ॥ ८४ ॥

णाइं भवंति तं जहा पहीणसामियाइं, पहीणसेउयाइं, पहीणगोत्तागाराइं, उच्छिन्नसामियाइं उच्छिन्नसेउयाइं, उच्छिन्नगोत्तागाराइं, गामागरनगरखेडकब्बडमडंबदोणमुहपट्टणासमसंबाहसंनिवेसेसु, सिंघाडएसु वा, तिएसु वा, चउक्केसु वा, चच्चरेसु वा, चउम्मुहेसु वा, महापहेसु वा, गामट्ठाणेसु वा, नगरट्ठाणेसु वा, गामनिद्धमणेसु वा, नगरनिद्धमणेसु वा, आवणेसु वा, देवकुलेसु वा, सभासु वा, पवासु वा, आरामेसु वा, उज्जाणेसु वा, वणेसु वा, वणसंडेसु वा, सुसाणसुन्नागारगिरिकंदरसंतिसेलोवट्ठाणभवणगिहेसु वा, संनिखित्ताइं चिट्ठंति ताइं सिद्धत्थरायभवणंसि साहरंति ॥ ८८ ॥

व्याख्या—जप्पभिइं च णमित्यादितः साहरंति त्ति पर्यन्तम्, तत्र वेसमणकुंडधारिणो त्ति वैश्रमणस्य कुंडं-आयत्ततां धारयन्ति ये ते तथा तिर्यग्लोकवासिनो जृम्भका देवास्तिर्यग्जृम्भकाः, सक्कवयणेणं ति शक्रवचनेन शक्रेण वैश्रमण आदिष्टस्तेन चैते इत्यर्थः, से इत्यथशब्दार्थे पुरा—पूर्वं प्रतिष्ठितत्वेन पुराणानि—चिरन्तनानि पुरापुराणानि महानिधानानि—भूमिगतसहस्रादिसङ्ख्येया द्रव्यसञ्चयाः । प्रहीणः— स्वल्पीभूतः स्वामी येषां तानि प्रहीणस्वामिकानि, प्रहीणा—अल्पीभूताः सेक्तारः—सेचकाः धनक्षेसारो येषां तानि प्रहीणसेक्तृकानि, प्रहीणसेतुकानि

वा सेतुः—मार्गः, प्रहीणं—विरलीभूतमानुषं गोत्रागारं येषा गोत्रं—धनस्वामिनोऽन्वयः अगारं-गृहं, एवमुच्छिन्नो—निस्स-त्ताकीभूतः स्वामी येषामित्यादि प्राग्वत् , गामागारेत्यादि करादिगम्या ग्रामाः, आकरा-लोहाद्युत्पत्तिभुमयः, नैतेषु करोऽस्तीति नकराणि, खेटानि-धूलीप्राकारोपेतानि, कर्बटानि-कुनगराणि, मडम्बानि-सर्वतोऽर्द्धयोजनात् परतोऽवस्थितग्रामाणि, द्रोणमुखानि—यत्र जलस्थलपथावुभावपि स्तः, पत्तनानि येषु जलस्थलपथयोरन्यतरेण पर्याहार-प्रवेशः, आश्रमाः, तीर्थस्थानानि मुनिस्थानानि वा, संवाहाः—समभूमौ कृषिं कृत्वा येषु दुर्गभूमिषु धान्यानि कृषीवलाः संवहन्ति रक्षार्थं, सन्निवेशाः—सार्थकटकादेस्ततो द्वन्द्वस्तेषु । शृङ्गाटकं—सिङ्घाटकाख्यं फलं तदाकारं त्रिकोणस्थानं, त्रिकं—यत्र रथ्यात्रयं मिलति, चतुष्कं—यत्र रथ्याचतुष्कमीलकः, चत्वरं—बहुरथ्याऽऽपातस्थानं, चतुर्मुखं—चतुर्द्वारं देवकुलादि, महापथो-राजमार्गः, ग्रामस्थानानि-ग्रामपुरातननिवासभूमयः, नगरस्थानानि—नगरस्योद्व-सितभुवः, ग्रामनिर्द्धमनानि—ग्रामजलनिर्गमाः खालमिति प्रसिद्धा, एवं नगरनिर्द्धमनानि, आपणा-हट्टाः, देवकु-लानि—यक्षाद्यायतनानि, सभा—जनोपवेशस्थानानि, प्रपासु—पानीयशालासु, आरामाः—कदल्यादिप्रतिच्छन्नानि यानि स्त्रीयुतपुंसां क्रीडास्थानानि, उद्यानानि—पुष्पफलोपेतवृक्षशोभितानि उत्सवादौ बहुजनभोग्यानि उद्यानिका-स्थानानि इत्यर्थः, वनानि-एकजातीयवृक्षाणि, वनखण्डानि-अनेकजात्युत्तमवृक्षाणि, श्मशानं शून्यागारं गिरि-कन्दरा च प्रतीता, शान्तिगृहाः—शान्तिकर्म्मस्थानानि, क्वचित्सन्धि इति पाठस्तत्र सन्धिगृहं—भित्त्योरन्तरालं प्रच्छ-न्नस्थानं, शैलगृहं—पर्वतमुत्कीर्य यत्कृतं, उपस्थानगृहं—आस्थानमण्डपः, भवनगृहाः—कुटुम्बिवसनस्थानानि, ततः

श्मशानादीना द्वन्द्वः। संनिखित्ताइं ति सम्यग्निक्षिप्तानि, क्वचित् सन्निहिआइं गुत्ताइं चिट्ठंति पाठस्तत्र सन्निहितानि–सम्यग्निधानीकृतानि गुप्तानि–पिधानाद्यनेकोपायैः साहरंति त्ति प्रवेशयन्ति–निक्षेपयन्ति, क्वापि घोसेसु पाठस्तत्र घोषा–गोकुलानि ॥ ८८ ॥

जं रयणिं च णं समणे भगवं महावीरे नायकुलंसि साहरिए तं रयणिं च णं नायकुलं हिरण्णेणं वड्ढित्था, सुवण्णेणं वड्ढित्था, धणेणं धन्नेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कुट्ठागारेणं पुरेणं अंतेउरेणं जणवएणं जसवाएणं वड्ढित्था, विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमाईएणं संतसारसावइज्जेणं पीइसक्कारसमुदएणं, अईव अईव अभिवड्ढित्था, तएणं समणस्स भगवओ महावीरस्स अम्मापिऊणं अयमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ ८९ ॥

व्याख्या–जं रयणिं च णमित्यादितः संकप्पे समुप्पज्जित्थ त्ति पर्यन्तम्, तत्र हिरण्णेणमित्यादि हिरण्यं–रूप्यमघटितस्वर्णमित्यन्ये, सुवर्णं घटितं, धनं–गणिम १ धरिम २ मेय ३ परिच्छेद्य ४ भेदाच्चतुर्द्धा, तथा चोक्तम्–"गणिमं जाइफलपुप्फ–फलाइं १ धरिमं तु कुंकुमगुडाई २। मिज्जं चोप्पडलोणाई ३, रयणवत्थाइं परिच्छेज्जं ४ ॥ १ ॥"

धान्यं चतुर्विंशतिधा– “ धन्नाइं चउवीसं, जव १ गोहुम २ सालि ३ वीहि ४ सट्ठीआ ५। कुद्दव ६ अणुआ ७ कंगू ८, रालय ९ तिल १० मुग्ग ११ मासा य १२ ॥ १ ॥ अयसि १३ हरिमंथ १४ तिउडा १५, निप्फावे १६ सिलिंद १७ रायमासा य १८। उक्खू १९ मसूर २० तुवरी २१, कुलत्थ २२ तह धन्नय २३ कलाया २४ ॥ २ ॥” राज्यं–सप्ताङ्गं, राष्ट्रं–देशः, बलं–चतुरंगं, वाहनं–वेसरादि, कोशो–भाण्डागारं, कोष्ठागारं–धान्यगृहं, पुरान्तःपुरे प्रतीते, जनपदो–लोकः, जसवाएणं ति यशोवादः–साधुवादः, पुनर्विपुलधनं गवादि, कनकं–घटिताघटितरूपं द्वेधाऽपि, रत्नानि–कर्केतनादीनि, मणयः–चन्द्रकान्ताद्याः, मौक्तिकानि–शुक्त्याकाशादिप्रभवाणि, शङ्खा–दक्षिणावर्त्ताः, शिला-राजपट्टादिकाः, प्रवालानि–विद्रुमाः, रक्तरत्नानि–पद्मरागाः, आदिशब्दाद्वस्त्रकम्बलादिपरिग्रहः ततस्तेन, एतेन कि-मुक्तं भवतीत्याह–सद्विद्यमानं न पुनरिन्द्रजालादाविवावास्तवं यत् सारस्वापतेयं–प्रधानद्रव्यं तेन, प्रीतिः–मानसी स्वेच्छा सत्कारो–वस्त्रादिभिर्जनकृतस्ततो द्वन्द्वः। शेषं सुगमम् ॥ ८९ ॥

जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो सुवण्णेणं वड्ढामो धणेणं जाव संतसारसावइज्जेणं पीइसक्कारेणं अईव अईव

---

१ षष्टिक —साठी। २ युगंधरी—जुवार। ३ रालक – लांग। ४ चोनक चीणो। ५ निष्पाव —वाल। ६ राजमुद्ग—मठ। ७ चवल —चोला। ८ यवंटी—वंटी। ९ कलाय —वटाणा।

अभिवड्ढामो तं जया णं अम्हं एस दारए जाए भविस्सइ तया णं अम्हे एयस्स दारगस्स एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणु त्ति ॥ ९० ॥

व्याख्या—जप्पभिइं च णमित्यादितो वद्धमाणु त्ति पर्यन्तम्। तत्र गुण्णं ति गुणेभ्य आगतं गौणं, गौणशब्दोऽप्राधान्येऽप्यस्तीत्याह–गुणनिष्पन्नं–प्रधानं, नामैव नामधेयम् ॥ ९० ॥

तएणं समणे भगवं महावीरे माउअणुकंपणट्ठाए निच्चले निप्फंदे निरेयणे अल्लीणपल्लीणगुत्ते यावि होत्था ॥ ९१ ॥

व्याख्या—तएणं समणे इत्यादितो होत्थेति यावत्, तत्र मातुरनुकम्पनार्थं कृपया, मातरि वाऽनुकम्पा–भक्तिस्तदर्थं मयि परिस्पन्दमाने मा मातुः कष्टं भूयादिति, मातरि वा भक्तिरन्येषां विधेयतया दर्शिता भवत्विति। निश्चलः चलनाभावात्, निष्पंदः किंचिच्चलनस्याप्यभावाद्, अत एव निरेजनो–निष्कम्पः, अत एव आ ईपल्लीनो–अङ्गसंयमनात्, प्रकर्षेण लीनः–उपाङ्गसंयमनात्, अत एव गुप्तः–परिस्पन्दनाभावात्, अत्र कवेरुत्प्रेक्षा–“ एकान्ते किमु मोहराजविजये मन्त्रं प्रकुर्वन्निव, ध्यानं किञ्चिदगोचरं विरचयत्येकः परब्रह्मणे। किं कल्याणरसं प्रसाधयति वा देवो विलुप्यात्मकं, रूपं कामविनिग्रहाय जननीकुक्षावसौ वः श्रिये ॥ १ ॥” ततो विशेषणकर्मधारयः, चापीति समुच्चये ॥ ९१ ॥

दैवं प्रति, किं चक्रे तेन सततवक्रेण । यन्मन्मनोरथतरु–मूलादुन्मूलितोऽनेन ॥ ३ ॥ आदत्ते दत्त्वाऽपि च, लोचनयुगलं कलङ्कविकलमलं । दत्त्वा पुनरुद्दालित–मधमेनानेन निधिरत्नम् ॥ ५ ॥ आरोप्य मेरुशिखरं, प्रपातिता पापिनामुनाहमियम् । परिवेष्याप्याकृष्टं, भोजनभाजनमलज्जेन ॥ ६ ॥ यद्वा मयाऽपराद्धं, भवान्तरेऽस्मिन् भवेऽपि भवतः किं ? । यस्मादेवं कुर्व-न्नुचितानुचितं न चिन्तयसि ॥७॥ अथ किं कुर्वे क्व च वा, गच्छामि वदामि कस्य वा पुरतः ? । दुर्दैवेन च दग्धा, जग्धा मुग्धाऽधमेन पुनः ॥८॥ किं राज्येनाप्यमुना ?, किं वा कृत्रिमसुखैर्विषयजन्यैः ? । किं वा दुकूलशय्या–शयनोद्भवशर्महर्म्येण ? ॥ ९ ॥ गजवृषभादिस्वप्नैः, सूचितसुचितं सचित्रजगदर्च्यम् । त्रिभुवनजनासपत्नं, विना जनाऽऽनन्दिसुतरत्नम् ॥१०॥ युग्मम् ॥ तदरे ! दैवत ! किमुप-स्थितोऽसि दुःखाग्निगहनदहनाय । भवतोऽपराधविधुरां, किं मां प्रतिधरसि वैरिधुराम् ? ॥ ११ ॥ धिक् संसारमसारं, धिक् पर्यन्तासुखाभिमुखविषयान् । मधुलिप्तखड्गधारा-लेहनतुलितानहो ललितान् ॥ १२ ॥ यद्वा मयका किञ्चि-त्तथाविधं दुष्कृतं कृतं कर्म । पूर्वभवे यदपिभिः, प्रोक्तमिदं धर्मशास्त्रेषु ॥ १३ ॥ पसुपक्खिमाणुसाणं, बाले जो वि हु विओयए पावो । सो अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा ॥ १४ ॥ तत्पङ्कुका मया किं ?, त्यक्ता वा त्याजिता अधमबुद्ध्या । लघुवत्सानां मात्रा, समं वियोगः कृतः किं वा ? ॥ १५ ॥ तेषां दुग्धापायो–ऽकारि मया कारितोऽथवा लोके । किं वा सबालकोंदुर-बिलानि जलपूरितानि मया ? ॥ १६ ॥ किं कीटिकादिनगरा-ण्युष्णजलप्लावितानि धर्मधिया । किं वा काकाण्डानि च, धर्मकृते स्फोटितानि मया ? ॥ १७ ॥ किं वा साण्डशिशून्यपि, तन्नीडानि प्रपातितानि

किं वा बालकहत्या-ऽकारि सपत्नीसुताद्युपरि भुवि । पिकशुककुर्कुटकादे-र्बालवियोगोऽथवा विहितः ? ॥ १८ ॥ किं वा गर्भस्तम्भन–शातनपातनमुखं मया दुष्टम् । चिन्तितमचिन्त्यमपि वा, कृतानि किं कार्मणादीनि ? ॥ १९ ॥ किं वा गर्भस्तम्भन–शातनपातनमुखं मया दुष्टम् । चिन्तितमचिन्त्यमपि वा, कृतानि किं कार्मणादीनि ? ॥ २० ॥ अथवाऽन्यद्वा मयका, किमपि महापातकं कृतं चक्रे । तन्मन्त्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥ २० ॥ अथवाऽन्यद्वा मयका, किमपि महापातकं कृतं चक्रे । तन्मन्त्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥ २१ ॥ यतः–कुरंडरंडत्तणदुब्भगाई, वंझत्तनिंदूविसकन्न-कम्मं । सच्छीलखण्डनाद्यं, यदिदं तद्वते न सम्भवति ॥ २२ ॥ दुर्दैवत ! रे निर्घृण !, निष्करुणाकार्यसज्ज ! गाई । जम्मंतरे खंडिअसीलभावा, नाऊण कुज्जा दढसीलभावं ॥ २३ ॥ अथवालमनृतदैवो-पलम्भनैरेवमुन्मना निर्लज्ज ! । विगतागसि मयि तत्किं, निष्कारणवैरितां वहसि ॥ २४ ॥ प्रोवाच साश्रुलोचन–रचना निःश्वासकलितवचनेन । किं देवी । दृष्टा शिष्टेन सखी–जनेन तत्कारणं पृष्टा ॥ २५ ॥ सख्यो जगुरथ रे सखि !, शान्तममङ्गलमशेषमन्यदिह । मन्दभागधेया, वदामि यज्जीवितं मेऽगात् ॥ २६ ॥ सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति मे सख्यः । गर्भस्य तेऽस्ति कुशलं, न वेति वद कोविदे सपदि ॥ २६ ॥ सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति मे सख्यः । गर्भस्य तेऽस्ति कुशलं, न वेति वद कोविदे सपदि ॥ २७ ॥ शीतलवातप्रभृतिभि-रुपचारैर्बहुतरैः सखीभिः सा । सम्प्रापित-इत्याद्युक्त्वा मूर्च्छा-मापन्ना पतति भूपीठे ॥ २७ ॥ शीतलवातप्रभृतिभि-रुपचारैर्बहुतरैः सखीभिः सा । सम्प्रापित-चैतन्यो-त्तिष्ठति विलपति च पुनरेवम् ॥ २८ ॥ गुरुए अणोरपारे, रयणनिहाणे अ सायरे पत्तो । छिद्दघडो न भरिज्जइ ता किं दोसो जलनिहिस्स ? ॥ २९ ॥ पत्ते वसंतमासे, रिद्धिं पावेइ सयलवणराई । जन्न करीरे पत्तं, ता किं दोसो वसंतस्स ? ॥ ३० ॥ उत्तंगो सरलतरू, बहुफलभारेण नमिअसव्वंगो । कुज्जो फलं न पावइ, ता किं दोसो तरुवरस्स ? ॥ ३१ ॥ समीहितं यन्न लभामहे वयं, प्रभो ! न दोषस्तव कर्मणो मम । दिवाऽप्युलूको यदि

नावलोकते, तदा स दोषः कथमंशुमालिनः? ॥ ३२ ॥ अथ मम मरणं शरणं, किं करणं विफलजीवितव्येन । तच्छ्रुत्वा विललाप च, सख्यादिकसकलपरिवारः ॥ ३३ ॥ यत्किं चक्रेऽस्माकं, स्वामिन्या दैवतेन दुर्मतिना । हा! कुलदेव्यः क्व गता, यदुदासीनाः स्थिता यूयम् ॥ ३४ ॥ इत्यादिकं प्रभूतं, तथै(दै)व किल कारयन्ति कुलवृद्धाः । शान्तिकपौष्टिकमन्त्रो-पयाचितादीनि कृत्यानि ॥ ३५ ॥ पृच्छन्ति च दैवज्ञान्, निषेधयन्त्यपि च नाटकादीनि । अतिगाढशब्दविरचित-वचनानि निवारयन्त्यपि च ॥ ३६ ॥ राजाऽपि लोककलितः, शोकाकुलितोऽजनिष्ट शिष्टमतिः । किं कर्त्तव्यत्वेन च, मूढत्वं मन्त्रिणः प्रापुः ॥ ३७ ॥ इत्येवं सति तंपि सिद्धत्थरायवरभणं ति तदपि सिद्धार्थराजवरभवनं उपरतं निवृत्तं मृदङ्गतन्त्रीतलतालैः प्राग्व्याख्यातैर्नाटकीयै-र्नाटकहितैर्जनैः-पात्रैः मणुज्जं ति भावप्रधानत्वान्निर्देशस्य मनोज्ञत्वं-चारुता यस्मात्, अथवा उपरतमृदङ्गतन्त्रीतलतालनाटकीयजनं अणुज्जं ति अनूर्जमनोजस्कं वा अत एव दीनविमनस्कं विहरति-आस्ते ॥ ९२ ॥

तएणं से समणे भगवं महावीरे माऊए अयमेयारूवं अब्भत्थियं पत्थियं मणोगयं संकप्पं समुप्पन्नं वियाणित्ता एगदेसेणं एयइ तएणं सा तिसला खत्तियाणी हट्ठतुट्ठजाव हयहिअया एवं वयासी ॥ ९३ ॥

व्याख्या—तएणं से इत्यादित एवं वयासीति यावत्, तत्र तं तथाविधं पूर्वोदितं व्यतिकरमवधिनाऽवधार्य भगवान्

फलितो जन्मावध्या—राधितजिनधर्म्मकल्पतरुः ॥ ४ ॥ इत्यादि महाहर्षित-देवीमालोक्य वृद्धललनानाम् । जय जय नन्देत्याद्या-शिषः प्रवृत्ता मुखकजेभ्यः ॥ ५ ॥ कलया प्रवर्त्तितान्यपि, कुलललनाभिश्च ललितधवलानि । उत्तम्भिताः पताका, मुक्तानां स्वस्तिका न्यस्ताः ॥ ६ ॥ अष्टावष्टौ मङ्गल—कानि समालेखितानि सर्वत्र । सत्पञ्चवर्णपुष्प-प्रकरः परितो भुवि विकीर्णः ॥ ७ ॥ कर्पूरागुरुचन्दन-परिमलनिकरः कृतश्च सर्वत्र । बद्धानि तोरणान्यपि, सुकुङ्कुमस्य च्छटा दत्ताः ॥ ८ ॥ स्थाने स्थाने मङ्गल-धवलातोद्यानि गीतनृत्यानि । राजभवनं चतुर्भिर्वर्णैः सङ्कीर्णमपि जज्ञे ॥ ९ ॥ वर्द्धापनाऽऽगताभिः, सुवर्णकोटीभिरपि च सम्पूर्णम् । हट्टश्रेणिषु शोभाः, प्रयोजिता जिनगृहे पूजा ॥ १० ॥ वन्दिजनमोचनानि च, रचितान्युद्घोषितोऽप्यमारिरवः । सङ्घस्यानघभक्ति—र्व्यक्तीचक्रे विविधविधिना ॥ ११ ॥ सम्पन्ना दानेन च, राजनराः कल्पतरव इव नव्याः । ऐश्वर्येण च राजा, सुरराज इवात्र सञ्जज्ञे ॥ १२ ॥ दिव्याऽऽभरणविभूत्या, सुरलोक इवात्र सकललोकोऽपि । किं बहुना सर्वेषां, परमाऽऽनन्दश्च सम्पन्नः ॥१३॥” इति । “आस्तन्यपानाज्जननी पशूना-मादारलाभाच्च नराधमानाम् । आगेहकृत्याच्च हि मध्यमाना—माजीवितात्तीर्थमिवोत्तमानाम् ॥ १ ॥” इति । गब्भत्थे चेव त्ति पक्षाधिकमासषट्के व्यतिक्रान्त इत्यर्थः, उक्तञ्च—“तिहिँ नाणेहिँ समग्गो, देवीतिसलाइ सो उ कुच्छिंसि । अह वसइ सन्निगब्भे, छम्मासे अद्धमासं च ॥ १ ॥ अह सत्तमंमि मासे, गब्भत्थो चेव अभिग्गहं गिन्हे । नाहं समणो होहं, अम्मापियरम्मि जीवंते ॥ २ ॥” इति ॥ ९४ ॥

तएणं सा तिसला खत्तियाणी ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता जाव-

सव्वालंकारविभूसिया तं गब्भं नाइसीएहिं नाइउण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाएहिं नाइअंबिलेहिं नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं सव्वत्तुभयमाणसुहेहिं भोयणच्छायणगंधमल्लेहिं ववगयरोगसोगमोहभयपरिस्समा सा जं तस्स गब्भस्स हिअं मियं पत्थं गब्भपोसणं तं देसे य काले य आहारमाहारेमाणी विचित्तमउएहिं सयणासणेहिं पइरिक्कसुहाए मणाणुकूलाए विहारभूमीए पसत्थदोहला संपुण्णदोहला सम्माणियदोहला अविमाणियदोहला वुच्छिन्नदोहला ववणीयदोहला सुहं सुहेणं आसइ सयइ चिट्ठइ निसीयइ तुयट्टइ विहरइ सुहं सुहेणं तं गब्भं परिवहइ ॥ ९५ ॥

व्याख्या—तएणं सा इत्यादितः परिवहइ त्ति यावत्, तत्र नाइसीएहिं इत्यादि शीतादिषु हि कानिचिद्वातिकानि कानिचित्पैत्तिकानि कानिचित् श्लेष्मकारीणि च स्युः, उक्तं च वाग्भटे—"वातलैश्च भवेद् गर्भः, कुब्जान्धजडवामनः । पित्तलैः खलतिः पिङ्ग—श्वित्री पाण्डुः कफात्मभिः ॥ १ ॥" इति । तथा "अतिलवणं नेत्रहरं, अतिशीतं मारुतं प्रकोपयति । अत्युष्णं हरति बलं, अतिकामं जीवितं हरति ॥ १ ॥ वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते । शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते ॥ २ ॥ सर्वे बुद्धिप्रदा गौल्याः, सर्वे क्षारा मलापहाः । कषाया रञ्जकाः सर्वे, सर्वे आम्ला विपोपमाः ॥ ३ ॥" तथा—ग्राम्यधर्म १ यान २ वाहना ३ ध्वग-

मन ४ प्रस्खलन ५ प्रपतन ६ प्रपीडन ७ प्रधावना ८ भिघात ९ विपमशयन १० विपमासनो ११ पवास १२-वेग १३ विघाता १४ तिरूक्षा १५ तिकटु १६ तितिक्ता १७ तिभोजना १८ तिरागा १९ तिशोका २० तिक्षा-रसेवा २१ तीसार २२ वमन २३ विरेचन २४ प्रेङ्खोलना २५ जीर्ण २६ प्रभृतिभिर्वन्धनान्मुच्यते गर्भः । "मन्दं सञ्चर मन्दमेव निगद व्यामुञ्च कोपक्रमं, पथ्यं भुङ्क्ष्व वधान नीविमनघां मा माट्टहासं कृथाः । आकाशे भव मा सुशेष्व शयने नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवर्गेण सा शिक्ष्यते ॥ १ ॥" सव्वत्तुभयमाण त्ति ऋतौ ऋतौ यथायथं भज्यमानाः-सेव्यमानाः सुखहेतवो ये तैः भोजनाच्छादनगन्धमाल्यैः, तत्र भोजन-माहारग्रहणं, आ-च्छादनं-प्रावरणं, गन्धाः-पटवासादयः, माल्यानि-पुष्पमाला, ववगयेत्यादि रोगा-ज्वराद्याः, शोक-इष्टवियोगादि-जनितः, मोहो-मूर्च्छा, भयं-भीतिमात्रं, परित्रासो-ऽकस्माद्भयं, परित्रासस्थाने परिश्रमो वा व्यायामः, हितं-गर्भ-स्यैव मेधायुरादिवृद्धिकारणं, तच्च दिवास्वापाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनश्रवणा-वलेखनानिलायासपरिहारेण । यतो-"दिवा स्वपन्त्याः स्त्रियः स्वापशीलो गर्भः, अञ्जनादन्धः, रोदनाद्विकृतदृष्टिः स्नानानुलेपनात् दुःखशीलः, तैलाभ्यङ्गात्कुष्ठी, नखापकर्त्तनात् कुनखी, प्रधावनाच्चञ्चलः, हसनात् श्यामदन्तोष्ठतालु-जिह्वः, अतिकथनात् प्रलापी, अतिशब्दश्रवणाद्बधिरः, अवलेखनात् खलतिः, व्यजनक्षेपादिमारुताऽऽयाससेवनादु-न्मत्तः स्यात् ।" इति सुश्रुते । मितं-परिमितं नाधिकमूनं वा, पथ्यं-आरोग्यकारणात्, कोऽर्थो गर्भपोपणं देशे-उ-चितभूप्रदेशे, काले-तथाविधावसरे, विविक्तानि-दोषवियुक्तानि लोकान्तरासङ्कीर्णानि वा मृदुकानि च कोमलानि

१ हसनातिकथनातिशब्दश्रावणा० इति प्रत्यन्तरे पाठ, स च योग्य, तथैव व्याख्यानात् ।

मनोऽनु-
यानि तैः शयनाऽऽसनैः । पइरिक्क त्ति प्रतिरिक्तया–तथाविधजनापेक्षया विजनयाऽत एव सुखया शुभया वा
कूलया विहारभूम्या—चङ्क्रमणाऽऽसनादिभूम्या पसत्थेत्यादि प्रशस्तदोहदा–अनिन्द्यमनोरथा, सम्पूर्णदोहदा–अभि-
लापपूरणात्, सम्मानितदोहदा–प्राप्ताभिलषितस्य भोगात्, अविमानितदोहदा–नावज्ञातदोहदा क्षणमपि नापूरि-
तमनोरथेत्यर्थः । अत एव व्यवच्छिन्नदोहदा–त्रुटिताकाङ्क्षा, दोहदव्यवच्छेदस्यैव प्रकर्षाभिधानायाह–व्यपनीतदो-
हदा, सुखं सुखेन–गर्भानाबाधया आसइ त्ति आश्रयति आश्रयणीयं स्तम्भादि, शेते निद्रया, तिष्ठत्यूर्ध्वस्थानेन,
निषीदति–आसने उपविशति, त्वग् वर्त्तयति निद्रां विना शय्यायां, विहरति कुट्टिमे ॥ ९५ ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से गिम्हाणं पढमे मासे दुच्चे पक्खे चि-
त्तसुद्धे तस्स णं चित्तसुद्धस्स तेरसीदिवसेणं नवन्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठमाणं
राइंदियाणं विइक्कंताणं उच्चट्ठाणगएसु गहेसु पढमे चंदजोगे सोमासु दिसासु वितिमि-
रासु विसुद्धासु जइएसु सव्वसउणेसु पयाहिणाणुकूलंसि भूमिसप्पंसि मारुयंसि पवायंसि
निप्फन्नमेइणीयंसि कालंसि पमुइअपक्कीलिएसु जणवएसु पुव्वरत्तावरत्तकालसमयंसि हत्थु-
त्तराहिं नक्खत्तेणं जोगमुवागएणं आरोग्गारोग्गं दारयं पयाया ॥ ९६ ॥

व्याख्या—तेणं कालेणमित्यादितः पयाय त्ति पर्यन्तम्, तत्र सार्द्धसप्तदिनाधिका नवमासाः प्रतिपूर्णाः, उक्तं

च–"दुन्हं वर महिलाणं, गब्भे वसिऊण गब्भसुकुमालो । नवमासे पडिपुण्णे, सत्त य दिवसे समइरेगे ॥ १ ॥" न त्वेवं कालमानं सर्वेपामपि, यतः—"दु १ चउत्थ २ नवम ३ बारस ४, तेरस ५ पन्नरस ६ सेस १८ गब्भ-ठिई । मासा अड १ नव २ तदुवरि, उसहाउ कमेणिमे दिवसा ॥ १ ॥ चउ १ पणवीसं २ छद्दिण ३, अडवीसं ४ छच्च ५ छचि ६ गुणवीसं ७ । सग ८ छवीसं ९ छ १० च्छ ११ य, वीसि १२ गवीसं १३ छ १४ छवीसं १५ ॥ २ ॥ छ १६ प्पण १७ अड १८ सत्त १९ ट्ठ २० य, अट्ठ २१ ट्ठ २२ छ २३ सत्त २४ होंति गब्भदिणा ।" इति सप्ततिशतस्थानके सोमतिलकसूरिकृते । उच्चट्ठाणेत्यादि ग्रहाणामुच्चस्थानान्येवम्—"अर्काद्युच्चान्यज १ वृष २–मृग ३ कन्या ४ कर्क ५ मीन ६ वणिजों ७ ऽशैः । दिग् १० दहना ३ ष्टाविंशति २८–तिथी १५ षु ५ नक्षत्र २७–विंशतिभिः २० ॥ १ ॥" फलं त्वेवम्–"सुखी १ भोगी २ धनी ३ नेता ४, जायते मण्डलाधिपः ५ । नृपति ६–श्चक्रवर्त्ती ७ च क्रमादुच्चग्रहे फलम् ॥ १ ॥" तथा "तिहिं उच्चेहिं नरिंदो, पंचहिं तह होइ अद्धचक्की अ । छहिं होइ चक्कवट्टी, सत्तहिं तित्थंकरो होइ ॥ २ ॥ इक्को जइ उच्चत्थो, हवइ गहो उन्नइं परं कुणइ । पुण वे तिण्णि गहाओ, कुणंति को इत्थ संदेहो ॥ ३ ॥" तथा–"निःस्वो १ नीचरत २ श्चौरो ३, निःप्रज्ञो ४ बुद्धिवर्जितः ५ । शत्रुप्रपीडितो ६ रोगी ७, अर्काद्यैर्नीचगैः क्रमात् ॥ १ ॥ अन्धं दिगम्बरं मूर्खं, परपीडोपजीवनम् । कुर्यातामतिनीचस्थौ, पुरुषं चन्द्रभास्करौ ॥ २ ॥ त्रिभिर्नीचैर्भवेद्दास–स्त्रिभिरुच्चैर्नराधिपः । त्रिभिः स्वस्थानगैर्मंत्री, त्रिभिरस्तमितैर्जडः ॥३॥" उच्चत्वं चात्र ग्रहाणामंशकाद्यपेक्षया घटनीयम् । प्रथमशब्दः प्रधानार्थः प्रधाने चन्द्रबलेऽर्थान्नृपा-

द्दिक्कुमार्यो देव्योऽभ्यायान्ति तारत्वेवम्,–दिक्कुमार्योऽष्टाधोलोक–वासिन्यः कल्पितासनाः । अर्हज्जन्मावधेर्ज्ञात्वाऽभ्येयुस्तत्सूतिवेश्मनि ॥ १ ॥ भोगङ्करा १ भोगवती २, सुभोगा ३ भोगमालिनी ४ । सुवत्सा ५ वत्समित्रा च ६, पुष्पमाला ७ त्वनिन्दिता ८ ॥ २ ॥ नत्वा प्रभुं तदम्बां चे–शाने सूतिगृहं व्यधुः । संवर्त्तेनाशोधयन् क्ष्मामायोजनमितो गृहात् ॥ ३ ॥ मेघङ्करा १ मेघवती २, सुमेघा ३ मेघमालिनी ४ । तोयधारा ५ विचित्रा ६ च, वारिषेणा ७ बलाहिका ८ ॥ ४ ॥ अष्टोर्द्ध्वलोकादेत्यैता, नत्वाऽर्हन्तं समातृकम् । तत्र गन्धाम्बुपुष्पौघ–वर्षं हर्षाद्वितेनिरे ॥ ५ ॥ अथ नन्दो १ त्तरानन्दे २, आनन्दा ३ नन्दिवर्द्धने ४ । विजया ५ वैजयन्ती ६ च, जयन्ती ७ चापराजिता ८ ॥ ६ ॥ एताः पूर्वरुचकादेत्यालोकार्थं दर्प्पणमग्रतो धरन्ति । समाहारा १ सुप्रदत्ता २, सुप्रबुद्धा ३ यशोधरा ४ । लक्ष्मीवती ५ शेषवती ६, चित्रगुप्ता ७ वसुन्धरा ८ ॥ ७ ॥ एता दक्षिणरुचकादेत्य स्नानार्थं करकृतभृङ्गारा गीतगानं विदधति । इलादेवी १ सुरादेवी २, पृथिवी ३ पद्मवत्यपि ४ । एकनासा ५ नवमिका ६, भद्रा ७ शीते ८ ति नामतः ॥ ८ ॥ एताः पश्चिमरुचकादेत्य वातार्थं व्यजनपाणयोऽग्रे तिष्ठन्ति । अलम्बुसा १ मितकेशी २, पुण्डरीका च ३ वारुणी ४ । हासा ५ सर्वप्रभा ६ श्री ७ र्ह्री ८–रष्टोदग्रुचकाद्रितः ॥ ९ ॥ एता उत्तररुचकादेत्य चामराणि वीजयन्ति । चित्रा १ च चित्रकनका २, शतेरा ३ वसुदामिनी ४ । दीपहस्ता विदिक्ष्वेत्या–स्थुर्विदिग्रुचकाद्रितः ॥ १० ॥ रुचकद्वीपतोऽभ्येयु–श्चतस्रो दिक्कुमारिकाः । रूपा १ रूपासिका २ चापि, सुरूपा ३ रूपकावती ४ ॥ ११ ॥ चतुरङ्गुलतो नालं, छित्त्वा खातोदरेऽक्षिपन् । समापूर्य च वैडूर्यै–स्तस्योर्द्ध्वं पीठ-

सप्तानीकाधिपतीना सप्त भद्रासनानि, चतुर्दिक्षु प्रत्येकं चतुरशीतिसहस्रात्मरक्षकदेवानां चतुरशीतिसहस्रभद्रासनानि, मध्ये शाक्रं सिंहासनम् । पुरतोऽग्रमहिष्योऽष्टौ, वामे सामानिकाः सुराः । दक्षिणे त्रिसभादेवाः, सप्तानीकानि पृष्ठतः ॥ ७ ॥ अन्यैरपि घनैर्देवै-र्वृतः सिंहासनस्थितः । गीयमानगुणोऽचाली-दपरेऽप्यमरास्ततः ॥ ८ ॥ देवेन्द्रशासनात्केचि-त्केचिन्मित्रानुवर्त्तनात् । पत्नीभिः प्रेरिताः केचित्, केचिदात्मीयभावतः ॥ ९ ॥ केऽपि कौतुकतः केऽपि, विस्मयात्केऽपि भक्तितः । चेलुरेवं सुराः सर्वे, विविधैर्वाहनैर्युताः ॥ १० ॥ विविधैस्तूर्यनिर्घोषै-र्घण्टानां क्वणितैरपि । कोलाहलेन देवानां, शब्दाद्वैतं तदाऽजनि ॥ ११ ॥ सिंहस्थो वक्ति हस्तिस्थं, दूरे स्वीयं गजं कुरु । हनिष्यत्यन्यथा नूनं, दुर्द्धरो मम केसरी ॥ १२ ॥ वाजिस्थं कासरारूढो, गरुडस्थो हि सर्प्पगम् । छागस्थं चित्रकस्थोऽथ, वदन्त्येवं तदादरात् ॥ १३ ॥ सुराणां कोटिकोटीभि-र्विमानैर्वाहनैर्घनैः । विस्तीर्णोऽपि नभोमार्गोऽतिसङ्कीर्णोऽभवत्तदा ॥ १४ ॥ मित्रं केऽपि परित्यज्य, दक्षत्वेनाग्रतो ययुः । प्रतीक्षस्व क्षणं भ्रात-र्मामत्रेत्यपरेऽवदन् ॥ १५ ॥ केचिद्वदन्ति भो देवाः ! सङ्कीर्णाः पर्ववासराः । भवन्त्येवंविधा नूनं, तस्मान्मौनं विधत्त भोः ॥ १६ ॥ नभस्यागच्छतां तेषां, शीर्षे चन्द्रकरैः स्थितैः । शोभन्ते निर्जरास्तत्र, सजरा इव निर्ज्जराः ॥ १७ ॥ मस्तके घटिकाकाराः, कण्ठे ग्रैवेयकोपमाः । स्वेदबिन्दुसमा देहे, सुराणां तारका बभुः ॥ १८ ॥ नन्दीश्वरे विमानानि, सङ्क्षिप्यागात्सुराधिपः । जिनेन्द्रं च जिनाम्बां च त्रिः प्रादक्षिणयेत्ततः ॥ १९ ॥ वंदित्वा नमस्यित्वा चे-त्येवं देवेश्वरोऽवदत् । नमोऽस्तु ते रत्नकुक्षि-धारिके ! विश्वदीपिके ! ॥ २० ॥ अहं शक्रोऽस्मि देवेन्द्रः, कल्पादाद्यादिहागमम् ।

स्थापयन्तो वा, धर्मचैत्ये सुरा बभुः ॥ ३२ ॥ संशयं त्रिदशेशस्य, मत्वा वीरोऽमराचलम् । वामाङ्गुष्ठाङ्गसम्पर्कात्, समन्तादप्यचीचलत् ॥ ३३ ॥ कम्पमाने गिरौ तत्र, चकम्पेऽथ वसुन्धरा । शृङ्गाणि सर्वतः पेतु–श्चुक्षुभुः सागरा अपि ॥ ३४ ॥ ब्रह्माण्डस्फोटसदृशे, शब्दाद्वैते प्रसर्पति । रुष्टः शक्रोऽवधेर्ज्ञात्वा, क्षमयामास तीर्थपम् ॥ ३५ ॥ सङ्ख्यातीतार्हतां मध्ये, स्पृष्टः केनापि नांह्रिणा । मेरुः कम्पमिपादित्या–नन्दादिव ननर्त्त सः ॥ ३६ ॥ शैलेषु राजता मेऽभूत्, स्नात्रनीराभिषेकतः । तेनामी निर्जरा हाराः, स्वर्णपीडो जिनस्तथा ॥ ३७ ॥ तत्र पूर्वमच्युतेन्द्रो, विदधात्यभिषेचनम् । ततोऽनुपरिपाटीतो, यावच्चन्द्रार्यमादयः ॥ ३८ ॥ जलस्नात्रे कविघटना–श्वेतच्छत्रायमाणं शिरसि मुखशशिन्यंशुपूरायमाणं, कण्ठे हारायमाणं वपुषि च निखिले चीनचोलायमानम् । श्रीमज्जन्माभिषेकप्रगुणहरिगणोदस्तकुम्भौघगर्भाद्, भ्रश्यद्दुग्धाब्धिपाथश्चरमजिनपतेरङ्गसङ्गि श्रिये वः ॥३९॥ चतुर्वृषभरूपाणि, शक्रः कृत्वा ततः स्वयम् । शृङ्गाष्टकक्षरत्क्षीरै–रकरोदभिषेचनम् ॥ ४० ॥ सत्यं ते विबुधा देवा, यैरन्तिमजिनेशितुः । सृजद्भिः सलिलैः स्नानं, स्वयं नैर्मल्यमाददे ॥ ४१ ॥ समङ्गलप्रदीपं ते, विधायाऽऽरात्रिकं पुनः । सनृत्यगीतवाद्यादि, व्यधुर्विविधमुत्सवम् ॥ ४२ ॥ तथा–उन्मृज्य गन्धकाषाय्या, दिव्ययाङ्गं हरिर्विभोः । विलिप्य चन्दनाद्यैश्च, पुष्पाद्यैस्तमपूजयत् ॥ १ ॥ दर्प्पणो १ वर्द्धमानश्च २, कलशो ३ मीनयोर्युगम् ४ । श्रीवत्स ५ स्वस्तिके ६ नन्द्या-वर्त्त ७ भद्रासने ८ इति ॥ २ ॥ शक्रः स्वामिपुरो रत्न–पट्टके रूप्यतन्दुलैः । आलिख्य मङ्गलान्यष्टा–विति स्तोतुं प्रचक्रमे ॥ ३ ॥ इति त्रिषष्टीयचरित्रे । शक्रोऽथ जिनमानीय, विमुच्याम्बान्तिके ततः । सञ्जहार प्रतिबिम्बा–वस्वापिन्यौ

स्वशक्तितः ॥ ४३ ॥ कुण्डलक्षोमयुग्मं चो-च्छीर्षे मुक्त्वा हरिर्व्यधात् । श्रीदामरत्नदामाढ्य-मुल्लोचे स्वर्णकन्दुकम्
॥ ४४ ॥ द्वात्रिंशद्रत्नरैरूप्य-कोटिवृष्टिं विरच्य सः । वाढमाघोषयामासे-ति सुरैराभियोगिकैः ॥ ४५ ॥ स्वामिनः
स्वामिमातुश्च, करिष्यत्यशुभं मनः । सप्तधाऽऽर्यमञ्जरीव, शिरस्तस्य स्फुटिष्यति ॥ ४६ ॥ स्वाम्यङ्गुष्ठेऽमृतं न्यस्य, स्वा-
मिजन्मोत्सवं सुराः । नन्दीश्वरेऽष्टाह्निकां च, कृत्वा जग्मुर्यथाक्रमम् ॥ ४७ ॥ क्रमस्त्वेवं-जिनजन्मोत्सवानन्तरं
बहवो देवा नन्दीश्वरद्वीपे यात्रायै यान्ति, शक्रस्तु जिनगृहं ततः पूर्वदिश्यञ्जनगिरिचैत्ये, तल्लोकपालास्तु क्रमेण च-
तुर्दिग्वर्त्तिषु चतुर्षु दधिमुखशिखरिचैत्येषु, शक्रवदीशानोऽपि परमुत्तरस्यां, एतल्लोकपाला अपि प्राग्वत्, चमरबली-
न्द्रावपि क्रमेण दक्षिणपश्चिमयोर्दिशयोरित्यादि बोध्यम् । इति देवकृतश्रीमहावीरजन्मोत्सवः ॥

एवं च चातुर्निकायिकानेककोटाकोटिदेवदेवीभिर्निर्मीयमाणे जिनजन्मोत्सवे जगति यद्वेतुकं यज्जातं तदाह-
ओवयंतेहि त्ति अवपतद्भिः-अवतरद्भिः उप्पयंतेहि त्ति उत्पतद्भिः-ऊर्ध्वं गच्छद्भिः उत्पिञ्जलो-भृशमाकुलः स इवा-
चरतीति 'क्विपि शतरि च' प्राकृतत्वात् माणादेशे उप्पिंजलमाणेति सिद्धं, तद्भूता भूतस्योपमार्थत्वादुत्पिञ्जलेतीव
कहकहग त्ति अव्यक्तवर्णो नादस्तद्भूता चापि हर्षाट्टहासादिना कहकहा रवमयी च हुत्था-अभवत् । क्वचित्
उप्पिंजलमालाभूआ पाठः, तत्र उत्पिञ्जलानां भृशमाकुलानां देवादीनां माला-श्रेणिस्तां भूता प्राप्ता । क्वापि
देवुज्जोए एगालोए देवसन्निवाया उप्पिंजल इत्यादि पाठः, तत्र होत्थ त्ति प्रत्येकं सम्बन्धाद्देवोद्योतोऽभूत्,

एकालोकश्चोद्योताद्वैतभावात्, लोकः-चतुर्दशरज्ज्वात्मको भुवनं वाऽभूत्। देवसन्निपाता उप्पिंजलेत्यादि विशेषणद्वयोपेता अभवत्, क्वापि देवुक्कलिअ त्ति तत्रोत्कलिका-हर्षज उत्कृष्टक्ष्वेडितनादः ॥ ९७ ॥

जं रयणिं च णं समणे भगवं महावीरे जाए तं रयणिं च णं बहवे वेसमणकुंडधारीतिरियजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं च, सुवण्णवासं च, वयरवासं च वत्थवासं च, आभरणवासं च, पत्तवासं च, पुप्फवासं च, फलवासं च बीयवासं च, मल्लवासं च, गंधवासं च, चुन्नवासं च, वण्णवासं च, वसुहारवासं च वासिंसु ॥ ९८ ॥

व्याख्या—जं रयणिं च णमित्यादितो वासं च वासिंसु त्ति पर्यन्तम्, तत्र हिरण्यं-रूप्यं, वर्षं-अल्पतरवृष्टिः, वृष्टिस्तु-महती शेषं प्राग्वत् । क्वचित् धन्नवासं च त्ति पाठस्तत्र धान्यवर्षं, अत्रान्तरे प्रियभाषिताऽभिधाना चेटी राजानं वर्द्धापयति, यथा पिअट्ठयाए पिअं निवेएमो, पिअं भे भवतु, मउडवज्जं जहामालिअं ओमयं मत्थए धोअइ' इति क्वचिद्दृश्यते एतद्व्याख्या-पिअट्ठयाए प्रीत्यर्थं प्रियं-इष्टं वस्तु पुत्रजन्मलक्षणं निवेदयामः, एतच्च प्रियनिवेदनं प्रियं भे-भवतां भवत्विति, तस्या दानं मउडवज्जं ति मुकुटस्य राजचिह्नत्वात् तस्य स्त्रीणामनर्हत्वात्, जहामालिअं ति

यथाधारितं 'मलि धारणे' उक्तत्वात्, यथापरिहितमित्यर्थः ओमयंति अवमुच्यते—परिधीयते यः सोऽवमोचक— आभरणं तं मत्थए धोअइ त्ति अङ्गप्रतिचारकाणां मस्तकानि क्षालयंति, दासत्वापनयनार्थं स्वामिना धौतमस्तकस्य हि दासत्वमपगच्छतीति लोकव्यवहारः ॥ ९८ ॥

तएणं से सिद्धत्थे खत्तिए भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं तित्थयरजम्मणाभिसेयमहिमाए कयाए समाणीए पच्चूसकालसमयंसि नगरगुत्तिए सद्दावेइ सद्दावित्ता एवं वयासी ॥ ९९ ॥

व्याख्या—तएणमित्यादितः एवं वयासीति पर्यन्तम्, तत्र नगरगुत्तिए त्ति पुरारक्षकान् ॥ ९९ ॥

खिप्पामेव भो देवाणुप्पिया! कुंडग्गामे नगरे चारगसोहणं करेह करित्ता माणुम्माणवद्धणं करेह करित्ता कुंडपुरं नगरं सब्भिंतर बाहिरियं आसिअसंमज्जिओवलित्तं सिंघाडगतियचउक्कचच्चरचउम्मुहमहापहपहेसु सित्तसुइसम्मट्ठरत्थंतरावणवीहियं मंचाइमंचकलियं नाणाविहरागभूसियज्झयपडागमंडियं लाउल्लोइयमहियं गोसीससरसरत्तचंदणदद्दरदिन्नपंचंगुलितलं

उवचियचंदणकलसं वन्दणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तविपुलवट्टवग्घारियमल्लदामकलावं पंचवन्नसरससुरहिमुक्कपुप्फपुंजोवयारकलियं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामं सुगन्धवरगंधियं गंधवट्टिभूयं नडनट्टगजल्लमल्लमुट्ठियवेलंबगकहगपठगलासगआरक्खगलंखमंखतूणइल्लतुंबवीणियअणेगतालायराणुचरियं करेह कारवेह करित्ता कारवित्ता अ जूयसहस्सं मुसलसहस्सं च उस्सवेह, उस्सवित्ता मम एयमाणत्तियं पच्चप्पिणह ॥ १०० ॥

व्याख्या—खिप्पामेवेत्यादितः पच्चप्पिणह त्ति पर्यन्तम्, तत्र चारकशोधनं—बन्दिमोचनम्, यतो राजनीतिरियम् "युवराजाभिषेके च, परराष्ट्रोपमर्द्दने । पुत्रजन्मनि वा मोक्षो, बद्धानां प्रविधीयते ॥ १ ॥" मानं रसधान्यविषयं, उन्मानं—तुलारूपं तयोर्वर्द्धनम् । सहाभ्यन्तरेण—मध्यभागेन बाहिरिका—बहिर्भागो यत्र तत्तथा क्रियाविशेषणम् । आसिक्तं—गन्धोदकच्छटकदानात्, सम्मार्जितं—कचवरशोधनात्, उपलिप्तं—गोमयादिना, शृङ्गाटकादयः प्राग्वत् । पहेसु त्ति पन्थाः—सामान्यमार्गः, सिक्तानि—जलेन अत एव शुचीनि—पवित्राणि, संसृष्टानि—कचवरापनयनेन समीकृतानि वा, रथ्यान्तराणि—रथ्यामध्यानि, आपणवीथयश्च—हट्टमार्गा यस्मिन् । मञ्चा—मालकाः प्रेक्षणकद्रष्टृजनोपवेशननिमित्तं, अतिमञ्चकाः—तेषामप्युपरि ये तैः कलितम् । नानाविधरागैः—कुसुम्भादिभिर्विभूषिता ये ध्वजाः—सिंहगरु-

डादिरूपोपलक्षिता बृहत्पटरूपाः, पताकाश्च—तदितररूपास्ताभिर्मण्डितम् । लाइअं छगणादिना भूमौ लेपनं उल्लोइअं सेटिकादिना कुट्ट्यादिषु धवलनं ताभ्यां महितमिव—पूजितमिव ते एव वा महितं—पूजनं यत्र, गोशीर्षस्य—चन्दनविशेषस्य, सरसस्य—प्रत्यग्रस्य, रक्तचन्दनस्य—चन्दनविशेषस्यैव, दर्दुरस्य—दर्दुराभिधानाद्रिजातश्रीखण्डस्य, गोशीर्षादिभिर्वा दत्ता—न्यस्ताः पञ्चांगुलयस्तला—हस्तका कुड्यादिषु यस्मिन्, दर्दरबहुलेन चपेटारूपेण वा दत्तपञ्चाङ्गुलितलमित्येके । उपचिता—उपनिहिता गृहान्तःकृतचतुष्केषु चन्दनकलशा—माङ्गल्यघटा यत्र । चन्दनघटाः सुकृतातोरणानि च प्रतिद्वारं—द्वारस्य द्वारस्य देशभागेषु यत्र । क्वचित् घडस्थाने घण त्ति पाठस्तत्र वन्दना—वन्दनमालाघनानि—बहूनि तोरणानि च प्रतिद्वारं यत्र, यद्वा उपचिता—निवेशिताः चन्दनकलशाश्च वन्दनघटाश्च सुकृततोरणानि च द्वारदेशभागं द्वारदेशभागं प्रति यस्मिन्। देशभागश्च देश एव आसक्तो—भूमिलग्नः उत्सक्तश्च—उपरिलग्नो विपुलो—विस्तीर्णो वृत्तो—वर्त्तुलो वग्घारिअ त्ति प्रलम्बितः पुष्पगृहाकारो माल्यदाम्नां—पुष्पमालानां कलापः—समूहो यत्र। पञ्चवर्णाः सरसाः सुरभयो ये मुक्ताः—करप्रेरिताः पुष्पपुञ्जास्तैर्य उपचारः—पूजा भूमेस्तेन कलितं। कालेत्यादि प्राग्वत् । नटाः—नाटककर्त्तारः, नर्त्तका—ये स्वयं नृत्यन्ति, जल्ला—वरत्रखेलका राज्ञः स्तोत्रपाठका इत्यन्ये, मल्ला नियुद्धप्रतीताः, मौष्टिका—मल्ला एव ये मुष्टिभिः प्रहरन्ति, विडम्बका—विदूषका वेलम्बका वा ये समुखविकारमुत्प्लुत्योत्प्लुत्य नृत्यन्ति, कथकाः—सरसकथावक्तारः, पठकाः सूक्तादीनां क्वापि पवग त्ति पाठस्तत्र प्लवका—ये उत्प्लवन्ते झम्पादिभिर्गर्त्ता-

दिकं लंघयन्ति नद्यादिकं वा तरन्ति, लासका—ये रासकान् ददति जयशब्दप्रयुक्तारो वा भाण्डा इत्यर्थः आरक्षकाः—तलवराः, क्वचिदारक्खग त्ति स्थाने आइक्खग त्ति पाठस्तत्र आख्यायका ये शुभाशुभमाख्यान्ति । लङ्खा—महावंशाग्रखेलकाः, मङ्खाः—चित्रफलकहस्ताः भिक्षाका—गौरीपुत्रका इति वित्ताः । तूणइल्ला तूणीरधराः तूणाभिधानवाद्यवन्तो वा, तुम्बवीणिका—वीणावादकाः, अथवा तुम्बाः किन्नरीलपन्यादिवादका वीणिका—वीणावादिनः, अनेके ये तालाचराः—तालादानेन प्रेक्षाकारिणः तालान् कुट्टयन्तो वा ये कथां कथयन्ति, तैरनुचरितं—सेवितं, यत्तत्तथा, कुरुत स्वयं, कारयत चान्यैः ॥ १०० ॥

तएणं कोडुंबियपुरिसा सिद्धत्थेणं रन्ना एवं वुत्ता समाणा हट्ठतुट्ठ जाव हयहियया करयल जाव पडिसुणित्ता खिप्पामेव कुंडपुरे नगरे चारगसोहणं जाव उस्सवित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति उवागच्छित्ता करयल जाव कट्टु सिद्धत्थस्स खत्तियस्स रन्नो एयमाणत्तियं पच्चप्पिणंति ॥ १०१ ॥

व्याख्या—तएणं कोडुंबियेत्यादितः पच्चप्पिणंति त्ति यावत् सुगमम् ॥ १०१ ॥

तएणं से सिद्धत्थे राया जेणेव अट्टणसाला तेणेव उवागच्छइ उवागच्छित्ता जाव सव्वारोहेणं सव्वपुप्फगन्धवत्थमल्लालंकारविभूसाए सव्वतुडियसद्दनिनाएणं महया इड्ढीए महया

उस्सुकमित्यादि उच्छुल्कां–मुक्तशुल्कां स्थितिपतितां करोतीति सम्बन्धः । शुल्कं–विक्रेतव्यभाण्डं प्रति मण्डपिकायां राजदेयं द्रव्यं, उत्करां–उन्मुक्तकरां करो–गवादीन् प्रति प्रतिवर्षं राजदेयं द्रव्यं, उत्कृष्टां–प्रधानां यद्वा कर्षणं कृष्टं उन्मुक्तं कृष्टं यस्यां लभ्येऽप्याकर्षणनिषेधात्, अदेयां–विक्रयनिषेधेन केनापि न कस्यापि देयम्, अमेयां–क्रयविक्रय-निषेधात् । अविद्यमानो भटानां–राजाज्ञादायिनां भट्टपुत्रादिनॄणां प्रवेशः कुटुम्बिगृहेषु यस्यां अदण्डिमकुदण्डिमं ति दण्डेन निर्वृत्तं दण्डिमं कुदण्डेन निर्वृत्तं कुदण्डिमं राजद्रव्यं तन्नास्ति यस्या, तत्र दण्डोऽपराधानुसारेण राजग्राह्यं द्रव्यं, कुदण्डस्तु–कारणिकानां प्रज्ञापराधान्महत्यप्यपराधिनोऽप्यपराधेऽल्पं राजग्राह्यम्, क्वचित् अदण्डकुदण्डिमं ति पाठः, तत्र दण्डलभ्यं द्रव्यं दण्डः, शेषं प्राग्वत्, अधरिमं ति अविद्यमानं धरिमं–धारणीयद्रव्यं ऋणमुत्कलनात् यस्यां । क्वचित् अहरिमं ति केनापि कस्याप्यहरणात्, गणिकावरै–र्विलासिनीप्रधानैर्नाटकीयै–र्नाटकप्रतिबद्धपात्रैः कलिता या, क्वचित् अगणिअवरनाडइज्जकलिअं ति तत्रागणितैः–प्रतिस्थानं सद्भावादसंख्यातैर्वरैः–प्रधानैर्नाटकीयैः, शेषं प्राग्वत् । अनेकतालाचरानुचरितां–प्रेक्षाकारिविशेषासेवितां, अनुद्धुता–आनुरूप्येण वादनार्थमुत्क्षिप्ता अनुद्धता वा–वादनार्थमेव वादकैरपरित्यक्ता मृदङ्गा यस्यां, अम्लानानि माल्यदामानि–पुष्पमाला यस्यां, प्रमुदितो–हृष्टः प्रक्री-डितश्च–क्रीडितुमारब्धः सहपुरजनेन जानपदो–जनपदवासिलोको यस्यां, क्वचित् पमुइअपक्कीलियजणाभिरामं ति तत्र प्रमुदितैः प्रक्रीडितैश्च जनैरभिरामां विजयवेजइ इति क्वचित्, तत्रातिशयेन विजयो विजयविजयः स प्रयोजनं

साइमं उवक्खडावेन्ति, उवक्खडावित्ता मित्तनाइनियगसयणसंबंधिपरिजणं नायए खत्तिए अ आमंतेति; आमन्तित्ता तओ पच्छा ण्हाया कयबलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगलाइं, पवराइं वत्थाइं परिहिया अप्पमहग्घाभरणालंकियसरीरा भोयणवेलाए भोयणमण्डवंसि सुहासणवरगया तेणं मित्तनाइनियगसयणसंबंधिपरिजणेणं नायएहिं खत्तिएहिं सद्धिं तं विउलं असणं पाणं खाइमं साइमं आसाएमाणा विसाएमाणा परिभुंजेमाणा परिभाएमाणा एवं वा विहरन्ति ॥ १०४ ॥

व्याख्या—तएणमित्यादित एवं वा विहरंति त्ति पर्यन्तम्, तत्र मातापितरौ स्थितिपतितं कुलक्रमान्तर्भूतं पुत्रजन्मोचितमनुष्ठानं कारयतःस्म, चन्द्रसूर्यदर्शनिकां—चन्द्रसूर्यदर्शनाभिधानमुत्सवविशेषं कुरुतः, तथाहि—जन्माहाद्दिनद्वयेऽतिक्रान्ते गृहस्थगुरुः समीपगृहेऽर्चिताहर्त्प्रतिमाग्रे स्फटिकमयीं रूप्यमयीं वा चन्द्रमूर्त्तिं प्रतिष्ठाप्यार्चित्वा च विधिना स्थापयेत्, ततः स्नातां सुवस्त्राभरणां शिशुमातरं करद्वये धृतपुत्रां चन्द्रोदये प्रत्यक्षचन्द्रसन्मुखं नीत्वा "ओँ अर्हं चन्द्रोऽसि निशाकरोऽसि नक्षत्रपतिरसि सुधाकरोऽसि औषधीगर्भोऽसि अस्य कुलस्य ऋद्धिं वृद्धिं कुरु कुरु स्वाहा" इत्यादि चन्द्रमन्त्रमुच्चरन् मातृपुत्रयोश्चन्द्रं दर्शयेत्, सपुत्रा माता च गुरुं प्रणमति, गुरुश्चाशीर्वादं दत्ते, यथा—"सर्वौषधीमिश्रमरीचिराजिः, सर्वापदां संहरणप्रवीणः। करोतु वृद्धिं सकलेऽपि वंशे, युष्माकमिन्दुः सततं

प्रसन्नः ॥ १ ॥” ततः स्थापितेन्दुमूर्त्तिं विसर्जयेत्, कदाचिद्यदि तस्यां निशि चतुर्दशी अमावास्या वा स्यात् साभ्रे वा व्योम्नि चन्द्रो न दृश्यते तदाऽपि तस्यामेव सन्ध्यायां चन्द्रदर्शनं कार्यम्, अपरायामपि रात्रौ चन्द्रोदये भवतु तत्, अथ तस्मिन्नेव दिने प्रातः स्वर्णमयीं ताम्रमयीं वा सूर्यमूर्त्तिं पूर्वविधिना संस्थाप्य ‘ओँ अर्हं सूर्योऽसि दिनकरोऽसि तमोऽपहोऽसि सहस्रकिरणोऽसि जगच्चक्षुरसि प्रसीद” आशीर्वादश्चायम्–“सर्वसुरासुरवन्द्यः, कारयिताऽपूर्वसर्वकार्याणाम्। भूयात्रिजगच्चक्षुर्मङ्गलदस्ते सपुत्रायाः ॥ १ ॥” मातृपुत्रौ सूतकभयात्तत्र नानेयौ, ततः स्थापितसूर्यमूर्त्तिविसर्जनमित्यादिस्तत्कुलायातचन्द्रसूर्यदर्शनविधिः। सम्प्रति च तत्स्थाने शिशोर्दर्पणदर्शनं कार्यते। धर्म्मेण–कुलधर्मेण लोकधर्मेण वा षष्ठ्यां रात्रौ जागरणं–धर्म्मजागरिका ताम्। निवर्त्तितेऽतिक्रान्तेऽशुचीनां–अशौचवतां जन्मकर्म्मणा–नालच्छेदनादीनां यत्करणं तस्मिन्, द्वादशाख्यदिवसे उपस्कारयतः–रसवतीं निष्पादयतः, मित्राणि–सुहृदः, ज्ञातयः–सजातीयाः मातापितृभ्रात्रादयः, निजकाः–स्वकीयाः पुत्रादयः, स्वजनाः–पितृव्यादयः, सम्बन्धिनः–पुत्रपुत्रीप्रभृतीनां श्वसुरादयः, परिजनो–दासीदासादिः, ज्ञातक्षत्रियाः–ऋषभस्वामिसजातीयाः, आ–ईषत् स्वादयन्तौ–बहुत्यजन्ताविक्ष्वादेरिव, विशेषेण–आधिक्येन स्वादयन्तौ–अल्पं त्यजन्तौ खर्जूरादेरिव, परि–सामस्त्येन भुञ्जानौ–अल्पमप्यत्यजन्तौ भोज्यम्, परिभाजयन्तौ–अन्येभ्यो यच्छन्तौ स्वाद्यविशेषं मातापितराविति प्रक्रमः ॥ १०४ ॥

जिमिय भुत्तुत्तरागया वि य णं समाणा आयंता चोक्खा परमसुइभूआ तं मित्तनाइनियगसयणसंबंधिपरिजणं नायए खत्तिए य विउलेणं पुप्फवत्थगंधमल्लालंकारेणं सक्कारेन्ति सम्माणेन्ति सक्कारित्ता सम्माणित्ता तस्सेव मित्तनाइनियगसयणसंबन्धिपरिजणस्स नायाण य खत्तियाण य पुरओ एवं वयासी ॥ १०५ ॥

व्याख्या—जिमिअभुत्तुत्तरेत्यादित एवं वयासीति पर्यन्तम्, तत्र जिमितौ भुक्तोत्तरं–भोजनोत्तरकालं आगतावुपवेशनस्थाने इति गम्यम् सन्तौ आचान्तौ–शुद्धोदकेन कृतशौचौ, चोक्षौ–लेपसिक्थाद्यपनयनेन, अत एव परमशुचिभूतौ। पुष्पवस्त्रगन्धमाल्यालङ्कारसत्कारसन्मानव्याख्या प्राग्वत् ॥ १०५ ॥

पुव्विं पि णं देवाणुप्पिया अम्हं एयंसि दारगंसि गब्भं वक्कंतंसि समाणंसि इमे एयारूवे अब्भत्थिए जाव समुप्पज्जित्था, जप्पभिइं च णं अम्हं एस दारए कुच्छिंसि गब्भत्ताए वक्कंते तप्पभिइं च णं अम्हे हिरण्णेणं वड्ढामो सुवण्णेणं धणेणं धन्नेणं रज्जेणं जाव सावइज्जेणं पीइसक्कारेणं अईव अईव अभिवड्ढामो सामन्तरायाणो वसमागया य ॥ १०६ ॥

व्याख्या—पुव्विं पि णमित्यादितो वसमागया य त्ति पर्यन्तं सुगमम् ॥ १०६ ॥

तं जया णं अम्हं एस दारए जाए भविस्सइ तया णं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणनिप्फन्नं नामधिज्जं करिस्सामो वद्धमाणु त्ति ता अज्ज अम्हं मणोरहसंपत्ती जाया, तं होउ णं अम्हं कुमारे वद्धमाणे नामेणं ॥ १०७ ॥

व्याख्या—तं जया णमित्यादितो नामेणं ति पर्यन्तं सुगम् ॥ १०७ ॥

समणे भगवं महावीरे कासवगुत्ते णं तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा— अम्मापिउसंतिए वद्धमाणे १ सहसमुइयाए समणे २ अयले भयभेरवाणं परीसहोवसग्गाणं खंतिखमे पडिमाणं पालए धीमं अरतिरतिसहे दविए वीरियसंपन्ने देवेहिं से नामं कयं समणे भगवं महावीरे ॥ १०८ ॥

व्याख्या—समणे भगवमित्यादितो महावीरे त्ति पर्यन्तम्, तत्र समुदिता रागद्वेषाभावः, सह त्ति सहभाविनी समुदिता सहसमुदिता यच्चूर्णिः—'समुई-रागद्दोसरहिअया' तया श्रमण इति आख्यतीति श्रमणः—तपोनिधिः, 'श्रमू च खेदतपसोः' इति वचनात्, भयं—अकस्मात् भैरवं—सिंहादिभयं तयोर्विषयेऽचलो—निष्प्रकम्पस्तदगोचरत्वात्, परीषहोपसर्गाणां—क्षुत्पिपासादिदिव्यादिभेदात् द्वाविंशति २२ षोडश १६ विधानां, क्षान्त्या—क्षमया क्षमते न त्वस-

मर्थतया यः स क्षान्तिक्षमः, प्रतिमानां—भद्रादीनां एकरात्रिक्यादीनां वा तत्तदभिग्रहविशेषाणां वा पालकः पारगो वा, धीमान्—ज्ञानचतुष्टयवान्, अरतिरत्योः सहः—समर्थस्तन्निग्रहात्, द्रव्यं—तत्तद्गुणभाजनं द्रव्यं भव्यमिति व्याकरणोक्ते रागद्वेषरहित इति वृद्धाः, वीर्यसम्पन्नः—स्वस्य सिद्धिगमने निश्चितेऽपि तपश्चरणादौ प्रवर्तनात्, अतो महावीर इति नाम देवेहिं से नामं कयं ति देवैः कृतं तच्चैवम्—

अह वड्ढइ सो भयवं, दिअलोअचुओ अणोवमसिरीओ । दासीदासपरिवुडो, परिकिन्नो पीढमद्देहिं ॥ १ ॥ असिअसिरओ सुनयणो, बिंबुट्ठो धवलदन्तपंतीओ । वरपउमगब्भगोरो, फुल्लुप्पलगंधनीसासो ॥ २ ॥ जाईसरो अ भयवं, अप्परिवडिएहिं तिहिं नाणेहिं । कंतीहि अ बुद्धीहि य, अब्भहिओ तेहिं मणुएहिं ॥ ३ ॥ अह ऊणअट्ठवासो, भयवं कीलइ कुमारएहिं समं । आमलिआखिल्लेणं, लोअपसिद्धेण पुरबाहिं ॥ ४ ॥ तत्थ य खिड्डे रुक्खे, आरुहिअव्वं तु खेलयनरेहिं । इत्थंतरे अ सक्को, सोहम्मसहाइ उववि‍ट्ठो ॥ ५ ॥ संतगुणुक्कित्तणयं, करेइ वीरस्स अमरमज्झंमि । धीरत्तगुणविआरो, परगुणगहणंमि तल्लिच्छो ॥ ६ ॥ बालो अबालभावो, अबालपरक्कमो महावीरो । न हु सक्को भेसेउं, देवेहिं सइंदएहिं पि ॥ ७ ॥ तं वयणं सोऊणं, मिच्छद्दिट्ठी अ अह सुरो एगो । चिंतइ माणुसमित्तं, तत्थ वि रिखुभावमावन्नं ॥ ८ ॥ देवेहि वि नो तीरइ, भेसेउं सद्दहामि नो एवं । ता गंतुं भेसेमी, इअ चिंतिय आगओ तत्थ ॥ ९ ॥ कीलइ जत्थ जिणिंदो, कीलणरुक्खं च वेढइ रमंता । कज्जलवन्नं काउं, फणिरूवं दीहरं भीमं ॥ १० ॥ तं दट्ठूण पलाणा, भयभीया कीलमाणया कुमरा । सव्वे वि ठिओ वीरो, फणि-

कवस्तूनि ॥४॥ तथाहि-पूगीफलश्रृङ्गाटक–खर्जूरसितोपलास्तथा खण्डा। चारुकुलिचारुबीजा–द्राक्षादिसुखाशिका-वृन्दम् ॥ ५ ॥ सौवर्णरत्नराजत–मिश्रितलिखनोपकारकारीणि । कमनीयमपीभाजन–लेखनिकापट्टिकादीनि ॥ ६ ॥ वाग्देवीप्रतिमार्चा–कृतये मुक्ताफलादिभिः खचितं । सौवर्णालङ्कारं, कर्पूरप्रभृतिगन्धभरम् ॥ ७ ॥ सज्जीकुरुतस्तदनु, स्नानं किल कारयन्ति कुलवृद्धाः। तीर्थोदकैः पवित्रैः, प्रचुरतरैर्भगवतः पश्चात् ॥ ८ ॥ दिव्याभरणविलेपन-दुकूलमालाद्यलङ्कृतं वीरम् । सौवर्णश्रृङ्खलाञ्चित-करिणि समारोपयन्ति ततः ॥ ९ ॥ तदा–शिरसि धरन्ति पवित्र–च्छत्राण्यर्कप्रतापहन्तॄणि । सितकरकरनिकरप्रभ-चमराणि च वीजयन्ति तथा ॥ १० ॥ ददति महादानानि, प्रवराणि च वादयन्ति वाद्यानि । गायन्ति गायना अपि, नृत्यन्ति विचित्रपात्राणि ॥ ११ ॥ इत्यादि महः-पूर्वं, प्रभुरागात्पण्डिताश्रयद्वारे । पण्डितपरिच्छदोऽपि च, पीठप्रभृतीनि सज्जयति ॥ १२ ॥ सकलक्षितितलविमला–खण्डलसमभूपतेर्मया पुत्रः । सविशेषवेषविधिनै–व पाठनीयो विचिन्त्यैवम् ॥ १३ ॥ मणिबन्धबाहुवक्षः-कर्णललाटेषु कर्णयोर्मूले । निर्मितचन्दनतिलकः, कुसुमिततिलकोपमः समभूत् ॥ १४ ॥ पर्वोत्सववासर–योग्यं यज्ञोपवीतपर्यन्तम् । परिहितवान् सविशेषं, विप्रो विप्रोचितं वेषम् ॥ १५ ॥ अत्रान्तरे–वातान्दोलितकेतुवज्जलनिधौ सङ्क्रान्तशीतांशुवत्, प्रोद्दामद्विपकर्णवन्मृगदृशः स्वाभाविकस्वान्तवत् । मूषोत्तापितहेमवद्ध्रुवमपि प्रौढप्रभावात् प्रभो–राकम्पेन चलाचलं समभवद्देवेन्द्रसिंहासनम् ॥ १६ ॥ अथ देवेन्द्रोऽवधिना, प्रभुसम्बन्धं विलोक्य विस्मयतः। सकलत्रिदशसमक्षं, प्रोवाचामृतसदृशवाचा ॥ १७ ॥ साम्रे वन्दनमालिका स मधुरीकारः सुधायाः स च, ब्राह्म्याः

कल्याणे कनकच्छटाप्रकटनं पावित्र्यसम्पत्तये, शास्त्राध्यापन-
गाठविधिः स शुभ्रिमगुणारोपः सुधादीधितौ । लङ्कानगर्यां लहरीयकं तत् । तत्प्रा-
महतोऽपि यदिदं राहेखशालाकृतौ ॥ १८ ॥ मातुः पुरो मातुलवर्णनं तत्, निर्द्रव्यपरमेश्वराः । अनल-
भृतं लावणमम्बुराशेः, प्रभोः पुरो यद्वचसां विलासः ॥ १९ ॥ यतः—अनध्ययनविद्वांसो, चिन्तयामास । गाम्भीर्य-
ङ्कारसुभगाः, पान्तु युष्मान् जिनेश्वराः ॥ २० ॥ अथ विप्रीभूयेन्द्रः, समागतस्तत्र जिनेश्वरः । अनन्तपर्ययो-
महो बाले, यदयं ज्ञातोऽपि न ब्रूते ॥ २१ ॥ यतः—भूतं भावि भविष्यच्च, वस्तु सर्वं निःस्वनो मेघः । नीचो
पेत-गावाल्यादपि वेत्त्यसौ ॥ २२ ॥ यदि वा-गर्जति शरदि न वर्षति, वर्षति वर्षासु महान् । नहि स्वर्णे
वदति न कुरुते, न वदति साधुः करोत्येव ॥ २३ ॥ असारस्य पदार्थस्य, प्रायेणाडम्बरो हरिः । पण्डितसंशय-
ध्वनिस्तादृग्, यादृक् कांस्ये प्रजायते ॥ २४ ॥ अथ निपोचितगीठे, वीरं संस्थाप्य पृच्छति स्म निवेसित्ता । सद्दस्स
विषयी-भूतानपि शब्दसन्दोहान् ॥ २५ ॥ तथा चागमः—सक्को य तस्समक्खं, भगवंतं आसणे गणितग्रन्थप्रमाणस्मृती-स्तान्यष्टा-
लक्खणं पुच्छे, वागरणं अव्ययवा इंदं ॥ २६ ॥ तदा-वेदांस्तांश्चतुरोऽपि वेत्ति यस्तस्य छिजातेः पुरो, बालोऽसौ
दशलक्षणानि निखिलांस्तर्कान् ससाहित्यकान्। छन्दोऽलङ्कृतिनाटकान्यपि च पण्डितमनःस्थसन्दे-
किमु वक्ष्यतीति सकलो लोकः स्थितः प्रोन्मुखः ॥ २७ ॥ अथ वर्द्धमानकुमरो, भनक्ति यान् संशयान्
हान्। सर्वानपि तदनन्तरमवदत् स पुरः सुराधिपतेः ॥ २८ ॥ आबालकालादपि मामकीनान्, ॥ २९ ॥ तदो-
कोऽपि निरासयन्न । विभेद तांस्तान्निखिलान् स एष, बालोऽपि भोः पश्यत चित्रमेतत् !

वाच पुनरपि शचीपतिः—मनुष्यमात्रं शिशुरेष विप्र!, नाशङ्कनीयो भवता स्वचित्ते । विश्वत्रयीनायक एष वीर-जिनेश्वरो वाङ्मयपारदृश्वा ॥ ३० ॥ तदनु जैनेन्द्रं व्याकरणं जज्ञे, ततः—शास्त्राण्येतावन्त्यपि, लघुना वीरेण कथमधीतानि । इति जनमानससंशय-विच्छित्त्यै हरिरवोचदिदम् ॥ ३१ ॥ यद्वत्सहस्रकरशुभ्रकरप्रदीपा, ज्योतिश्चयैः प्रसृमरैः सहिताः सदैव । आगर्भतः सततसर्वगुणस्तथैव, ज्ञानत्रयेण सहितो जिनवर्द्धमानः ॥ ३२ ॥ इत्याद्युक्त्वा स्वस्य, स्थानं गतवान् हरिस्तथैव विभुः । सकलज्ञातक्षत्रिय-परिकलितो निजकसौधमगात् ॥ ३३ ॥ इति श्रीवीरकुमार-लेखशालाकरणम् ॥ १०८ ॥

समणस्स भगवओ महावीरस्स पिया कासवगुत्ते णं तस्स णं तओ नामधिज्जा एवमाहिज्जंति, तं जहा—सिद्धत्थे इ वा सिज्जंसे इ वा जसंसे इ वा । समणस्स भगवओ महावीरस्स माया वासिट्ठसगुत्ते णं तीसे तओ नामधिज्जा एवमाहिज्जन्ति, तं जहा—तिसला इ वा विदेहदिन्ना इ वा पीइकारिणी इ वा । समणस्स भगवओ महावीरस्स पित्तिज्जे सुपासे, जिट्ठे भाया नंदिवद्धणे, भगिणी सुदंसणा, भारिया जसोया कोडिन्नागुत्ते णं । समणस्स भगवओ महावीरस्स धूआ कासवगुत्ते णं तीसे दो नामधिज्जा एवमाहिज्जंति तं जहा—अणोज्जा इ वा

पियदंसणा इ वा । समणस्स भगवओ महावीरस्स नत्तुई कासव गुत्ते णं तीसे णं दो नामधिज्जा एवमाहिज्जंति, तं जहा—सेसवई इ वा जसवई इ वा ॥ १०९ ॥

व्याख्या—समणस्स भगवओ इत्यादितो जसवई इ वेत्यन्तम्, तत्र एवं बालभावातिक्रमानुक्रमेणावाप्तयौवनोऽयं भोगसमर्थ इति विज्ञातभवगत्स्वरूपाभ्यां मातापितृभ्यां प्रशस्ततिथिनक्षत्रमुहूर्त्तेपु नरवीरनृपतिसुताया यशोदायाः पाणिग्रहणं कारितम्, तया सह च पञ्चविधान् मानुष्यकान् भोगान् भुञ्जमानस्य भगवतः पुत्री समभूत्, सा च प्रवरनरपतिसुतस्य स्वभागिनेयस्य जमालेः परिणायिता, तस्या अपि च शेषवती नाम्नी पुत्री, सा च नतुई त्ति भगवतो दौहित्रीत्यर्थः ॥ १०९ ॥

समणे भगवं महावीरे दक्खे दक्खपइन्ने पडिरूवे आलीणे भद्दए विणीए नाए नायपुत्ते नायकुलचन्दे विदेहे विदेहदिन्ने विदेहजच्चे विदेहसूमाले तीसं वासाइं विदेहंसि कट्टु अम्मापिऊहिं देवत्तगएहिं गुरुमहत्तरएहिं अब्भणुण्णाए सम्मत्तपइन्ने पुणरवि लोयंतिएहिं जीयकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं अणवरयं अभिनन्दमाणा य अभिथुव्वमाणा य एवं वयासी ॥ ११० ॥

व्याख्या—समणे भगवमित्यादित एवं वयासीति पर्यन्तम्, तत्र दक्षः कलासु, दक्षा-प्रतिज्ञातसिद्धिपारगामितया पट्वी प्रतिज्ञा यस्य, प्रतिरूपः—तत्तद्गुणसङ्क्रमणदर्प्पणत्वात् विशिष्टरूपो वा, आलीनः—सर्वगुणैराश्लिष्टः गुप्तेन्द्रियो वा, भद्रकः—सरलः भद्रो-वृषभस्तद्वद्गच्छतीति भद्रगो वा भद्रदो वा—सर्वकल्याणदायित्वात्, विनीतो—विनयवान् सुशिक्षितो वा जितेन्द्रियो वा, यतः—"विनयो हीन्द्रियजय—स्तद्युक्तः शास्त्रमर्हति। विनीतस्य हि शास्त्रार्थाः, प्रसीदन्ति ततः श्रियः ॥ १ ॥" एतानि विशेपणानि भोगावस्थां वर्षद्वयं भावसंयतदशां च प्रतीत्य यथासम्भवं योज्यानि, ज्ञातः—प्रख्यातः ज्ञातो वा ज्ञातवंशजत्वात्, ज्ञातः—सिद्धार्थस्तस्य पुत्रो ज्ञातपुत्रः, न च पुत्रमात्रेण काचित्सिद्धिः स्यादित्याह—ज्ञातकुलचन्द्रः, विदेहे इति विशिष्टदेहः वज्रर्षभनाराचसंहननसमचतुरस्रसंस्थानोपेतत्वात्, यद्वा 'दिहींक् उपलेपे' विगतो देहो—लेपोऽस्मात् निर्लेपो भोगेष्वपि वैराग्यवत्वात्, विदेहदिन्ना—त्रिशला तस्या अपत्यं वैदेहदिन्नः, तस्या एवौरसपुत्रत्वाभिधानायाह—विदेहजच्चे त्ति भीमो-भीमसेन इति न्यायात् विदेहा-त्रिशला तस्यां जाताऽर्चा—शरीरं यस्य स विदेहजार्चः, यद्वा विदेहो-ऽनङ्गः स यात्यः पीडयितव्यो यस्य स विदेहयात्यः, विशेपेण दिह्यते—लिप्यते पापैरात्माऽत्रेति विदेहो—गृहवासस्तत्रैव सुकुमारो व्रतित्वे तु वज्रकर्कशत्वात्, त्रिंशद्वर्षाणि विदेहे—गृहवासे कृत्वा—स्थित्वा, त्रिंशद्वर्षाणि पुनरेवम्—अष्टाविंशतिवर्षातिक्रमे मातापित्रोस्तुर्यं स्वर्गं माहेन्द्रमाचाराङ्गाभिप्रायेण तु श्रीपार्श्वनाथोपासकयोरनशनेनाच्युतं गतयोः प्रव्रज्यार्थं श्रीवीरो नन्दिवर्द्धनमनुज्ञापितवान्, यदार्य! पूर्णो ममाभिग्रहः ततः प्रव्रजामीति। "तो भणइ जिट्ठभाया, मम जणणीजणयविरहदुहिअस्स । तुह विरहग्गी सुंदर!,

सयंमि खारोवमं होइ ॥ १ ॥" विरक्तात्मा स्वाम्याह–"पिअमाइभाइभइणी–भज्जापुत्तत्तणेण सव्वे वि । जीवा
जाया बहुसो, जीवस्स उ एगमेगस्स ॥ २ ॥ ता कंमि कंमि कीरइ, पडिबंधो कम्मि कम्मि वा नेव । इअ नाऊण
महायस, मा किज्जउ सोगसंतावो ॥ ३ ॥" नृपः प्राह–"अहमवि जाणामि इमं, किंतु मम बंधणा न तुट्टंति ।
जीविअभूएण तए, अज्जवि मुक्कस्स सयराहं ॥ ४ ॥ ता मह उवरोहेणं, वासाइं दुन्नि चिट्ठसु गिहम्मि । उत्तम-
पुरिसा दुहिअं, दट्ठुं करुणायरा हुंति ॥ ५ ॥" वीरः–"एवं होउ नरेसर! किं तु समट्ठा न कोइ आरंभो । कायव्वो
हं फासुअ-भोअणपाणेण चिट्ठिस्सं ॥ ६ ॥" एवं च्चिअ पडिवन्नो, चिट्ठइ सुहझाणभावणो वीरो । विसयसुहनिप्पिवासो
दयावरो सव्वजीवेसु ॥ ७ ॥ ततः समधिकं वर्षद्वयं वस्त्रालङ्कारभूषितोऽपि प्रासुकैषणीयाहारः शीतोदकमप्यपिबन्
भगवान् तस्थिवान्, न च प्रासुकेनापि जलेन सर्वस्नानं कृतवान्, केवलं लोकस्थित्या हस्तपादमुखप्रक्षालनं प्रासुके-
नैव जलेन चकार । निष्क्रमणमहे तु सचित्तोदकेनापि स्नातवान्, ब्रह्मचर्यं तु ततःप्रभृति यावज्जीवमेव पालितवांश्च ।
इह यदा भगवान् जातस्तदानीमेव चतुर्दशस्वप्नसूचितो निश्चयेन भावी चक्रवर्तीति लोकख्यातिमाकर्ण्य स्वस्वमाता-
पितृभिः श्रेणिक-चण्डप्रद्योतादयः कुमारा भगवत्पर्युपासनाय प्रेषिताः, भगवति च घोरानुष्ठानपरे नैष चक्रवर्त्तीति
स्वस्वगृहं प्रतिजग्मिवांसः । एवं वर्षद्वयान्ते गुरुणा ज्येष्ठभ्रात्रा नन्दिवर्द्धनेन महत्तरकैश्च राज्यप्रधानैरभ्यनुज्ञातः–
प्रव्रज्यार्थं दतानुमतिः श्रीवीरः समासप्रतिज्ञः 'नाहं समणो होहं अम्मापिअरम्मि जीवंते' इति गर्भस्थगृहीताभि-
ग्रहस्याष्टाविंशत्या वर्षैर्नन्दिवर्द्धनोपरोधाभिग्रहस्य च वर्षद्वयेन पारगमनात् । पुणरवि लोअंतिएहिं त्ति पुनरपीति–विशे-

पद्योतने एकं तावत्स्वयमेव रामासप्रतिज्ञो विशेपतश्च लोकान्तिकदेवैर्बोधित इति गम्यम्, तृतीयाया अन्यथानुपपत्तेः। लोकान्ते भवा लौकान्तिका ब्रह्मलोकवासिन एकान्तसम्यग्दृष्टयः सारस्वताद्या निकायभेदान्नवधा, तद्यथा—"सारस्सय १ माइच्चा २, वह्नी ३ वरुणा य ४ गद्दतोया य ५। तुसिआ ६ अव्वाबाहा ७, अग्गिच्चा ८ चेव रिट्ठा य ९ ॥१॥" एए देवनिकाया, भयवं बोहिंसु जिणवरिंदं तु। सव्वजगज्जीवहिअं, भयवं तित्थं पवत्तेहि ॥ २ ॥" यद्यपि स्वयंबुद्धत्वात्तदुपदेशनिरपेक्षो भगवान्, तथापि ते देवा जीतकल्पिताः जीतं-अवश्यमाचरणीयं कल्पितं-कृतं यैस्ते जीतकल्पिताः, जीतेन वा-ऽवश्यम्भावेन कल्प-इति कर्त्तव्यता जीतकल्पः स एषामस्तीति जीतकल्पिकास्तैर्विभक्तिव्यत्यये लोकान्तिका देवाः ताहिं इट्ठाहिं जाव वग्गूहिं ति प्राग्वत् व्याख्या ताभिर्वाग्भिः अनवरतं भगवन्तं अभिनन्दयन्तः—समृद्धिमन्तमाचक्षाणा गम्भीराभिर्महाध्वनिभिः अपुनरुक्ताभिरिति व्यक्तम् ॥ ११० ॥

जय जय नन्दा! जय जय भद्दा! भद्दं ते जय जय खत्तियवरवसहा! बुज्झाहि भगवं! लोगनाहा! सयलजगज्जीवहियं पवत्तेहि धम्मतित्थं हिअसुहनिस्सेयसकरं सव्वलोए सव्वजीवाणं भविस्सइ त्तिकट्टु जय जय सद्दं पउंजंति ॥ १११ ॥

व्याख्या—जय जय नंदेत्यादितः सद्दं पउंजंति त्ति पर्यन्तम्, तत्र जयं लभस्व, सम्भ्रमे द्विर्वचनं, नन्दति—समृद्धो भवतीति नन्दस्तदामन्त्रणं, दीर्घत्वं तु प्राकृतत्वात्, अथवा जय त्वं जगन्नन्द, एवं जय जय भद्दं ति नवरं भद्रकः—

व्याख्या प्राग्वत्, चिच्चा त्यक्त्वा, तथा विच्छर्द्य-विशेषेण त्यक्त्वा दीक्षामहिमकरणतो विच्छर्द्दवद्वा कृत्वा विच्छर्दो-विस्तारः, तथा तदेव गुप्तं सत् विगोप्य-प्रकाशीकृत्य दानातिशयात्, अथवा 'गुपिः कुत्सने' कुत्सनीयमेतदस्थिरत्वादित्युक्त्वा, दीयते इति दानं-धनं, दायाय-दानार्थमाऋच्छन्तीति अचि दायारा-याचकास्तेभ्यो दानार्हेभ्यः परिभाज्य-विभागेन दत्त्वा, परिभाव्य वा-आलोच्य एतेभ्य इदमिदं दातव्यमिति, अथवा दातृभिः-स्वनियुक्तनृभिर्दानं परिभाज्य-दापयित्वा, दायो-भागोऽस्त्येषां दायिका-गोत्रिकास्तेभ्यो दानं-धनविभागं परिभाज्य-विभागशो दत्त्वा, एवं च दानविधानं कदा कियत्कालं किंप्रमाणं किंनिर्घोषपुरस्सरमित्याद्यावश्यकनिर्युक्त्यादेरवगन्तव्यम्। तद्यथा "संवच्छरेण होही, अभिनिक्खमणं तु जिणवरिंदाणं। तो अत्थसंपयाणं, पवत्तए पुव्वसूरम्मि ॥१॥ एगा हिरण्णकोडी, अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईयं, दिज्जइ जा पायरासाओ ॥ २ ॥ वरह वरं वरह वरं, इअ घोसिज्जइ महंतसद्देणं। पुरतिअचउक्कच्चर-रत्थारायप्पहाईसु ॥ ३ ॥ जो जं वरेइ तं तस्स, दिज्जइ हेमवत्थमाईअं। विअरंति तत्थ तिअसा, सक्काएसेण सव्वं पि ॥ ४ ॥ तिन्नेव य कोडिसया, अट्ठासीइं च हुंति कोडीओ। असिइं च सयसहस्सा, एअं संवच्छरे दिन्नं ॥ ५ ॥ तत्तद्वार्षिकदानवर्षविरमद्दारिद्र्यदावानलाः, सद्यः सज्जितवाजिराजिवसनालङ्कारदुर्लक्ष्यभाः। सम्प्राप्ताः स्वगृहेऽर्थिनः सशपथं प्रत्याययन्तोऽङ्गनाः, स्वामिन्! पिङ्गजनैर्निरुद्धहसितैः के यूयमित्यूचिरे ॥ ६ ॥ पुट्ठो अ पुणो राया, जिणेण वीरेण विगयमोहेण। तुह संतिओ हु अवही, पुण्णो गिण्हामि दिक्खमहं ॥७॥ धयहट्टसोहवंदण-मालामंचाइमंचरमणिज्जं। कुंडग्गामं नगरं, सुरलोअसमं कयं तइआ ॥ ८ ॥" ततो नन्दिवर्द्धननृपः शक्रादयश्च प्रत्येकमष्टो-

त्तरसहस्रसुवर्णमय १ रूप्यमय २ मणिमय ३ सुवर्णरूप्यमय ४ सुवर्णमणिमय ५ रूप्यमणिमय ६ सुवर्णरूप्यमणिमय ७ मृन्मय ८ कलशादिनिष्क्रमणाभिषेकसामग्रीं कारयन्ति, ततोऽच्युतेन्द्राद्यैश्चतुःषष्ट्या सुरेन्द्रैरभिषेके कृतेऽच्युताद्याभियोगिकसुरकृताः सौवर्णादिकलशाः श्रीनन्दिवर्द्धनकारितसुवर्णादिकलशेषु दिव्यानुभावतः प्रविष्टास्ततस्तेऽधिकतरं शोभितवन्तः, ततः श्रीनन्दिवर्द्धनः स्वामिनं पूर्वाभिमुखं निवेश्य देवानीतक्षीरोदसमुद्रादिनीरैः सर्वतीर्थमृत्तिकाभिः सर्वकषायैश्चाभिषेकं करोति । इन्द्राश्च सर्वेऽपि भृङ्गारादर्शादिहस्ता जयजयशब्दं प्रयुञ्जानाः पुरतस्तिष्ठन्ति । ततः– "सुरचंदणाणुलित्तो, सुरतरुवरकुसुममालचिंचइओ । सिअवत्थपाउअंगो, जस्स य मुल्लं सयसहस्सं ॥१॥ भासुरकिरीडमउडो, हारविरायंतकंठवच्छयलो । केऊरकडयमंडिय–भुअदंडो कुंडलाहरणो ॥२॥" ततो नन्दिवर्द्धनादिष्टाः कौटुम्बिकपुरुषाः अनेकस्तम्भशतसन्निविष्टां मणिकनकविचित्रां पञ्चाशद्धनुरायतां पञ्चविंशतिधनुर्विस्तीर्णां षट्त्रिंशद्धनुरुच्चां च चन्द्रप्रभाभिधां शिबिकामुपस्थापयन्ति, ततो देवा अपि, परं देवानीतशिबिका श्रीनन्दिवर्धनानीतशिबिकायामेव दिव्यानुभावतः प्रविष्टा, ततः सातीव शोभितवती ॥ ११२ ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जेसे हेमंताणं पढमे मासे पढमे पक्खे मग्गसिरबहुले तस्स णं मग्गसिरबहुलस्स दसमी पक्खेणं पाईणगामिणीए छायाए पोरिसीए अभिनिव्विट्टाए पमाणपत्ताए सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं चंदप्पभाए सीयाए

सदेवमणुयासुराए परिसाए समणुगम्ममाणमग्गे संखियचक्कियलंगलियमुहमंगलियवद्धमाणपूसमाणघंटियगणेहिं ताहिं इट्ठाहिं जाव वग्गूहिं अभिनंदमाणा अभिथुव्वमाणा य एवं वयासी ॥ ११३ ॥

व्याख्या—तेणं कालेणमित्यादित एवं वयासीति पर्यन्तम्, तत्र ततः प्रभुर्मार्गशीर्षकृष्णदशम्यां पूर्वदिग्गामिन्यां छायायां पाश्चात्यपौरुष्यां प्रमाणप्राप्तायां अभिनिर्वृत्तायां—जातायां सुव्रताख्ये दिवसे विजयाख्ये मुहूर्त्ते हस्तोत्तरानक्षत्रे कृतषष्ठतपा विशुद्ध्यमानलेश्याकः सर्वाभरणविभूषितः प्रलम्बवनमालः परिहितश्वेतकनकखचितान्तप्रदेशलक्षमूल्यनासानिःश्वासवातवाह्यसुकुमारतरवस्त्रः प्रागुक्तां शिबिकामारुह्य पूर्वाभिमुखं सिंहासने निषीदति। प्रभोर्दक्षिणतः कुलमहत्तरिका हंसलक्षणं पटशाटकमादाय, वामपार्श्वे प्रभोरंब धात्री उपकरणमादाय, पृष्ठे च वरतरुणी स्फारशृङ्गारा धवलातपत्रं, ईशानकोणे चैका शतिपूर्णं भृङ्गारं, आग्नेयकोणे त्वेका कनकदण्डमणिविचित्रतालवृन्तमादाय भद्रासने निषीदति। ततः श्रीनन्दिवर्द्धनादिष्टा हृष्टाः पुरुषा यावच्छिबिकामुत्पाटयन्ति, अत्रान्तरे शक्रः शिबिकाया दाक्षिणात्यामुपरितनीं बाहां, ईशानेन्द्र उत्तराहामुपरितनीं बाहां, चमरेन्द्रो दाक्षिणात्यामधस्तनीं बाहां, बलीन्द्र उत्तराहामधस्तनीं बाहां, शेषा भवनपतिव्यन्तरज्योतिष्कवैमानिकेन्द्राश्च यथाऽर्हं शिबिकामुत्पाटयन्ति, ततः शक्रेशानवर्जास्तामुद्वहन्ति, शक्रेशानौ तु चामराभ्यां वीजयतः। यतः—"सिंहासणे निसन्नं, सक्कीसाणा य दोहिं पासेहिं। वीयंति

भूषणाः काश्चित्। प्रक्षालितैकचरणा, एकाञ्जितलोचना अपि च ॥ १५ ॥ काश्चिदपि भोजनादा-चविहितशौचा विचित्रचित्रेण। बाह्वेकदेशपरिहित-कञ्चुक्यः कौतकादीयुः ॥ १६ ॥" तथा भगवति शिविकारूढे प्रव्रज्यायै गन्तुं प्रवृत्ते तत्प्रथमतया सर्वात्मना रत्नमयान्यष्टौ मङ्गलानि पुरतः क्रमेण प्रस्थितानि, तद्यथा-स्वस्तिकं १ श्रीवत्सः २ नन्द्यावर्त्तः ३ वर्द्धमानकं ४ भद्रासनं ५ कलशो ६ मत्स्ययुग्मं ७ दर्प्पणश्च ८, ततः क्रमेण पूर्णकलशभृङ्गारचामराणि, ततो महती वैजयन्ती, ततो वैडूर्यदण्डस्थं विमलातपत्रं, ततो मणिकनकमयं सपादपीठं सिंहासनं, ततोऽष्टशतमारोहरहितं वरतुरङ्गाणां, ततोऽष्टशतं वरकुञ्जराणां, ततोऽष्टशतं सघण्टानां सपताकानां सनन्दीघोषाणां अनेकप्रहरणावरणसंभृतानां रथानां, ततोऽष्टशतं वरपुरुषाणां, ततो हयानीकं, ततो गजानीकं, ततो रथानीकं, ततः पदात्यनीकं, ततो लघुपताकासहस्रमण्डितो योजनसहस्रोच्छ्रयो महेन्द्रध्वजः, ततः खड्गग्रहाः, कुंतग्रहाः, पीठफलकग्रहाः, ततो हासकारका नर्म्मकारकाश्च, ततः कान्दर्पिकाः जयजयशब्दं प्रयुञ्जानाः, तदनन्तरं बहव उग्राः, भोगाः, राजन्याः, क्षत्रियाः, तलवरा, माण्डविकाः, कोटुम्बिकाः, श्रेष्ठिनः, सार्थवाहाः, देवाः, देव्यश्च, स्वामिनः पुरतः पृष्ठतः पार्श्वतो व्यवस्थिताः सम्प्रस्थिताः। तदनन्तरं सदेवमणुआसुराए त्ति सदेवमनुजासुरया-स्वर्गमर्त्यपातालवासिन्या पर्षदा-जनसमुदायेन समनुगम्यमानं-अनुव्रज्यमानं भगवन्तं अग्रेऽग्रतश्च शाङ्खिकाद्यैः परिवृतं ताभिरिष्टादिविशेषणोपेताभिर्वाग्भिरभिनन्दन्तोऽभिष्टुवन्तश्च प्रक्रमात् कुलमहत्तरादिस्वजना एवमवादिषुः। तत्र शाङ्खिकाः-चन्दनगर्भशङ्खहस्ता मङ्गलकारिणः शङ्खवादका वा, चाक्रिकाः-चक्रप्रहरणाः कुम्भकारतैलिकादयो वा, लाङ्गलिका-गलाव-

लम्बितसुवर्णादिमयलाङ्गलाकारधारिणो भट्टविशेषाः कर्षका वा, मुखमाङ्गलिकाः—मुखे मङ्गलं येषां ते चाटुकारिण इत्यर्थः, वर्द्धमानाः—स्कन्धारोपितपुरुषाः, पूसमाण त्ति पुष्यमाणा—मागधा मान्या वा, घण्टया चरन्तीति घाण्टिका राउलिआ इति रूढास्तेषां गणैः खंडिअगणेहि त्ति क्वचित् तत्र खण्डिकगणाः—छात्रसमुदायाः ॥ ११३ ॥

जय जय नंदा! जय जय भद्दा! भद्दं ते अभग्गेहिं नाणदंसणचरित्तेहिं अजियाइं जिणाहि इंदियाइं, जियं च पालेहि समणधम्मं, जियविग्घो वि य वसाहि तं देव! सिद्धिमज्झे, निहणाहि रागदोसमल्ले तवेणं धिइधणियबद्धकच्छे, मद्दाहि अट्ठकम्मसत्तू झाणेणं उत्तमेणं सुक्केणं, अप्पमत्तो हराहि आराहणपडागं च वीर! तेलुक्करंगमज्झे, पावय वितिमिरमणुत्तरं केवलवरनाणं, गच्छ य मुक्खं परं पयं जिणवरोवइट्ठेण मग्गेणं अकुडिलेणं हंता परीसहचमुं, जय जय खत्तियवरवसहा! बहूइं दिवसाइं बहूइं पक्खाइं बहूइं मासाइं बहूइं उऊइं बहूइं अयणाइं बहूइं संवच्छराइं अभीए परीसहोवसग्गाणं, खंतिखमे भयभेरवाणं, धम्मे ते अविग्घं भवउ त्तिकट्टु जयजयसद्दं पउंजंति ॥ ११४ ॥

व्याख्या—जय जय नंदेत्यादितः सद्दं पउंजंति त्ति पर्यन्तम्, तत्र जय जयेत्यादि प्राग्वत्, अभग्नै-र्निरतिचारैर्ज्ञानदर्शनचारित्रैरुपलक्षितस्त्वं अजितानि अजेयानि वा जिणाहि त्ति जय-वशीकुरु इन्द्रियाणि—श्रोत्रादीनि जितं च—

सात्म्यापन्नं पालय श्रमणधर्म्मं–क्षान्त्यादिदशलक्षणं, जितविघ्नोऽपि च त्वं हे देव ! वस-निवस सिद्धिमध्ये अपि चेति समुच्चये, अत्र सिद्धिशब्देन श्रमणधर्म्मस्य वशीकारस्तस्य मध्यं–लक्षणया प्रकर्षः, तत्र त्वं निरन्तरायं तिष्ठेत्यर्थः, अत एव रागद्वेषमल्लौ निजहि-निगृहाण तपसा बाह्याभ्यन्तरेण साधकतमेन धृतौ-सन्तोषे धैर्ये वा धणिअं-अत्यर्थं बद्धकक्षः सन्, मर्द्दय अष्टकर्म्मशत्रून्, केन कृत्वा ? ध्यानेन तत्रापि आर्त्तरौद्रनिषेधायाह–उत्तमेणं ति उत्तमसा-तमोऽतीतेन शुक्लेन-शुक्लाख्येन, अप्रमत्तः–प्रमादरहितः सन् हराहि त्ति गृहाण आराधनापताकां वीरेति भगवदामन्त्रणं त्रैलोक्यमेव रङ्गो–मल्लाक्षवाटकस्तन्मध्ये, प्राप्नुहि च वितिमिरमनुत्तरं केवलवरज्ञानं, गच्छ च मोक्षं परं पदं जिनवरोपदिष्टेन–ऋषभादिजिनोक्त(क्तेन)मार्गेण–रत्नत्रयलक्षणेन अकुटिलेन–कषायविषयादिकौटिल्यपरिहारात् अक्षेपेण मोक्षप्रापकत्वाच्च सरलेन हत्वा परीषहचमूं । जय क्षत्रियवरवृषभ ! जात्यक्षत्रियो हि परचमूं हन्ति । ऋतवो–द्विमासा हेमन्ताद्याः, अयनानि–षण्मासानि दक्षिणायनोत्तरायणरूपाणि, अभीतः परीषहोपसर्गेभ्यः, भयभैरवानां–भैरवभयानां क्षान्तिक्षमः–क्षान्त्याक्षमः न त्वसामर्थ्यादिना क्वचित् अभिभविअगामकंटके त्ति तत्र ग्रामकण्टकान्–इन्द्रियग्रामप्रतिकूलान् दुर्वाक्यजल्पनपरादीन् अभिभूय-अपकर्ण्य धर्मे–प्रस्तुतसंयमे ते-तव अविघ्नं–निर्विघ्नता भवतु, इतिकट्टु–इत्युच्चार्य जयजयशब्दं प्रयुञ्जते स्वजना एव ॥ ११४ ॥

तएणं समणे भगवं महावीरे नयणमालासहस्सेहिं पिच्छिज्जमाणे पिच्छिज्जमाणे, वयणमालासहस्सेहिं अभिथुव्वमाणे अभिथुव्वमाणे, हिययमालासहस्सेहिं उन्नंदिज्जमाणे उन्नंदिज्जमाणे,

मणोरहमालासहस्सेहिं विच्छिप्पमाणे विच्छिप्पमाणे, कंतिरूवगुणेहिं पत्थिज्जमाणे पत्थिज्जमाणे, अंगुलिमालासहस्सेहिं दाइज्जमाणे दाइज्जमाणे, दाहिणहत्थेणं बहूणं नरनारिसहस्साणं अंज-लिमालासहस्साइं पडिच्छमाणे पडिच्छमाणे, भवणपंतिसहस्साइं समइच्छमाणे समइच्छमाणे, तंतीतलतालतुडियगीयवाइयरवेणं महुरेण य मणहरेणं जयजयसद्दघोसमीसिएणं मंजु-मंजुणा घोसेण य पडिबुज्झमाणे पडिबुज्झमाणे, सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्ववाह-णेणं सव्वसमुदएणं सव्वायरेणं सव्वविभूईए सव्वविभूसाए सव्वसंभमेणं सव्वसंगमेणं सव्वपगईएहिं सव्वनाडएहिं सव्वतालायरेहिं सव्वावरोहेणं सव्वपुप्फगंधवत्थमल्लालंकारवि-भूसाए सव्वतुडियसद्दसंनिनाएणं, महया इड्ढीए महया जुईए महया बलेणं महया वाहणेणं महया समुदएणं महया वरतुडियजमगसमगप्पवाइएणं, संखपणवपडहभेरिझल्लरिखरमु-हिहुडुक्कदुंदुहिनिग्घोसनाइयरवेणं, कुंडपुरं नगरं मज्झं मज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव नायसंडवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ ॥ ११५ ॥

व्याख्या— तएणमित्यादितस्तेणेव उवागच्छइ त्ति पर्यन्तम् । तत्र नयनमालाः—श्रेणिस्थितजननेत्रपङ्क्तयस्तासां

सहस्रैः, एवमग्रेऽपि, वचनानि वदनानि वा(तैः) अभिष्टूयमानः, हृदयमालासहस्रैः जनसमूहसत्कैः उन्नन्द्यमान-उत्प्राबल्येन समृद्धिमुपनीयमानो जय जीव नन्देत्यादिपर्यालोचनादिति भावः, क्वचित् उन्नइज्जमाणे त्ति तत्रोन्नतीक्रियमाण-उन्नतिं प्राप्यमाणः, विच्छिप्पमाणे त्ति मनोरथमालासहस्रैः—एतस्याज्ञाविधायिनो भवाम इत्यादिभिर्जनविकल्पैर्विशेषेण स्पृश्यमानः, कान्तिरूपगुणैर्हेतुभूतैः प्रार्थ्यमानो—भर्तृतया स्वामितया वा स्त्रीपुरुषजनेनाभिलष्यमाणः, दाइज्जमाणे त्ति दर्श्यमानः पडिच्छमाणे त्ति प्रतीच्छन्-गृह्णन् समइच्छमाणे समतिक्रामन्-उल्लङ्घयन् तन्त्र्यादीनां त्रुटितान्तानां प्रागुक्तार्थानां गीते-गीतमध्ये यद्वादितं-वादनं तेन यो रवः-शब्दस्तेन मधुरेण-मधुवर्षिणा मनोहरेण-मनोऽभिरामेण जयजयशब्दघोषमिश्रितेन-जयजयशब्दोच्चारणमिश्रितेन मञ्जुमञ्जुना—न ज्ञायते कोऽपि किमपि जल्पतीति अतिकोमलेन वा घोषेण च-लोकानां स्वरेण च प्रतिबुध्यमानः—सावधानीभवन्, क्वचित् आपडिपुच्छमाणे त्ति तत्र आप्रतिपृच्छन्—प्रश्नयन् प्रणमतां सुखादिवार्त्तां, सर्व्वर्द्ध्या-समस्तच्छत्रादिराजचिह्नरूपया, सर्वद्युत्या—आभरणादिसम्बन्धिन्या सर्वयुत्या वा-उचितेष्टवस्तुघटनादिरूपया, सर्वबलेन-हस्त्यश्वादिरूपकटकेन, सर्ववाहनेन—करभवेगसरशिबिकादिना वाहनेन, सर्वसमुदयेन—पौरादिमेलापकेन, सर्वादरेण-सर्वौचित्यकरणरूपेण, सर्वविभूत्या-सर्वसम्पदा, सर्वविभूषया-समस्तशोभया, सर्वसम्भ्रमेण-प्रमोदकृतौत्सुक्येन, सर्वसङ्गमेन-सर्वस्वजनमेलापकेन, सर्वप्रकृतिभिः-अष्टादशनैगमादिनगरवास्तव्यप्रकृतिभिः, सर्वनाटकैरित्यादि सुगमम्, सर्वतुर्यशब्दानां मीलने यः सङ्गतो निनादो-महाघोषस्तेन, अल्पेष्वपि ऋद्ध्यादिषु सर्वशब्दप्रवृत्तिर्दृष्टा इत्याह—महया इड्ढीए इत्यादि प्राग्वत्, एवं क्षत्रियपुरमध्येन भवनपङ्क्तिसहस्राणि सम-

सि णं तुमं जाया!, एत्थ सिग्घं चंकमिअव्वं गुरुअं आलंबेअव्वं असिधारं महव्वयं चरिअव्वं जाया!, परिक्कमिअव्वं जाया!, अस्सिं च णं अट्ठे नो पमाइअव्वं। अणवरयपडंतंसुपवायनंदिवद्धणपमुहसयणवग्गसमेआ अंसूणि विणिम्मुअंता वंदइ नमंसइ, वंदित्ता नमंसित्ता एगंते अवक्कमंति। ततो भगवान् एकया मुष्ट्या कूर्चस्य चतसृभिस्तु शिरस इति पञ्चमौष्टिकं लोचं करोति। शक्रश्च हंसलक्षणेन पटशाटकेन केशान् प्रतीच्छ्य क्षीरोदसमुद्रे प्रवाहयति। ततश्च—दिव्वो मणुस्सघोसो, तूरनिनाओ अ सक्कवयणेण। खिप्पामेव निलुक्को, जाहे पडिवज्जइ चरित्तं ॥ १ ॥ काऊण नमुक्कारं, सिद्धाणमभिग्गहं तु सो गिण्हे। सव्वं मेऽकरणिज्जं, पावं ति चरित्तमारूढो ॥ २॥ स्वामी च सामायिकं कुर्वन् 'करेमि सामाइयं सव्वं सावज्जं जोगं पच्चक्खामी' त्याद्युच्चरति, न तु भंते त्ति तथा कल्पत्वात्, एवमागमोक्तविधिना एगं देवदूसं ति इन्द्रेण वामस्कन्धेऽर्पितं दिव्यवस्त्रविशेषमादाय एको—रागद्वेषसहायविरहात् अद्वितीय एकाक्येव न पुनर्यथा-ऋषभश्चतुःसहस्र्या राज्ञां, मल्लिपार्श्वौ त्रिभिस्त्रिभिः शतैः, वासुपूज्यः षट्शत्या, शेषा एकोनविंशतिः सहस्रेण, मुण्डो भूत्वा—द्रव्यतः शिरःकूर्चलोचनेन भावतः क्रोधाद्यपनयनेन अगारात्—गृहान्निष्क्रम्येति शेषः, अनगारतां—साधुतां प्रव्रजितो-गतः विभक्तिपरिणामाद्वा अनगारतया प्रव्रजितः—श्रमणीभूतः। तिहिँ नाणेहिँ समग्गा, तित्थयरा जाव हुंति गिहिवासे। पडिवन्नंमि चरित्ते, चउनाणी जाव छउमत्थे ॥ १ ॥ सक्काईआ देवा, भयवं तं वंदिउं सपरितोसा। कयनंदीसरजत्ता, निअनिअठाणाइँ संपत्ता ॥ २ ॥ वीरो वि बंधुवग्गं, आपुच्छिअ पत्थिओ विहारेण। सो वि अ विसन्नचित्तो, वंदिअ वीरं पडिनिअत्तो ॥ ३ ॥ सो

अरिहंता देविंदस्स वा असुरिंदस्स वा निस्साए केवलणाणं उप्पाडिंसु वा ३ सिद्धिं वा वच्चंति, अरिहंता सएणं उट्ठाणवलवीरिअपुरिसकारपरक्कमेणं केवलनाणं उप्पाडिंसु ३ सिद्धिं वा वच्चंति'। ततः 'मारणान्तोपसर्गस्य, वारणार्थं विडौजसा। सिद्धार्थः स्थापितः स्वामि–मातृष्वस्रेयव्यन्तरः ॥ १ ॥' ततः स्वामी कोल्लाकसन्निवेशे बहुलब्राह्मणगृहे 'सपात्रो धर्म्मो मया प्रज्ञापनीय' इति प्रथमपारणकं गृहस्थपात्रे परमान्नेन कृतवान्। चेलोत्क्षेपो १ गन्धोदकपुष्पवृष्टिः २ दुन्दुभिनादो ३ व्योम्न्यहोदानमिति घोषणा ४ वसुधारावृष्टिश्चे ५ ति पञ्च दिव्यानि प्रादुर्भूतानि। 'अद्धत्तेरसकोडी, उक्कोसा तत्थ होइ वसुहारा। अद्धत्तेरसलक्खा, जहन्निया होइ वसुहारा ॥ १ ॥ विहरन्नथ मोराके, सन्निवेशे प्रभुर्ययौ। प्राज्यदूइज्जंतकाख्य-तापसाश्रमशालिनि ॥ १ ॥ पितुर्मित्रं कुलपति-स्तत्र प्रभुमुपस्थितः। पूर्वाभ्यासात् स्वामिनाऽपि, तस्मिन् वाहुः प्रसारितः ॥ २ ॥ तस्य प्रार्थनया स्वामी, तत्रैकां रात्रिमाविशत्। स्थेयं वर्षास्विहेत्यूचे, प्रस्थितं स पुनः प्रभुम् ॥ ३ ॥ नीरागोऽप्युपरोधेन, प्रतिश्रुत्यान्यतो ययौ। अष्टौ मासान् विहृत्याथ, तत्र वर्षार्थमागमत् ॥ ४ ॥ कुलपत्यर्पिते वर्षा–स्तस्थौ स्वामी तृणौकसि। गावो बहिस्तृणानाप्त्या, वर्षारम्भे क्षुधातुराः ॥ ५ ॥ अधावन् खादितुं वेगात्, तापसानां तृणोटजान्। निष्कृपास्तापसास्तास्ते, ऽताडयन् यष्टिभिर्भृशं ॥ ६ ॥ ताडितास्तैश्चखादुस्ताः, श्रीवीरालङ्कृतोटजम्। स्थितः प्रतिमया स्वामी, नाश्नतीस्ता न्यषेधयत् ॥ ७ ॥ उटजस्वामिना रावा, चक्रे कुलपतेः पुरः। प्रभुं सोऽप्यशिषन्नीडं, रक्षन्ति न वयोऽपि किम् ॥ ८ ॥ अप्रीतिर्मयि सत्येषा, तन्न स्थातुमिहोचितम्। विचिन्त्येति प्रभुः पञ्चा–भिग्रहानग्रहीदिमान् ॥ ९ ॥

नाप्रीतिमद्गृहे वासः १, स्थेयं प्रतिमया सदा २। न गेहिविनयः कार्यः ३, मौनं ४ पाणौ च भोजनम् ५ ॥ १० ॥ शुचिराकाचतुर्मासा, अर्द्धमासादनन्तरं । प्रावृष्यथास्थिकग्रामं, जगाम त्रिजगद्गुरुः ॥ ११ ॥' ११६ ॥

समणे भगवं महावीरे संवच्छरं साहियं मासं जाव चीवरधारी हुत्था । तेण परं अचेले पाणिपडिग्गहिए, समणे भगवं महावीरे साइरेगाइं दुवालसवासाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तं जहा—दिव्वा वा माणुसा वा तिरिक्खजोणिया वा अणुलोमा वा पडिलोमा वा, ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ ११७ ॥

व्याख्या—समणे भगवमित्यादितः अहिआसेइ त्ति पर्यन्तम्, तत्र साधिकमाससंवत्सरादूर्द्ध्वं देवदूष्यार्द्धं पतिते दक्षिणवाचालपुरासन्नसुवर्णवालुकानदीतटे कण्टके विलग्ने च भगवान् सिंहावलोकनेन तदद्राक्षीत् । ममत्वेनेत्येके, स्थण्डिले पतितमस्थण्डिले वेत्यन्ये, सहसात्कारेणेत्यपरे, शिष्याणां वस्त्रपात्रं सुलभं भावि न वेति केचित्, भाविस्वसन्ततेः कषायबाहुल्यात्कण्टकप्रायतेति वृद्धवादः, कण्टकभूतास्तावत्कुपाक्षिकास्ते च वस्त्ररूपस्य प्रवचनस्य सम्पर्कमात्रेण किञ्चित्पीडाविधायिनो भविष्यन्ति परं विप्रेण त्वरितमेव ग्रहणात् वर्षसहस्रद्वयान्ते धर्म्मदत्तराज्यावसरे विप्रीभूयागतः शक्र एव तत्सम्पर्कनिरासेन प्रवचनपीडां निराकरिष्यतीति वयम् । कण्टकलग्नत्वादेवोपेक्ष्य निर्ममतया पुनर्न जग्राह, तदर्द्धं च पितृमित्रस्य विप्रस्य प्रागेवार्पितमासीत् । तच्चैवम्—"पिउणो मित्तो सोमो, आजम्मं चेव

निद्धणो भट्टो । धणलाभत्थी पत्तो, आसं काउं जिणसगासे ॥ १ ॥ सो पुण दाणावसरे, जिणस्स देसंतरं गओ आसी । लाभत्थमेव रडिओ, भज्जाए आगओ संतो ॥ २ ॥ एवं जिणेण दिन्नं, सव्वस्स ढणकए तुमं देसी । तो निल्लक्खण अज्ज वि, गंतूण तमेव मग्गेसु ॥ ३ ॥ भणिअं च तेण भयवं, दीणो हं दुत्थिओ अ भग्गो अ । मग्गंत-भमंतस्स य, न किंचि मे सामि संपडिअं ॥ ४ ॥ किं किं न कयं को को, न पत्थिओ कह २ न नामिअं सीसं । दुब्भरउअरस्स कए, किं न कयं किं न कायव्वं ॥ ५ ॥ दिण्णं च तए दाणं, सव्वस्स जहिच्छिअं चिरं कालं । नासि तया इत्थाहं, ता सामि करेह कारुन्नं ॥६॥ देसु मह किंचि दाणं, सव्वस्स जियस्स तं सि कारुणिओ । इअ विन्नत्तो भयवं, करुणिकरसोऽणुकंपाए ॥ ७ ॥ विअरइ सुरदूसद्धं, अन्नं मह नत्थि किंचि जं भणिअं । सो वि गओ पण-मित्ता, महापसाओ त्ति तं गहिउं ॥ ८ ॥" अत्र निःस्पृहोऽपि भगवाननुपयोग्यपि देवेन्द्रोपनीतदेवदूष्यं यत् शकली-कृत्यार्द्धं ब्राह्मणाय दत्तवान् न्यस्तवांश्चावशिष्टमर्द्धं स्वस्कन्धे तद्भगवत्सन्ततेर्वंशपात्रादिषु मूर्च्छासंसूचकमिति क-श्चित्, कश्चिच्च कालानुभावात् ऋद्धिमानपि नोदारचित्तेनौचित्यकर्त्ता भविष्यतीति, अपरस्तु भगवतः प्रथमं विप्रकुलोत्पन्नत्वेनैवमभिप्रायोऽभूत् कथमन्यथा साम्वत्सरिकदानदाताऽप्यन्यत् किञ्चिन्मम नास्तीति भणितवाऽपि विद्यमानमप्यखण्डं नादास्यदिति । ततः—"तुन्नागस्सुवणीयं, दसिआकज्जंमि तेण सो भणिओ । भमसु जिणम-ग्गओ तं, खंधाउ पडिस्सइ तमद्धं ॥ ९ ॥ न य पिच्छइ सो भयवं, निस्संगो ता तुमं तमाणिज्जा । दो वि अहं तुन्नेउं, अद्धे सयलं करिस्सामि ॥ १० ॥ दीणारसयसहस्सं, लहीहि तं विक्कयंमि तो तुज्झं । मज्झं च अद्धमद्धं,होही

भणिओ इअ गओ सो ॥ ११ ॥ वच्चंतस्स य पडिअं, खंधाउ सुवण्णवालुआपुलिणे। वत्थं कंटयलग्गं, घेत्तूण य सो दिओ चलिओ ॥ १२ ॥" परं स द्विजो लज्जया पुनर्मार्गयितुमशक्नुवन् भगवतः पृष्ठलग्नो वर्षं यावद्भ्राम। पश्चाच्च तेन तदर्द्धे पतिते गृहीते भगवान् तेण परंति ततः परं यावज्जीवमचेलको वभूव। पाणिपडिग्गहिए त्ति पाणिपतद्ग्रहिकः–पाणिपात्रः स्वामी हि सप्रावरणधर्म्मस्थापनार्थं देवदूष्यपरिग्रहं चक्रे, तथा प्रथमपारणकं सपात्रधर्म्मज्ञापनार्थं पात्र एव विहितवान्, ततः पाणिपात्र इति। निच्चं वोसट्ठ त्ति नित्यं–प्रव्रज्याप्रतिपत्त्यनन्तरं यावज्जीवं व्युत्सृष्टकायः-परिकर्म्मणा वर्जनात् त्यक्तदेहः, एवं चाध्वनि विहरति सति भगवति 'मंदाइणीनदीपुलिणे मधुसित्थचिक्खिल्ले भगवतो पादेसु चक्कंकुसाइलक्खणाणि दीसंति। तत्थ पूसो नाम सामुद्दितो सो ताणि पासिऊण चिंतेति 'एस चक्कवट्टी गतो एगागी वच्चामि णं वागरेमि तो मम एत्तो भोगा भविस्संति सेवामि णं कुमारत्तणेण' सामी वि थूणगस्स सन्निवेसस्स वाहिं पडिमाए ठिओ। तत्थ सो सामिं पेच्छिऊण चिंतेति 'अहो मए पलालं अहिज्जति, एएहिं लक्खणेहिं न जुत्तं एतेण समणेण होउं' इओ अ सक्को देवराया ओहिणा पलोएति, कहिं अज्ज सामी। ताहे सामिं पेच्छति तं च पूसं, आगतो सामिं वंदित्ता भणति, भो पूस! तुमं लक्खणं न याणसि, एसो अपरिमितलक्खणो, ताहे वण्णेइ लक्खणं अब्भंतरगं 'गोखीरगोरं रुहिरं पसत्थं' न होति अलिअं, एस धम्मवरचाउरंतचक्कवट्टी देविंदनरिंदपूजितो, भविअजणकुमुदानन्दकारओ भविस्सति। इअ भणिऊण सुरिंदो, पूअइ धणकणगरयणरासीहिं। सामुद्दिअं पहट्ठं, जिणो वि अण्णत्थ विहरेइ ॥ १ ॥ जे केइ उवसग्गा उप्पज्जंति त्ति देवादि-

कृतोपसर्गसहनं यथा—स्वामी प्रथमचतुर्मासके शूलपाणियक्षायतने स्थितः । सो पुण दुट्ठसहावो, वासं कस्स इ न देइ रयणीए । सो पुव्वभवे वसहो, आसी धणदेववणिअस्स ॥ १ ॥ पंचसए सगडाणं, उत्तारेउं नईइ सो तुट्टो । गामस्स वद्धमाण-स्स वाहिमोत्तुं गओ वणिओ ॥ २ ॥ पाणीचारिनिमित्तं, दव्वं गामिल्लयाण दाऊणं । तेहि अ न किंचि दिन्नं, तह्लाइ छुहाइ सो मरिउं ॥ ३ ॥ जाओ अ सूलपाणी, रुट्ठो उवरिं च तस्स गामस्स । मारिं विउव्विऊणं, निवाइओ बहुजणो तेण ॥ ४ ॥ लोगेणं विण्णविओ, तव्वयणेणं च देउलं काउं । तप्पडिमा कारविआ, जत्तं पूअं च कारिंति ॥ ५ ॥ तम्मारिअजणअट्ठी-निअरो दीसइ पए पए एत्थ । तो सो अट्ठिअगामु-त्तिलोअमज्झंमि विक्खाओ ॥ ६ ॥ तस्सेव बोहणत्थं, भयवं पडिमाइ संठिओ रत्तिं । तस्सायवणेसु च्चिअ, दट्ठुं रुट्ठो जिणस्सुवरिं ॥ ७ ॥ उवसग्गिउमाढत्तो, संज्झाए कुणइ भूमिभेअकरं । अट्टट्टहाससद्दं, मणुअतिरिक्खाण नासणयं ॥ ८ ॥ तत्तो अ हत्थिरूवं, पिसायरूवं च नागरूवं च । काउं उवसग्गेइ, खुहइ मणागं पि नो भयवं ॥ ९ ॥ सिरकन्ननासनहअ-त्थिदंतपिट्ठीसु वेअणं कुणइ । इक्किक्का जा जीविअ-हरणे अन्नस्स सुसमत्था ॥ १० ॥ तहा वि सामी नो मणागं पि सुहज्झाणाओ खुहिओ, पच्छा सो पडिबुद्धो सामिणो खामेइ खमह भट्टारग त्ति । ताहे सिद्धत्थो उद्धाइतो भणति—"हं हो! सूलपाणि!! अपत्थिअपत्थिआ! ण याणसि सिद्धत्थरायपुत्तं भगवतं तित्थगरं, जइ एवं सक्को जाणति तो तं निव्विसयं करेति । ताहे सो भीतो दुगुणं खामेति, सिद्धत्थो से धम्मं कहेति । तत्थ उवसंतो महिमं करेति सामिस्स । तत्थ लोगो चिंतेति 'सो तं देवज्जयं मारेत्ता इयाणिं कीलति' तत्थ सामी देसूणे

चत्तारि जामे अतीव परितावितो पभातकाले मुहुत्तमेत्तं निद्दापमादं गतो, तत्थिमे दसमहासुमिणे पासित्ता पडिबुद्धो । तं जहा–तालपिसाओ हतो १, सेअसउणो २, चित्तकोइलो ३ अ दो अ ते पज्जुवासंता दिट्ठा, दामदुगं सुरभिकुसुममयं ४, गोवग्गो अ पज्जुवासंतो ५, पउमसरो विबुहेहिं अलंकितो ६, सागरो अ मे णित्थिण्णो त्ति ७, सूरो अ पइण्णरस्सिमंडलो उग्गमंतो ८, अंतेहिं अ मे माणुसुत्तरो वेढितो त्ति ९, मंदरं च आरूढामि १०, त्ति लोगो पभाए आगतो उप्पलो इंदसम्मो अ ते अच्चणिअं दिव्वगंधचुण्णपुप्फवासं च पासंति भट्टारगं च अक्खयसव्वंगं, ताहे सो लोगो सव्वो सामिस्स उक्किट्ठसीहनायं करेंतो पाएसु पडिओ भणइ 'जहा देवज्जएणं देवो उवसामितो महिमं पकतो' उप्पलो वि सामिं दट्ठुं वंदिअ भणिआइओ सामी तुब्भेहिं अंतिमरत्तीए दस सुमिणा दिट्ठा तेसिमं फलं ति 'जं तालपिसाओ हतो तमचिरेण मोहणिज्जं उम्मूलिहिसि १, जो अ सेअसउणो तं सुक्कज्झाणं ज्झाहिसि २, जो विचित्तो कोइलो तं दुवालसंगं पण्णवेहिसि ३, गोवग्गफलं च ते चउव्विहो समणसमणिसावगसाविगासंघो भविस्सइ ४, पउमसरो चउव्विहदेवसंघो त्ति ५, जं च सागरं तिण्णो तं संसारसागरमुत्तरेहिसि ६, जो अ सूरो तमचिरा केवलनाणं ते उप्पज्जिहि त्ति ७, जं च अंतेहिं माणुसुत्तरो वेढिओ तं ते णिम्मलजसकित्तिपयावो सयलतिहुअणे भविस्सइ ८, जं च मंदरमारूढो सि तं सीहासणत्थो सदेवमणुआसुराए परिसाए धम्मं पण्णवेहिसि त्ति ९, दामदुगं पुण न याणामि, सामी भणइ 'हे उप्पला जण्णं तुमं ण याणसि तेणमहं दुविधं सागाराणागारिअं धम्मं पण्णवेहामि त्ति' ततो उप्पलो वंदित्ता गतो । तत्थ सामी अद्धमासद्धमद्धमासेण खमति

एस पढमो वासरत्तो । ततः स्वामी मोराकसन्निवेशं गतः, तत्र प्रतिमास्थितस्य वीरस्य सत्काराद्यर्थं सिद्धार्थो जनानामतीतादीनि कथयति । स्वामिमहिमानं च दृष्ट्वा प्रद्विष्टेनाऽच्छन्दकेन तृणच्छेदाच्छेदविषये प्रश्ने कृते सिद्धार्थेन न छेत्स्यते इत्युक्ते छेदनोद्यतस्य तस्याङ्गुलीः शक्रश्चिच्छेद, ततो रुष्टः सिद्धार्थो जनान् प्रति चौरोऽयमित्युक्तवान्, यतः कर्मकरस्य वीरघोषस्य दशपलिकं वट्टलकं गृहीत्वा खर्जूरीवृक्षाधःस्थापितं एकं तावदिदं, द्वितीयमिन्द्रशर्म्मण ऊरणकोऽनेन भक्षितस्तदस्थीन्यद्यापि बदर्या अधो दक्षिणोत्कुरुडिकाया तिष्ठन्ति, तृतीयं पुनरवाच्यमलं कथनेन, निर्बन्धे कृते व्रजतास्य भार्या कथयिष्यति नाहं कथयिष्यामीत्युक्ते तैः पृष्टा सोवाच–'भगिनीपतिरयं' लज्जितो विलक्षः स्वामिनं विजने गत्वाह–'स्वामिन्नहमत्रैव जीवामि त्वं तु पूज्यः सर्वत्राऽपि पूज्यसे' ततः स्वामी श्वेताम्व्यां विहरन् जनैर्वार्यमाणोऽपि कनकखलाख्यतापसाश्रमे चण्डकौशिकसर्पप्रबोधायागात् । स हि प्राग्भवे क्षपकः क्षुल्लकेनावश्यके पारणार्थगमनजातमण्डूकीविराधनालोचनार्थं सारितः क्रुधा क्षुल्लकं हन्तुं धावन् स्तम्भ आस्फल्य मृतो ज्योतिष्केपूत्पन्नः, ततश्च्युतस्तत्राश्रमे पञ्चशततापसाधिपतिश्चण्डकौशिको बभूव, तत्रापि राजन्यान् स्वाश्रमफलादिगृह्णानान् वीक्ष्य परशुहस्तो धावन् अवटे पतितः, परशुविद्धस्तत्रैव चण्डकौशिकेतिप्राग्भवनामा दृष्टिविषोऽहिरभूत् । स च प्रभुं प्रतिमास्थं दृष्ट्वा क्रुधा ज्वलन् सूर्यं दर्शं दर्शं त्रिर्दृग्ज्वालां मुमोच । तासु विफलासु मद्विषाक्रान्तोऽयं पतन् मा मां मृद्नीयादिति दष्ट्वा दष्ट्वाऽपक्रामन् गोक्षीरधवलं भगवद्रक्तं वीक्ष्य 'चण्डकौशिक! बुध्यस्व बुध्यस्व' इति प्रभुवचः श्रुत्वा च जातिस्मृतिमान् प्रभुं त्रिःप्रदक्षिणीकृत्य प्रपन्नानशनो ना(मा)न्यत्र विषभीषणा मे दृष्टिर्यासीदिति तुण्डं

ताहे तेण सावएण चिंतिअं, जइ मुचीहंति ततो लोआ वाहेंति, ता एत्थ चेव अच्छंतु, फासुगचारी किणिऊणं दिज्जंति, एवं पोसिज्जंति। सो वि सावओ अट्ठमिचाउद्दसीसु उववासं करेति, पोत्थयं च वाएति, तेवि तं सोऊण भद्दया जाया सण्णिणो अ, जद्दिवसं सावगो न जेमेति, तद्दिवसं तेवि न चरंति। तस्स य सावगस्स भावो जाओ, जा इमे भविआ उवसंता अब्भहिअणेहो जातो। ते रूवस्सिणो तस्स य सावगस्स मित्तो, भंडीरवणजत्ता, तारिसा णत्थि अण्णस्स वइल्ला, ताहे तेण ते भंडीए जोएत्ता नीता अणापुच्छाए, तत्थ अण्णेण वि अण्णेण वि समं धावं कारिता, ताहे छिण्णा, ते आणेउं वद्धा, ण चरंति न य पाणियं पिअंति, जाहे सव्वहा णेच्छंति ताहे सो सावओ तेसिं भत्तं पच्चक्खाति, णमोक्कारं च देति, ते कालगया णागकुमारेसु उववण्णा, ओहिं पउंजंति जाव पेच्छंति तित्थगरस्स उवसग्गं कीरमाणं, ताहे तेहिं चिंतिअं, 'अलाहि ता अण्णेणं सामिं मोएमो' आगता एगेण णावा गहिता, एगो सुदाढेण समं जुज्झति, सो महड्ढिओ तस्स पुण चवणकालो, इमे अ अहुणोववण्णा, सो तेहिं पराजिओ, ताहे ते णागकुमारा तित्थगरस्स महिमं करेंति, सत्तं रूवं च गायंति, एवं लोगो वि, ततो सामी उइण्णो, तत्थ देवेहिं सुरभिगंधोदयवासं पुप्फवासं च वुट्ठं, ते वि पडिगय त्ति। ततः स्वामी राजगृहे नालन्दायां तन्तुकशालैकदेशेऽनुज्ञाप्याद्यं मासक्षपणमुपसम्पद्य तस्थौ। तत्र गोशाल आगात्, तस्योत्पत्तिस्त्वेवम्—मंखलिनामा मङ्खः, तस्य सुभद्रा भार्या शरवणविषये गोवहुलद्विजस्य गोशालायां प्रसूतेति गोशाल इति नाम। स च स्वामिनि कूरादिविपुलभोजनविधिना विजयेन प्रतिलाभिते दिव्यकुसुमादिपञ्चदिव्यानि निरीक्ष्य त्व-

भूरितरान्तेवासिपरिवृतो मुनिचन्द्रमुनिस्तत्रैव कूपनयकुम्भकारशालायां तस्थौ, तत्साधून्निरीक्ष्य गोशालः प्राह 'के यूयं?' तैरुक्तम्–'निर्ग्रन्थाः' पुनः प्राह–'क यूयं क च मे धर्माचार्यः' तैरूचे–'यादृशस्त्वं तादृशस्त्वद्धर्माचार्योऽपि भविष्यति' ततो रुष्टेनोचे–'मे धर्माचार्यतपसा दह्यतां युष्मदाश्रयः' तैरप्यूचे– 'नेयं भीतिरस्माकं' पश्चात्स आगत्य स्वामिनः सर्वमुवाच, सिद्धार्थोऽवदत्– 'नैते साधवो दह्यन्ते' रात्रौ जिनकल्पतुलनां कुर्वाणो मुनिचन्द्रः प्रतिमास्थो मत्तेन कुम्भकारेण चौरभ्रान्त्या व्यापादितः, उत्पन्ने चावधिज्ञानं जगाम च स्वर्गं, ततो महिमार्थमायातामरकृतोद्योतमालोक्योपाश्रयो दह्यतेऽमीषामित्युवाच स्वामिनं गोशालः, सिद्धार्थेन यथावत्कथने तत्र गत्वा तच्छिष्यान्निर्भर्त्स्यायातः । ततः स्वामी चौरायां गतः, तत्र चारिकौ हेरिकाविति कृत्वा रक्षका अगडे प्रक्षिपन्ति । प्रथमं गोशालः क्षिप्तः प्रभुस्तु नाद्यापि तावता तत्र सोमाजयन्तीनाम्न्यावुत्पलभगिन्यौ संयमाक्षमतया प्रव्राजिकीभूते ज्ञात्वा तमुपसर्गमुपशामयतः । ततः प्रभुः पृष्ठचम्पायां प्राप्तः, तत्र वर्षाचतुर्मासं क्षपणेनातिवाह्य बहिः पारयित्वा कयङ्गलसन्निवेशं गतः, तत्र दरिद्रस्थविरा नामपाषण्डस्थास्तत्पाटकमध्यस्थदेवकुले स्वामिनः प्रतिमास्थितस्य माघमासे हिमवर्षे निपतिते दरिद्रस्थविराः समहिलादिपरिग्रहा जागरदिने गायन्ति, दृष्ट्वा गोशालो जहास, पुनः पुनस्तैस्त्रिर्निर्वासितः, पुनः स्वामिशिष्य इति कृत्वा मुक्तः । ततः स्वामी श्रावस्त्यां गत्वा बहिः प्रतिमया स्थितः, तत्र सिद्धार्थोक्तमहामांसभोजनपरिहाराय गोशालो वणिग्गेहेषु भिक्षार्थं भ्रमन् पितृदत्तगृहपतिभार्यया निन्द्वा मृतापत्यप्रसूता श्रीभद्रया शिवदत्तनैमित्तिकवाचा स्वापत्यजीवनाय गर्भमांसमिश्रं पायसं भोजितोऽपि मयाचान्यतो गृहे

नामाचार्यः प्रतिमास्थितश्चौरभ्रान्त्याऽऽरक्षकपुत्रेण भल्लया हतो जातावधिः स्वर्गमलञ्चकार, शेषं च मङ्खलिवचनादि मुनिचन्द्रवत् । ततः स्वामी कूपिकसन्निवेशं गतः, तत्र चारिकशङ्कया गृहीतो भगवान् पार्श्वान्तेवासिनीभ्यां प्रव्राजकीभूतविजयाप्रगल्भाभ्यां मोचितः । पृथग्भूतश्च स्वामिनो मङ्खलिरन्यस्मिन् पथि गच्छन् पञ्चशतैरपि स्तेनैर्गृहीतो मातुल इति कृत्वा वाहनया खिन्नोऽचिन्तयत् वरं स्वामिनैव सार्द्धं गमनमिति स्वामिनं मार्गयितुं लग्नः । स्वाम्यपि वैशाल्यां गत्वाऽयस्कारशालायां प्रतिमया स्थितः, तत्रैकोऽयस्कारः षण्मासं यावद्रोगी भूत्वाऽरोगः सन्नुपकरणकरः शालामागतः स्वामिनं निरीक्ष्यामङ्गलमिति विचिन्त्य घनेन हन्तुमुद्यतोऽवधिना ज्ञात्वाऽऽगत्य तेनैव हतो मघवता । ततः स्वामी ग्रामाकसन्निवेशं गतः, तत्रोद्याने विभेलकयक्षो महिमां चक्रे । ततः शालिशीर्षे ग्रामे उद्याने प्रतिमास्थस्य स्वामिनो माघमासे त्रिपृष्ठभवापमानितान्तःपुरी मृत्वा व्यन्तरीभूता तापसीरूपं कृत्वा जलभृतजटाभिरन्यासह्यमुपसर्गमुपशान्ता च स्तुतिं चक्रे, तद्वेदनमधिसहमानस्य षष्ठेन तपसा विशुध्यमानस्य लोकावधिरुत्पन्नः । ततः स्वामी भद्रिकां गतः, तत्र षष्ठवर्षासु चतुर्मासतपो विचित्रांश्चाभिग्रहानकरोत्, तत्र पुनः षण्मासान्ते मङ्खलिर्मिलितः । ततः स्वामी बहिः पारयित्वा ऋतुबद्धे मगधायां निरुपसर्गो विहृतवान् । ततः आलभिकायां सप्तमवर्षासु चतुर्मासक्षपणेन बहिः पारयित्वा कुण्डगसन्निवेशे वासुदेवदेवकुले स्वामी प्रतिमया स्थितः, मङ्खलिरपि वासुदेवप्रतिमायाः पराङ्मुखोऽधिष्ठानं मुखे कृत्वा तस्थौ, कुट्टितश्च लोकैः । ततो मर्द्दनग्रामे बलदेवदेवकुले कोणे स्वामी प्रतिमया स्थितः, मङ्खलिर्बलदेवमुखमूले मेहनं कृत्वा तस्थौ, द्वयोरपि रथानयोर्मुनिरिति कृत्वा मुक्तः । ततो लोहार्गले जनेन चारिकबुद्ध्या

विदार्य सप्ततिलान् दृष्ट्वा नियतिं गाढीकृतवान्, तत 'आतापनापरस्य सदा षष्ठतपः सनखकुल्माषपिण्डिकया एकेनोष्णोदकचुलुकेन पारयतः षण्मास्या तेजोलेश्योत्पद्यते' इति सिद्धार्थोक्तोपायः ( भगवदुक्तोपायः ) पृथग्भूतः श्रावस्त्यां कुम्भकारशालास्थितस्तां साधितवान्, त्यक्तव्रतश्रीपार्श्वशिष्यपट्टात् अष्टाङ्गनिमित्तं च शिक्षितवान्, ततोऽहंकारेणाहं जिनोऽस्मीति सर्वजने प्रख्यापयति स, ततो वाणिजग्रामे आतापनापुरस्सरं षष्ठतपसोत्पन्नावधिरानन्दः स्वामिनमालोक्याऽहो परीषहसह इति स्तुतिपरोऽचिरेण ते केवलमुत्पत्स्यते इत्याद्युक्तवान्। ततः स्वामी श्रावस्त्यां दशमं वर्षारात्रं चित्रं तपोऽकरोदित्याद्यनुक्रमेण यावत्स्वामी बहुम्लेच्छां दृढभूमिं गतः तस्यां बहिः पोट्टालोद्याने पोलासचैत्येऽष्टमभक्तेनैकरात्रिकीं प्रतिमां तस्थिवान्। इतश्च सभागतः शक्रस्त्रैलोक्यजना अपि वीरचेतश्चालयितुमसमर्था इति प्रशंसां कृतवान्, तदनु शक्रामर्षेण सामानिकसङ्गमाख्यसुरः सत्त्वरमागत्य प्रथमतो धूलिवृष्टिं चकार, यया पूर्णाक्षिकर्णाऽऽदिश्रोताः स्वामी निरुच्छ्वासोऽभूत् १, ततो वज्रतुण्डपिपीलिकाभिश्चालनीतुल्यश्चक्रे ताश्चैकेन श्रोतसा निर्यान्ति द्वितीयेन प्रविशन्ति २, तथा वज्रतुण्डोद्दंशाः ३ तीक्ष्णतुण्डा घृतेलिकाः ४, वृश्चिकाः ५, नकुलाः ६, सर्प्पाः ७, मूषकाश्च ८ भक्षयन्ति, तथा हस्तिनः ९, हस्तिन्यश्च १० शुण्डाघातचरणमर्द्दनादिना, पिशाचो अट्टट्टहासादिना ११, व्याघ्रो दंष्ट्रानखविदारणादिना १२, सिद्धार्थत्रिशले करुणविलापादिना उपसर्गयन्ति १३, ततः स्कन्धावारसमीपस्थः प्रभोः पदोर्मध्येऽग्निं प्रज्वाल्य स्थालीमुपस्थाप्य च पचति १४, ततश्चाण्डालस्तीक्ष्णतुण्डशकुनिपञ्जराणि प्रभोः कर्णबाहुमूलादिषु लम्बयति ते च मुखैर्भक्षयन्ति १५, ततः खरवातः पर्वतानपि कम्पयन् प्रभुमुत्क्षिप्य पातयति १६,

ततः कलिकावातश्चक्रवद् भ्रामयति १७, ततो भारसहस्रलोहमयचक्रेणाहतो भूमौ प्रभुराजानुनिमग्नो येन मेरुचूलापि चूर्णीस्यात् १८, ततः प्रभातं विकुर्व्य वक्ति देवार्याद्यापि तिष्ठसि? स्वामी ज्ञानेन रात्रिं वेत्ति १९, देवर्द्धिं दर्शयित्वा च भणति वृणीहि महर्षे! येन तव स्वर्गेण मोक्षेण वा प्रयोजनं, तथाप्यक्षुब्धं देवाङ्गना नाट्यगीतविलासादिभिरुपसर्गयति २०, एवमेकस्यां निशि विंशत्योपसर्गैर्न मनागपि क्षोभमुपागमत् भगवान्। अत्र कविः—"बलं जगद्ध्वंसनरक्षणक्षमं, कृपा च किं सङ्गमके कृतागसि। इतीव सञ्चिन्त्य विमुच्य मानसं, रुषैव रोषस्तव नाथ! निर्ययौ ॥ १ ॥" ततः षण्मासावधिकानेषणीयाहारसम्पादनादिविचित्रोपसर्गान् तत्कृतान् सहमानो भगवान् निरशन एव षण्मास्या स गतो भविष्यतीति विचिन्त्य यावद् व्रजग्रामगोकुलं गोचर्यां प्रविष्टः, तत्रापि तत्कृतामनेषणामवगम्यार्द्धहिण्डित एवागत्य बहिः प्रतिमया स्थितः, स सुरोऽवधिना शुद्धपरिणामं स्वामिनं ज्ञात्वा द्वितीयदिने उपशान्तः स्वामिनं प्रति ब्रूते 'हे आर्य! व्रज विहारादौ हिण्ड च गोचर्यादौ नाहं किञ्चित्करोमि' इत्युक्ते 'इच्छया व्रजामि न वेति नाहं कस्यापि वक्तव्य' इति स्वामिना प्रत्युक्तः, ततो विषण्णः सन् स्वामिनमभिवन्द्य सौधर्म्मं प्रति चचाल, स्वामी च तत्रैव गोकुले हिण्डन् वत्सपाल्या स्थविरया परमान्नेन प्रतिलाभितो वसुधारा च निपतिता। इतश्च कालं तावन्तं, सुराः सौधर्म्मवासिनः। निरानन्दा निरुत्साहा, उद्विग्नाश्चावतस्थिरे ॥ १ ॥ शक्रोऽपि मुक्तनेपथ्या-ङ्गरागोऽत्यन्तदुःखितः। सङ्गीतकादिविमुखो, मनस्येवमचिन्तयत् ॥ २ ॥ इयतामुपसर्गाणां, निमित्तमभवं ह्यहम्। मया स्वामिप्रशंसायां, कृतायां सोऽकुपत्सुरः ॥ ३ ॥ अत्रान्तरे सङ्गमकः, पापपङ्कमलीमसः।

प्रनष्टकान्तिप्राग्भारो–ऽद्भिः स्पृष्ट इव दर्पणः ॥ ४ ॥ भ्रष्टप्रतिज्ञो मन्दाक्ष–मन्दीभूताक्षिपङ्कजः । देवराजाधिष्ठितान्तां, सुधर्मामाययौ सभाम् ॥ ५ ॥ युग्मम् ॥ शक्र सङ्गमकं दृष्ट्वा, सद्यो भूत्वा पराङ्मुखः । इत्यूचे भोः सुराः सर्वे–ऽप्याकर्णयत मद्वचः ॥ ६ ॥ अयं हि कर्मचाण्डालः, पापः सङ्गमकामरः । दृश्यमानोऽपि पापाय, तद्द्रष्टुं नैष युज्यते ॥ ७ ॥ बह्वनेनापराद्धं हि, यत्स्वामी नः कदर्थितः । अस्मत्तोऽपि न किं भीतो, भवाद्भीतो न यद्वयम् ॥ ८ ॥ अर्हन्तो नान्यसाहाय्यात्, तप्यन्ते तप इत्यहम् । तथोपसर्गकालेऽपि, नामुं पापमशिक्षयम् ॥ ९ ॥ अतः परमिह तिष्ठ–न्नस्माकमपि पाप्मने । निर्वासनीयस्तदसौ, कल्पादस्मात्सुराधमः ॥ १० ॥ इत्युक्त्वा तं वज्रपाणि–र्वज्रेणेव शिलोच्चयम् । जघान वामपादेन, सुराधममसर्पणः ॥ ११ ॥ पर्यस्यमानो विविधा–युधैर्मघवतैर्भटैः । आक्रोश्यमानस्त्रिदिव–स्त्रीभिर्मोटितपाणिभिः ॥ १२ ॥ सामानिकैर्हस्यमानो, जानकाख्यविमानतः । सशेषैकार्णवायुष्को, मेरुचूलां सुरो ययौ ॥ १३ ॥ महिष्यः सङ्गमकस्य, शक्रमेवं व्यजिज्ञपन् । स्वनाथमनुगच्छामः, त्वदादेशो भवेद्यदि ॥ १४ ॥ अन्वगन्तुं सङ्गमकं, दीनास्या अन्वमंस्त ताः । अवारयत्परीवार–मशेषमपि वासवः ॥ १५ ॥ इति । तत आलभिकायां हरिकान्तः श्वेताम्बिकायां हरिसहश्च प्रियं प्रष्टुमेतः, ततः श्रावस्त्यां शक्रः स्कन्दप्रतिमायामवतीर्य स्वामिनं वन्दितवान्, ततो महती महिमाप्रवृत्तिः, ततः कौशाम्ब्यां चन्द्रसूर्यावतरणं वाणारस्यां च शक्रः राजगृहे ईशानः मिथिलायां जनको राजा धरणेन्द्रश्च प्रियं पृच्छति स्म, ततो वैशाल्यामेकादशमो वर्षारात्रोऽभूत्, तत्र भूतः प्रियं पृच्छति । ततः सुंसुमारपुरे गतः, तत्र चमरोत्पातः, ततो भोगपुरे खर्जूरीसकण्टककम्बाभिर्महेन्द्र-

पूर्णभद्रमाणिभद्रौ यक्षेन्द्रौ स्वामिनः पर्युपास्तिं कुर्वाणौ विलोक्य विस्मितेन तेन 'को ह्यात्मा ?' इति पृच्छा स्वामिना च 'योऽहमिति मन्यते' इत्यादिजीवव्यवस्थापनं, पुनरपि पृच्छा 'किमुपदेशनं ?' 'द्विधा धार्म्मिकमधार्मिकं च' एवं मूलोत्तरगुणभेदात् प्रत्याख्यानमपि द्विधेति विप्रो बुद्धः । ततो जृम्भिकाग्रामे शक्रो नाट्यविधिं दर्शयित्वा इयद्भिर्दिनैर्ज्ञानोत्पत्तिरित्यकथयत् । ततो मिण्ढकग्रामे चमरेन्द्रप्रियपृच्छा, ततः षण्मानिग्रामे स्वामिनो बहिः प्रतिमास्थस्य पार्श्वे गोपो गां मुक्त्वा ग्रामं प्रविष्ट आगतश्च पृच्छति–देवार्य !–'क्व गता गौः' मौने च रुष्टेन तेन स्वामिकर्णयोः कटशलाके तथा प्रक्षिप्ते यथा मिथोमिलिते छिन्नाग्रत्वाददृश्ये च, एतच्च कर्म शय्यापालककर्णयोस्तप्तत्रपुप्रक्षेपयता त्रिपृष्ठेन यदर्जितं तदुदीर्णं च वीरभवे, शय्यापालको भवं भ्रान्त्वाऽयमेव गोपः, ततः प्रभुर्मध्यमापापायां गतः, तत्र सिद्धार्थवणिग्गेहे भिक्षार्थमागतं खरकवैद्यो विलोक्य स्वामिनं सशल्यं ज्ञातवान्, पश्चात् स वणिगुद्याने गत्वा सण्डासकाभ्यां गृहीत्वा वैद्यात्ते शलाके निर्गमयति स्म, तदाकर्षणे च वीरणोऽऽराटिस्तथा मुक्ता यथा सकलमप्युद्यानं महाभैरवं बभूव, देवकुलमपि कारितं, स्वाम्यपि संरोहणौषधेन तदैव प्रगुणीभूतः, एवं चोपसर्गा गोपेनैवारब्धा, गोपेनैव परिनिष्ठिता, एतेषां जघन्यादिविभागस्त्वेवम्–जघन्यं किल कटपूतनाशीतं, मध्यमं च कालचक्रम्, उत्कृष्टं च श्रोत्रशल्योद्धरणम् । एतत्प्रक्षेप्ता गोपः सप्तमनरकातिथिः, खरकसिद्धार्थौ च स्वर्गमलञ्चक्रतुरिति । एवं ये व्यावर्णिता देवाद्युपसर्गास्तानुत्पन्नान् सम्यक् सहते–भयाभावेन, क्षमते–क्रोधाभावेन, तितिक्षते–दैन्याद्यनवलम्बनेन, अध्यासयति–अविचलकायतयेति ॥ ११७ ॥

तएणं समणे भगवं महावीरे अणगारे जाए इरियासमिए भासासमिए एसणासमिए आया-
णभंडमत्तनिक्खेवणासमिए उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिए मणसमिए
वयसमिए कायसमिए मणगुत्ते वयगुत्ते कायगुत्ते गुत्ते गुत्तिंदिए गुत्तबंभयारी अकोहे अमाणे
अमाए अलोभे संते पसंते उवसंते परिनिव्वुडे अणासवे अममे अकिंचणे छिन्नगंथे निरुवलेवे,
कंसपाई इव मुक्कतोए, संखे इव निरंजणे, जीवे इव अप्पडिहयगई, गगणमिव निरालंबणे,
वाऊ व अप्पडिबद्धे, सारयसलिलं व सुद्धहियए, पुक्खरपत्तं व निरुवलेवे, कुम्मो इव गुत्तिं-
दिए, खग्गिविसाणं व एगजाए, विहग इव विप्पमुक्के, भारंडपक्खी इव अप्पमत्ते, कुंजरो
इव सोंडीरे, वसभो इव जायथामे, सीहो इव दुद्धरिसे, मंदरो इव अप्पकंपे, सागरो इव
गंभीरे, चंदो इव सोमलेसे, सूरो इव दित्ततेए, जच्चकणगं व जायरूवे, वसुंधरा इव सव्व-
फासविसहे, सुहुयहुयासणो इव तेयसा जलंते, ( इमेसिं पयाणं दुन्नि संगहिणी गाहाओ–
“कंसे संखे जीवे, गगणे वाऊ अ सरयसलिले अ। पुक्खरपत्ते कुम्मे, विहगे खग्गे अ भारंडे
॥ १ ॥ कुंजरवसहे सीहे, नगराया चेव सागरमखोभे। चंदे सूरे कणगे, वसुंधरा चेव हूअवहे
॥ २ ॥ ) नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे से य पडिबंधे चउव्विहे पन्नत्ते,

तं जहा—दव्वओ, खित्तओ, कालओ, भावओ । दव्वओ सचित्ताचित्तमीसएसु दव्वेसु । खित्तओ—गामे वा नगरे वा, अरन्ने वा, खित्ते वा, खले वा, घरे वा, अंगणे वा, नहे वा । कालओ—समए वा, आवलियाए वा, आणापाणुए वा, थोवे वा, खणे वा, लवे वा, मुहुत्ते वा, अहोरत्ते वा, पक्खे वा, मासे वा, उऊ वा, अयणे वा, संवच्छरे वा, अण्णयरे वा दीहकालसंजोए वा । भावओ—कोहे वा, माणे वा, मायाए वा, लोभे वा, भए वा, हासे वा, पिज्जे वा, दोसे वा, कलहे वा, अब्भक्खाणे वा, पेसुन्ने वा, परपरिवाए वा, अरइरई वा, मायामोसे वा, जाव मिच्छादंसणसल्ले वा, (ग्रं० ६००) तस्स णं भगवंतस्स नो एवं भवइ ॥ ११८ ॥

व्याख्या—तएणमित्यादितो नो एवं भवइ त्ति पर्यन्तम्, तत्र यत एवं ततोऽनगारो जातः श्रमणो भगवान् महावीरः, अनगारत्वप्रयोजकं च विशेषणकदम्बकं इरियासमिए इत्यादि, ईर्यायां—गमनागमनादौ समितः—सम्यक्प्रवृत्तः, भाषायां—भाषणे समितः, एषणायां—द्विचत्वारिंशद्दोषविशुद्धभिक्षाग्रहणे, आदाने—ग्रहणे उपकरणस्येति गम्यम्, भाण्डमात्राया—वस्त्राद्युपकरणरूपपरिच्छदस्य अथवा भाण्डस्य वस्त्रादेर्मृन्मयभाजनस्य वा मात्रस्य च—पात्रविशेषस्य निक्षेपणायां—विमोचने यः समितः—सुप्रत्युपेक्षादिक्रमेण सम्यक्प्रवृत्तः स तथा, उच्चारः—पुरीषं प्रश्रवणं—मूत्रं खेलो—निष्ठीवनं सिङ्घानो—नासिकामलः जल्लः—शरीरमलः तेषां परिष्ठापना—त्यागः तत्र समितः—शुद्धस्थण्डिलाश्रयणात्, एतच्चान्त्यसमितिद्वयं भगवतो भाण्डसिङ्घानाद्यसम्भवेऽपि नामाखण्डितार्थमित्थमुक्तम्, मणसमिए

चित्तादीनामशुभानां निषेधकः, यतः समितिः—सत्प्रवृत्तिः, गु-
इत्यादि, मनःप्रभृतीनां कुशलानां प्रवर्त्तक इत्यर्थः शब्दादिषु रागद्वेषाभावात् श्रोत्रा-
सिस्तु—निरोधः, अत एव गुप्तत्वात् गुत्तिंदिए गुत्तबंभयारी त्ति गुप्तानीन्द्रियाणि
दीनि, ब्रह्मचर्यं—मैथुनविरतिरूपं वसत्यादि नवगुप्तिमचरति—आसेवते इत्येवंशीलो यः स तथा, अक्रोध इत्यादि
व्यक्तम्, अत एव शान्तोऽन्तर्वृत्त्या, प्रशान्तो बहिर्वृत्त्या, उपशान्त उभयतः, अथवा मनःप्रभृत्यपेक्षया शान्ता-
दीनि पदानि, अत एव परिनिर्वृतः—सकलसन्तापवर्जितः, अनाश्रवो—ऽपापकर्मबन्धो हिंसादिसप्तदशाश्रवनिवृत्तेः,
अमम—आभिष्वङ्गिकममेतिशब्दविरहितो, ऽकिञ्चनो—निर्द्रव्यः, छिन्नग्रन्थो-मुक्तहिरण्यादिग्रन्थः, छिन्नसोए त्ति क्वचि-
त्तत्र छिन्नशोकः छिन्नश्रोता वा छिन्नसंसारप्रवाह इत्यर्थः, निरुपलेपो द्रव्यभावमलरहितस्तत्र द्रव्यतो विमलवपुर्भावतो
मिथ्यात्वादिमलरहितः, निरुपलेपत्वमेवोपमानैराह-कांस्यपात्रीव मुक्तं—त्यक्तं तोयमिव तोयं—बन्धनिबन्धनत्वात् स्नेहो
येन, शङ्ख इव निरञ्जनोऽथवा रञ्जनं रङ्गणं वा—रागाद्युपरञ्जनं तस्मान्निर्गतः, जीव इवाप्रतिहतगतिः—सर्वत्रौचित्ये-
नास्खलितविहरणात्संयमेऽप्रतिहतवृत्तेर्वा, गगनमिव निरालम्बनो देशग्रामकुलाद्यालम्बनरहितत्वात्, वायुरिवाप्र-
तिबद्धः-क्षेत्रादौ प्रतिबन्धबन्ध्यत्वेनौचित्येन निरन्तरविहारित्वात्, शारदसलिलमिव शुद्धहृदयः कालुष्याऽकलङ्कि-
तत्वात्, पुष्करं—पद्मं तस्य पत्रमिव निरुपलेपः पङ्कजलकल्पस्वजनविषयस्नेहराहित्यात्, कूर्मः—कच्छपः स इव गुप्ते-
न्द्रियः स हि कदाचिद् ग्रीवाचरणचतुष्टयरूपाङ्गपञ्चकेन गुप्तो भवेत् एवं भगवानपीन्द्रियपञ्चकेन, खड्गो—गण्डका-
ख्यो जीवविशेषस्तस्य विषाणं—शृङ्गमेकमेव स्यात्तद्वदेको जात एकजात-एकभूतो रागादिसहायासहितत्वात्, वि-

हग इव विप्रमुक्तो–मुक्तपरिकरत्वादनियतवासाच्च, भारण्डपक्षीवाप्रमत्तो निद्राद्यभावात्, भारण्डपक्षिणोः किलैकं कलेवरं पृथग्ग्रीवं त्रिपादं च स्यात् यदुक्तम्–"भारण्डपक्षिणः ख्याता-स्त्रिपदा मर्त्यभाषिणः । द्विजिह्वा द्विमुखाश्चैको–दराभिन्नफलैषिणः ॥ १ ॥" तौ चात्यन्तमप्रमत्ततयैव निर्वाहं लभेते, अतस्तदुपमा, कुञ्जर इव सो(शौ)ण्डीरः–कर्मशत्रुसैन्यं प्रति शूरः, वृषभ इव जातस्थामा–स्वीकृतमहाव्रतभारवहनं प्रति जातबलो निर्वाहकत्वात्, सिंह इव दुर्द्धर्षः परीषहादिमृगैरनभिभवनीयत्वात्, मेरुरिवानुकूलप्रतिकूलोपसर्गवातैरविचलितसत्त्वः, सागर इव गम्भीरो हर्षशोकादिसाधनसम्बन्धेऽप्यविकृतचित्तत्वात्, चन्द्र इव सोमलेश्यः परोपतापकृन्मनःपरिणामरहितत्वात्, सूर इव दीप्ततेजा द्रव्यतो देहदीप्त्या भावतो ज्ञानेन परेषां क्षोभकत्वाद्वा, जात्यकनकमिव जातं–सम्पन्नं रूपं–स्वरूपं रागादिकुद्रव्यविरहाद् यस्यापगतदोषरूपकुद्रव्यत्वेनोत्पन्नस्वभाव इत्यर्थः, वसुन्धरेव सर्वान् शीतोष्णादीननुकूलेतरान् स्पर्शान् विषहते यः सुहुतो–घृतादितर्पितः स चासौ हुताशनश्चाग्निश्च तद्वत्तेजसा–ज्ञानेन तपसा वा ज्वलन्–दीप्यमानः । नास्त्ययं पक्षो यदुत तस्य भगवतः कुत्रचित्प्रतिबन्धो भवति, क्षेत्रं–धान्यजन्मभूमिः, खलं–धान्यमलपवनादिस्थण्डिलं, नभः–आकाशं, समयः–सर्वनिकृष्टकालः उत्पलपत्रशतव्यतिभेदजरत्पटशाटिकापाटनादिदृष्टान्तसाध्यः, आवलिका–ऽसङ्ख्यातसमयरूपा, आणापाणू–उच्छ्वासनिःश्वासकालः, स्तोकः–सप्तोच्छ्वासमानः, क्षणो–बहुतरोच्छ्वसरूपः, लवः–सप्तस्तोकमानः, मुहूर्त्तो–लवसप्ततिमानः, अन्यतरस्मिन् दीर्घकालसंयोगे–युगपूर्वादौ, भये–इह लोकादिभेदात् सप्तविधे, हासे त्ति हास्ये हर्षे वा, पिज्जे त्ति अनभिव्यक्तमायालोभस्वभावे अभिष्वङ्गमात्रे प्रेमणि, द्वेषे–

न्त्युपायमतिम्लेषु तत्साधनेऽप्यभिमते वि-
ऽनभिव्यक्तक्रोधमानस्वरूपेऽप्रीतिमात्रे, अथवा रागः—सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधनेऽप्यभिमते वि-
षये गर्द्धः प्रेम तस्मिन्, द्वेषो—दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वाऽप्रीतिस्तत्र, कलहे—ऽसभ्यवचनरा-
स्यादौ, अभ्याख्याने—ऽसद्दोषाविष्करणे, पैशून्ये—प्रच्छन्नमसद्दोषाविष्करणे, परपरिवादे—विप्रकीर्णपरगुणदोषवचने,
अरतिमोहनीयोदयाच्चित्तोद्वेगफलाऽरतिः रतिमोहोदयाच्चित्ताभिरती रतिः समाहारेऽरतिरतिनि, मायामृषे माया-
मोषे वा—वेषान्तरभाषान्तरकरणेन परवञ्चनं माया मायया सह मृषा मायामृषा मायया वा मोषः परेषां मायामो-
पस्तस्मिन्, मिथ्यादर्शनं-मिथ्यात्वं शल्यमिवानेकदुःखहेतुत्वात् । एवममुना प्रकारेण तस्य भगवतो न भवति
प्रतिबन्ध इति प्रकृतम् ॥ ११८ ॥

से णं भगवं वासावासवज्जं अट्ठ गिम्हहेमंतिए मासे गामे एगराइए नगरे पंचराइए वासीचंद-
णसमाणकप्पे समतिणमणिलेट्ठुकंचणे समसुहदुक्खे इहलोगपरलोगअप्पडिबद्धे जीवियम-
रणे निरवकंक्खे संसारपारगामी कम्मसत्तुनिग्घायणट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥ ११९ ॥

व्याख्या—से णं भगवं वासावासवज्जमित्यादितो विहरइ त्ति पर्यन्तम्, तत्र वर्षासु—प्रावृषि वासो—वर्षावासः
तद्वर्जं अष्टमासान् ग्रीष्महेमन्तिकान्, ग्रामे एकरात्रो वासमानत्वेनास्ति यस्य स एकरात्रिकः, एवं नगरे पञ्च-
रात्रिकः, वासीचन्दनयोः प्रतीतयोः अथवा वासीचन्दने इव वासीचन्दने अपकारकोपकारकौ तयोः समानो-नि-
र्द्वेषरागत्वात् कल्पो—विकल्पः समाचारो वा यस्य, समानि—तुल्यान्युपेक्षणीयतया तृणादीनि यस्य समसुहदुक्खे-

त्यादि व्यक्तम्, एवं च णं विहरइ त्ति एवमीर्यासमित्यादिगुणयोगेन विहरति–आस्ते ॥ ११९ ॥

तस्स णं भगवंतस्स अणुत्तरेणं नाणेणं अणुत्तरेणं दंसणेणं अणुत्तरेणं चरित्तेणं अणुत्तरेणं आलएणं अणुत्तरेणं विहारेणं अणुत्तरेणं वीरिएणं अणुत्तरेणं अज्जवेणं अणुत्तरेणं मद्दवेणं अणुत्तरेणं लाघवेणं अणुत्तराए खंतीए अणुत्तराए मुत्तीए अणुत्तराए गुत्तीए अणुत्तराए तुट्ठीए अणुत्तरेणं सच्चसंजमतवसुचरियसोवचियफलनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स दुवालससंवच्छराइं विइक्कंताइं तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स जे से गिह्माणं दुच्चे मासे चउत्थे पक्खे वइसाहसुद्धे तस्स णं वइसाहसुद्धस्स दसमीपक्खेणं पाईणगामिणीए छायाए पोरिसीए अभिनिविट्टाए पमाणपत्ताए सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं जंभियगामस्स नगरस्स बहिया उज्जुवालियाए नईए तीरे वेयावत्तस्स चेइयस्स अदूरसामंते सामागस्स गाहावइस्स कट्ठकरणंसि सालपायवस्स अहे गोदोहियाए उक्कुडुयनिसिज्जाए आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं नक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुन्ने केवलवरनाणदंसणे समुप्पन्ने ॥ १२० ॥

कयाइ निच्चभत्तं, चउत्थभत्तं च से आसी ॥ ६ ॥ वारस वासे अहिए, छट्ठं भत्तं जहन्नयं आसी । सव्वं च तवोकम्मं, अपाणयं आसि वीरस्स ॥ ७ ॥ तिन्नि सए दिवसाणं, अउणापण्णं तु पारणाकालो । उक्कुडुअनिसिज्जाणं, ठिअपडिमाणं सए वहुए ॥ ८ ॥" उत्कुटुकनिषद्यानां प्रतिमानां वहूनि शतानि स्थितः । "पव्वज्जाए दिवसं, पढमं इत्थं तु पक्खिवित्ताणं । संकलिअंमि उ संते, जं लद्धं तं निसामेह ॥ ९ ॥ वारस चेव य वासा, मासा छच्चेव अद्धमासं च । वीरवरस्स भगवओ, एसो छउमत्थपरिआगो ॥ १० ॥" छाद्मस्थ्ये भगवतः सर्वोऽपि सङ्कलितः प्रमादकालोऽन्तर्मुहूर्त्तप्रमाण इत्यर्थः, व्यावृत्तचैत्यत्वाद् व्यावृत्तं तस्य व्यावृत्तस्य जीर्णोद्यानस्येत्यर्थः, जीर्णं व्यन्तरायतनस्य वा विजयावर्त्तं वा चैत्यं तस्य अदूरसामन्ते—अदूरासन्ने उचितदेशे इत्यर्थः श्यामाकाभिधानस्य गृहपतेः—कौटुम्बिकस्य कट्ठकरणंसि त्ति क्षेत्रे—धान्योत्पत्तिस्थाने, शुक्लध्यानं चतुर्द्धा पृथक्त्ववितर्कं सविचारं १, एकत्ववितर्कमविचारं २, सूक्ष्मक्रियमप्रतिपाति ३, उच्छिन्नक्रियमनिवर्त्ति ४ तेषामाद्यभेदद्वये ध्यातेऽग्रेतनभेदद्वयमप्रतिपन्नस्य केवलज्ञानमुत्पेदे इत्यर्थः, अणंते इत्यादि पूर्वमिव व्याख्येयमिति ॥ १२० ॥

तएणं समणे भगवं महावीरे अरहा जाए जिणे केवली सव्वन्नू सव्वदरिसी सदेवमणुयासुरस्स लोगस्स परियायं जाणइ पासइ, सव्वलोए सव्वजीवाणं आगइं गइं ठिइं चवणं उववायं तक्कं मणो माणसियं भुत्तं कडं पडिसेवियं आवीकम्मं रहोकम्मं । अरहा अरहस्स-

स्तं—एकान्तं भजते जघन्यतोऽपि कोटाकोटिसुरसेव्यत्वात् तं तं कालं ति तत्र तत्र काले मनोवचनकाययोगे वर्त्तमानानां सर्वलोके सर्वजीवानां सर्वभावान्—गुणपर्यायान् तत्र सहभाविनो ज्ञानादयो गुणाः, क्रमभाविनो हर्षादयः पर्यायाः तान्, अकारप्रश्लेषात् सर्वाऽजीवानां—धर्मास्तिकायादीनां पुद्गलास्तिकायान्तानां सर्वभावान् सर्वविवर्त्तांश्च जानन् पश्यंश्च विहरति—आस्ते ॥ तत्रादिश्य क्षणं धर्मं, देवोद्योते जगद्गुरुः । लाभाभावान्मध्यमायां, महसेनवनेऽगमत् ॥१॥ श्रीअपापामहापुर्यां, यज्ञार्थी सोमिलो द्विजः । मगधागोर्वरादीयु-स्तत्र चैकादश द्विजाः ॥ २ ॥ इन्द्रभूति १ रग्निभूति २—र्वायुभूतिः ३ सहोद्भवाः । व्यक्तः ४ सुधर्म्मा ५ मण्डित ६—मौर्यपुत्रौ ७ सहोदरौ ॥ ३ ॥ अकम्पितो ८ ऽचलभ्राता ९, मेतार्य १० श्च प्रभासकः ११ । अर्हंमन्याः स्वयं सर्वे, सर्वज्ञख्यातिभाजिनः ॥ ४ ॥ ते च यद्विषयकसन्देहभाजस्तानि यथा—जीवे १ कम्मे २ तज्जी—व ३ भूअ ४ तारिसय ५ वन्धमुक्खे ६ अ। देवा ७ नेरइया ८ वा, पुन्ने ९ परलोअ १० निव्वाणे ११ ॥ ५ ॥ पंचण्हं पंचसया, अद्धुट्ठसया अ हुंति दुहगणा । दुन्हं तु जुअलयाणं, तिसओ तिसओ हवइ गच्छो ॥ ६ ॥ एवं चतुश्चत्वारिंश—च्छतानि मिलिता द्विजाः । कुर्वन्ति यज्ञकर्माणि, स्वशर्माणि प्रलिप्सवः ॥ ७ ॥ अत्रान्तरे—तं दिव्वदेवघोसं, सोऊणं माहणा तहिं तुट्ठा । अहो जन्निएण जुट्ठं, देवा किर आगया इहयं ॥ ८ ॥ सोऊण कीरमाणिं, महिमं देवेहिं जिणवरिंदस्स । अह एइ अहम्माणी, अमरसिओ इंदभूइ त्ति ॥ ९ ॥ मुत्तूण ममं लोगो, किं धावइ एस तस्स पामूलं । अन्नो वि जाणइ मए, ठिअंमि कत्तुच्चिअं एयं ॥ १० ॥ वंचिज्ज व मुक्खजणो, देवा कहणेण विम्हयं नीआ । वंदंति संथुणंति अ, जेणं सव्वन्नुबुद्धीए ॥ ११ ॥

ममाभवत् । तथापि सासहिर्नाहं, मुधा सर्वज्ञवादिनम् ॥ २७ ॥ एकस्मिन्नजिते ह्यस्मिन्, सर्वमप्यजितं भवेत् । एकदा हि सती लुप्त-शीला स्यादसती सदा ॥ २८ ॥ यतः—छिद्रे स्वल्पेऽपि पोतः किं, पाथोधौ नैव मज्जति ? । न दुर्गो गृह्यते धीरै-र्दुर्गांशे पातितेऽपि किम् ॥२९॥ हंहो ! वादिगणा भोट-कर्णाटादिसमुद्भवाः । कस्माद्दृश्यतां प्रासा, यूयं मम पुरः सदा ॥ ३० ॥ लाटा दूरगताः प्रवादिनिवहा मौनं श्रिता मालवा, मूकाभा मगधा गता गतमदा गर्जन्ति नो गौर्जराः । काश्मीराः प्रणताः पलायनकरा जातास्तिलङ्गोद्भवा, विश्वे चापि स नास्ति यो हि कुरुते वादं मया साम्प्रतम् ॥ ३१ ॥ कृष्णसर्पस्य मण्डूक-श्चपेटां दातुमुद्यतः । मूषो रदैश्च मार्जार-दंष्ट्रापाताय सादरः ॥ ३२ ॥ वृषभः स्वर्गजं शृङ्गैः, प्रहर्तुं काङ्क्षति द्रुतं । द्विपः पर्वतपाताय, दन्ताभ्यां यतते रयात् ॥ ३३ ॥ शशकः केसरिस्कन्ध-केसरां क्रष्टुमीहते । मद्दृष्टौ यदसौ सर्व-वित्त्वं ख्यापयते जने ॥ ३४ ॥ त्रिभिर्विशेषकम् । समीराभिमुखस्थेन, दावाग्निर्ज्वालितोऽमुना । कपिकच्छूलता देह-सौख्यायालिङ्गिता ननु ॥ ३५ ॥ शेषशीर्षमणिं लातुं, हस्तः स्वीयः प्रसारितः । सर्वज्ञाटोपतोऽनेन, यदहं परिकोपितः ॥ ३६ ॥ युग्मम् ॥ तावद् गर्जति खद्योत-स्तावद् गर्जति चन्द्रमाः । उदिते च सहस्रांशौ, न खद्योतो न चन्द्रमाः ॥ ३७ ॥ तावद् गजः प्रस्रुतदानगल्लः, करोत्यकालाम्बुदगर्जितानि । यावन्न सिंहस्य गुहास्थलीषु, लाङ्गूलविस्फोटरवं शृणोति ॥ ३८ ॥ सारङ्गमातङ्गतुरङ्गपूगाः, पलायतामाशु वनादमुष्मात् । आटोपकोपस्फुटकेसरश्री-र्मृगाधिराजोऽयमुपेयिवान् यत् ॥ ३९ ॥ मम भाग्यभराद्वद्वा, वाद्ययं समुपस्थितः । दुर्भिक्षे क्षुधितस्यान्न-लाभश्चिन्तातिगो यथा ॥ ४० ॥

यमस्य मालवो दूरे, किं स्यात् को वा वचस्विनः । अपोषितो रसो नूनं, किमजेयं च चक्रिणः ॥ ४१ ॥ अभेद्यं
किमु वज्रस्य, किमसाध्यं महात्मनाम् । क्षुधितस्य न किं खाद्यं, किं न वाच्यं खलस्य च ॥ ४२ ॥ कल्पद्रूणाम-
देयं किं, निर्विण्णानां किमत्यजम् । गच्छामि तर्हि तस्यान्ते, पश्याम्येतत्पराक्रमम् ॥ ४३ ॥ लक्षणे मम दक्षत्वं,
साहित्ये संहिता मतिः । तर्के कर्कशताऽत्यर्थं, क्व शास्त्रे नास्ति मे श्रमः ॥ ४४ ॥ काउं हयप्पयावं, पुरओ देवाण
दाणवाणं च । नासेहं नीसेसं, खणेण सव्वन्नुवायं से ॥ ४५ ॥ इत्युदीर्य त्वरापूर्णो, ययौ वादस्य लिप्सया । पञ्च-
च्छात्रशतैः पठ्य-मानोऽसौ विरुदैरिति ॥ ४६ ॥ विरुदानि च–सरस्वतीकण्ठाभरण! वादिविजयलक्ष्मीश-
रण! विज्ञाताखिलपुराण! वादिकदलीदलकृपाण! निपुणश्रेणिशिरोमणे! कुमतान्धकारनभोमणे! विजितवादिवृन्द!
वादिगरुडगोविन्द! वादिमुखभञ्जन! निरवद्यविद्याविहितानेकजनरञ्जन! ज्ञानरत्नरत्नाकर! महाकवीश्वर! शिष्यी-
कृतबृहस्पते! विनतानेकनरपते! जितानेकवाद! सरस्वतीलब्धप्रसाद! इत्यादीनि । इअ वुत्तूणं पत्तो, दट्ठुं तेलो-
क्कपरिवुडं वीरं । चउतीसाइसयनिहिं, स संकिओऽवट्ठिओ पुरओ ॥ १ ॥ अथ—वीरं निरीक्ष्य सोपान–स्थितो
दध्यौ स विस्मितः । किं ब्रह्मा? शङ्करः किं वा? किं विष्णु? ब्रह्म वा किमु? ॥ ४७ ॥ चन्द्रः किं स न यत्कलङ्क-
सहितः सूर्योऽथवा नो स यत्, तीक्ष्णांशुः किमु वासवो न स सहस्राक्षो यतो गीयते । किं वा स्वर्णगिरिर्न सोऽति-
कठिनः ख्यातः सुरद्रुर्न वा, नो स्याच्चिन्तितमात्रदः स हि जने हुं वर्द्धमानो ह्यसौ ॥ ४८ ॥ आदित्यमिव दुःप्रेक्ष्यं,
समुद्रमिव दुस्तरम् । वीजाक्षरमिवाचर्च्यम्, दृष्ट्वा वीरं महोदयम् ॥ ४९ ॥ कथं मया महत्त्वं हा, रक्षणीयं पुरा-

र्जितम् । प्रासादं कीलिकाहेतो–र्भङ्क्तुं को नाम वाञ्छति ॥ ५० ॥ सूत्रार्थी पुरुषो हारं, करत्रोटयितुमीहते । कः कामकलशं शस्यं, स्फोटयेत् ठीकरीकृते ॥ ५१ ॥ भस्मने चन्दनं को वा, दहेद् दुःप्रापमण्यथ । लोहार्थी को महाम्भोधौ, नौभंगं कर्त्तुमिच्छति ॥ ५२ ॥ आभट्ठो अ जिणेणं, जाइजरामरणविप्पमुक्केणं । नामेण य गुत्तेण य, सव्वण्णू सव्वदरिसीणं ॥ ५३ ॥ हे इंदभूइ! गोअम!, सागयमुत्ते जिणेण चिंतेइ । नामं पि मे विआणेइ, अहवा को मं न याणेइ ॥ ५४ ॥ स्वागतप्रच्छने दध्यौ, मिष्टैर्वाक्यैः कथं प्रिये । कपित्थं तत्र यच्छीघ्रं, वातेन पतति द्रुमात् ॥ ५५ ॥ न ते गो १ मुद्ग २ माणिक्य ३–घट ४ वल्ली ५ जना ६ नु ये । साध्या गोपां १ बु २ माणिक्य–विद् ३ यष्टि ४ कर ५ वाक्चयैः ६ ॥ ५६ ॥ जइ वा हिअयगयं मे, संसयमन्निज्ज अहव छिंदिज्जा । तो हुज्ज विम्हओ मे, इअ चिंतंतो पुणो भणिओ ॥ ५७ ॥ किं मन्नि अत्थि जीवो, उदाहु नत्थि त्ति संसओ तुज्झ । वेअपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ ५८ ॥ समुद्रो मथ्यमानः किं, गङ्गापूरोऽथवा किमु । आदिब्रह्मध्वनिः किं वा, वीरवेदध्वनिर्विभौ ॥ ५९ ॥

वेदपदानि च—'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञाऽस्तीति' तत्र विज्ञानमेव–चैतन्यमेव नीलादिरूपत्वाद्विज्ञानघनः स एवैतेभ्यः–पृथिव्यादिरूपेभ्यो भूतेभ्यः समुत्थाय–उत्पद्य पुनस्तान्येवानुविनश्यति–तत्रैव चाव्यक्तरूपतया सल्लीनं भवतीति भावः, तथा मृत्वा पुनर्जन्म प्रेत्येत्युच्यते तत्संज्ञा नास्ति–न परलोकसंज्ञाऽस्तीति भाव, इत्येषां पदानामर्थस्तव चेतसि विपरिवर्त्तते तदयुक्तम्, यतोऽयमर्थः–विज्ञानेति ज्ञानोप-

योगदर्शनोपयोगरूपं विज्ञानं ततोऽनन्यत्वादात्मा विज्ञानघनः प्रतिप्रदेशमनन्तविज्ञानपर्यायसङ्घातात्मकत्वात्, स एवै-तेभ्यो भूतेभ्यः क्षित्युदकादिभ्यः कथञ्चिदुत्पद्येति, घटविज्ञानपरिणतो हि आत्मा घटाद् भवति तद्विज्ञानस्य सा-पेक्षत्वात् अन्यथा निरालम्बनतया मिथ्यात्वप्रसक्तेः, एवं सर्वत्र भाव्यम् । पुनस्तान्येवेत्यादि तेषु भूतेषु व्यवहिते-ष्वपगतेषु चात्मापि तद्विज्ञानघनात्मनोपरमतेऽन्यविज्ञानात्मनोत्पद्यते यदि वा सामान्यरूपतयाऽवतिष्ठते इति, न प्रेत्य संज्ञास्ति–न प्राक्तनीघटादिसंज्ञाऽवतिष्ठते साम्प्रतविज्ञानोपयोगनिश्रितत्वादिति जीवसत्ता । 'तथा स वै अय-मात्मा ज्ञानमयः' इत्यादि, 'ददद दमो दानं दया इति दकारत्रयं यो वेत्ति स जीवः' इत्यादिनापि तथा विद्यमान-भोक्तृकमिदं शरीरं भोग्यत्वादोदनादिवदित्याद्यनुमानेनापि, तथा—क्षीरे घृतं तिले तैलं, काष्ठेऽग्निः सौरभं सुमे । चन्द्रकान्ते सुधा यद्व–त्तथात्माङ्गगतः पृथक् ॥ ५९ ॥ अतोऽस्ति जीवः । ततः–'छिन्नंमि संसयंमी, जिणेण जरमर-णविप्पमुक्केणं । सो समणो पव्वइओ, पंचहिं सह खंडिअसएहिं ॥ ६० ॥ ततः उपज्जए वा विगमए वा धुवए वेति त्रिपदीमवाप्य द्वादशाङ्गीं स विहितवान् ॥ इति प्रथमगणधरः ॥ १ ॥ तं च प्रव्रजितं श्रुत्वा, दध्यौ तद्बान्धवोऽ-परः । अपि जातु द्रवेदद्रि–र्ज्वलेज्जलमपि क्वचित् ॥ १ ॥ मृगाङ्कमण्डलाज्जातु, जायतेऽङ्गारवर्षणम् । वह्नेरपि भवे-द्युर्वा, ज्वालाः प्रालेयशीतलाः ॥ २ ॥ पीयूषादपि मृत्युः स्या–ज्जीवितव्यं विषादपि । चलेत्कुलाचलौघोऽपि, स्या-द्वायुरपि निश्चलः ॥ ३ ॥ स्याद्व्यत्यासोऽपि रोदस्योः, शुष्येन्नीराकरोऽपि हि । पतेज्ज्योतिर्गणोऽप्येष, भूर्वा पाताल-माविशेत् ॥ ४ ॥ मेरुरप्युद्भ्रियेतात्र, हारयेन्न तु बान्धवः । अश्रद्धया पुनर्व्यक्त्या, पप्रच्छ स स्वयं जनान् ॥ ५ ॥

पञ्चभिः कुलकम् ॥ ततः पुनरपि—तं पवइअं सोउं, विइओ आगच्छई अमरिसेणं । गच्छामि णमाणेमी, पराजिणित्ता ण तं समणं ॥ ६ ॥ छलिओ छलाइणा सो, मन्ने वा इंदजालिओ वा वि । को जाणइ कह वत्तं, इत्ताहे वट्टमाणी से ॥ ७ ॥ सो पक्खंतरमेगं, पि जाइ जइ मे तओमि तस्सेव । सीसत्तं हुज्ज गओ, वुच्छं पत्तो जिणसगासं ॥ ८ ॥ आभट्ठो अ जिणेणं, जाइजरामरणविप्पमुक्केणं । नामेण य गुत्तेण य, सवन्नू सवदरिसीणं ॥ ९ ॥ हे अग्गिभूइ गोअम!, सागयमुत्ते जिणेण चिंतेइ । नामं पि मे विआणइ, अहवा को मं न याणेइ ॥ १० ॥ जइ वा हिअयगयं सं—सयमन्निज्ज अहव छिंदिज्जा । तो हुज्ज विम्हओ मे, इअ चिंतंतो पुणो भणिओ ॥ ११ ॥ किं मन्नि अत्थि कम्मं, उदाहु नत्थि त्ति संसओ तुज्झ । वेअपयाण अ अत्थं, न याणसी तेसिमो अत्थो ॥ १२ ॥ वेदपदानि च—'पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं, उतामृतत्वस्येशानो यदन्नेनातिरोहति, यदेजति यन्नेजति यद्दूरे यदु अंतिके यदन्तरस्य सर्वस्य यदु सर्वस्यास्य बाह्यतः' इति । तत्र पुरुष—आत्मैव एवकारः पुरुषातिरिक्तस्य कर्मप्रकृतीश्वरादिव्यवच्छेदार्थं इदं सर्वं प्रत्यक्षं वर्त्तमानं चेतनाचेतनस्वरूपं ग्निमिति—वाक्यालङ्कृतौ यद्भूतं यदतीतं यच्च भाव्यं भविष्यन्मुक्तिसंसारावपि स एव पुरुषः, 'उते'त्यादि उतशब्दः—समुच्चये अमृतत्वस्यामरणभावस्य मोक्षस्येशानो विभुः, लुप्तचकारनिर्देशाद्यच्चान्नेनाहारेणातिरोहति—अतिशयेन वृद्धिमुपैति, तथा यदेजति—चलति पश्वादि, यन्नेजति—न चलति पर्वतादि, यद्दूरे मेर्वादि, यत्समीपे, उशब्दोऽवधारणे, तथा यदन्त—र्मध्येऽस्य चेतनाचेतनस्य, यदेवास्य बाह्यं तत्सर्वं पुरुष एवेत्यतस्तदतिरिक्तस्य कर्मणः किल सत्ता दुःश्रद्धेयेति तव प्रतिभासते । तथा न प्रत्यक्षादिगोचरं कर्म,

कथं वाऽमूर्त्तस्यात्मनो मूर्त्तेन कर्मणाऽनुग्रहोपघातावपि; न खलु नभसश्चन्दनलकुटादिना तौ भवत, इति कर्माभावं-स्तदसम्यग्, यत एतेपामयमभिप्रायः तथा हि—इह तावत्रिविधानि वेदपदानि, कानिचिद्विधिपराणि कानिचि-त्त्वनुवादपराणि कानिचिचार्थवादपराणि, तत्रार्थवादोऽपि स्तुतिनिन्दार्थवादभेदेन द्वेधा क्रमेणोदाहरणानि यथा स्वर्गकामोऽग्निहोत्रं जुहुयादिति, द्वादशमासाः संवत्सर इति, स सर्वविद्यस्यैप महिमेत्यादि, एप वः प्रथमो यज्ञोऽग्नि-ष्टोमा योऽनेनानिष्ट्वाऽन्येन यजते स गर्भमभ्यपतेदित्यादि, तथा पुरुप एवेदमित्यादीन्यपि पुरुपस्तुतिपराणि यद्वा जा-त्यादिमदत्यागायाद्वैतभावनाप्रतिपादकानि न कर्मसत्ताप्रतिपेधकानि, न हि खल्वकर्मण आत्मनः कर्तृत्वं युज्यते, एकान्तशुद्धतया प्रवृत्तिनिबन्धनाभावाद् गगनवदिति, तथाऽऽगमानुमानेऽपि 'पुण्यः पुण्येन पापः पापेन कर्मणेति' भुवनोदरवर्त्तिसौभाग्यभाग्यविरूपतादरिद्रतादिसमग्रमपि वस्त्वविकलकारणजन्यं कार्यत्वाद् घटपटादिवदिति, तथाऽ-मूर्त्तस्यात्मनो मूर्त्तकृतावुपघातानुग्रहावविरुद्धावेव विज्ञानस्य मदिरापानौपधादिभिस्तद्दर्शनात्, इत्येवं वेदार्थं जिनमु-खादाकर्ण्याग्निभूतिरपि पञ्चशतच्छात्रैः सह प्रव्रजितः ॥ इति द्वितीयो गणधरः ॥ २ ॥ ते पव्वइए सोउं, तइओ आगच्छई जिणसगासं । वच्चामि ण वंदामी, वंदित्ता पज्जुवासामि ॥ १ ॥ सीसत्तेणोवगया, संपयमिंदग्गिभूइणो जरस । तिहुअणकयप्पणामो, स महाभागोऽभिगमणिज्जो ॥ २ ॥ तदभिगमवंदणनमं—सणाइणा हुज्ज पूअपावो हं । वुच्छिन्नसंसओ वा, वुत्तुं पत्तो जिणसगासं ॥ ३ ॥ आभट्ठो अ जिणेणं, जाइजरामरणविप्पमुक्केणं । नामेण य गु-त्तेण य, सवन्नू सवदरिसीणं ॥ ४ ॥ तज्जीवतस्सरीरं ति, संसओ नवि अ पुच्छसे किंचि । वेअपयाणय अत्थं न

याणसी तेसिमो अत्थो ॥ ५ ॥ वेदपदानि च–'विज्ञानघनेत्यादितो न प्रेत्यसंज्ञाऽस्तीति' तथा 'सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि शुद्धोऽयं पश्यन्ति धीरा यतयः संयतात्मान' इत्यादीनि च तत्र 'विज्ञाने'त्यादि पूर्ववत्परं न प्रेत्य संज्ञास्तीति–न देहात्मनोर्भेदसंज्ञाऽस्ति भूतसमुदायमात्रधर्मत्वाच्चैतन्यस्य ततश्चामूनि किल शरीरातिरिक्तात्मोच्छेदपराणि सत्येनेत्यादीनि तदतिरिक्तात्मप्रतिपादकानीति संशयस्ते तदपि न, विज्ञानेत्यादेरपि देहभिन्नात्मप्रतिपादकत्वाद् व्याख्या तु पूर्ववदिति ॥ छिन्नंमि संसयंमी, जिणेण जरमरणविप्पमुक्केणं । सो समणो पव्वइओ, पंचहिं सह खंडियसएहिं ॥ ६ ॥ इति तृतीयो वायुभूतिः ॥ ३ ॥ किं मन्नि पंचभूआ अत्थि नत्थीति संसओ तुज्झ । वेअपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥१॥ वेदपदानि–'स्वप्नोपमं वै सकलं इत्येष ब्रह्मविधिरञ्जसा विज्ञेय' इत्यादीनि भूतोच्छेदपराणि, तथा 'पृथ्वी देवता आपो देवता' इत्यादि 'द्यावापृथिवी' इत्यादि च भूतसत्तापराणि, इति तत्संशयकारणनिराकरणाय भगवानाह–वेदार्थं यथा 'स्वप्नोपमं वै' इत्यादीनि अध्यात्मचिन्तायां कनककामिन्यादिसंयोगस्यानित्यत्वाद्विपाककटुकत्वाच्च तदासक्तिनिवृत्तिपराणि न तु तदभावप्रतिपादकानि, पृथिवी देवतेत्यादीनि तु तथापि प्रतीतानि ॥ इति चतुर्थो व्यक्तः ॥४॥ किं मन्नि जारिसो इह, भवंमि सो तारिसो परभवे वि । वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ वेदपदानि च–'पुरुषो वै पुरुषत्वमश्नुते पशवः पशुत्वं' इत्यादीनि भवान्तरसादृश्यप्रतिपादकानि, तथा 'शृगालो वै एष जायते यः स पुरीषो दह्यत' इत्यादीनि तद्वैसदृश्यप्रतिपादकानीति संशयनिदानम्, न खलु शालिबीजाद् गोधूमाङ्कुरप्रसूतिः कारणानुरूपस्यैव कार्यस्य दर्शना-

दिति युक्तिश्च, तत्र भगवानाह—पुरुषः खल्विह जन्मनि स्वभावेन मार्द्दवार्जवादिगुणयुक्तो मनुष्यनामकर्म बद्धा मृतः
सन् पुरुषत्वमश्नुते न तु नियमत, एवं पशवोऽपि, जीवगतिविशेषस्य कर्मायत्तत्वात्, तथा गोमयादिप्रभववृश्चि-
कादिकार्यवैसदृश्यमपि ॥ इति पञ्चमः सुधर्मा ॥ ५ ॥ किं मन्नि बंधमुक्खो, अत्थि नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ वेदपदानि च—'स एष विगुणो विभुर्न बध्यते संसरति वा
न मुच्यते मोचयति वा न वा एष बाह्यं अभ्यन्तरं वा वेद' इत्यादि, तथा 'न ह वै सशरीरस्य प्रियाप्रिययोरप्र-
तिहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत' इत्यादि, तत्र स एषोऽधिकृतो जीवो विगुणः—सत्त्वादि-
गुणरहितो विभुः—सर्वगतो न बध्यते—पुण्यपापाभ्यां न युज्यते, संसरति वेत्यत्र नेत्यनुवर्त्तते, न मुच्यते—कर्मणा न
वियुज्यते बन्धाभावात्, नाप्यन्यं मोचयत्यकर्तृकत्वात्, न वा एष बाह्यं—आत्मभिन्नं महदहङ्कारादि अभ्यन्तरं—स्वरू-
पमेव वेदेति—जानाति प्रकृतिधर्मत्वाद् ज्ञानस्येति बन्धमोक्षानुपपत्तिः। तथा 'न ह वै से'त्यादि तत्र न ह—नैवेत्यर्थः,
सशरीरस्येति—बाह्याध्यात्मिकशरीरवतः प्रियेत्यादि सुखदुःखाभावोऽस्ति, अशरीरं वा वसन्तमिति—मुक्तं प्रियाप्रिये—
सुखदुःखे इत्यादीनि मोक्षसद्भावावेदकानि, ततः कथं निश्चयेन बन्धमोक्षाविति तन्मतिस्तत्र भगवानाह—स एषे-
त्यादि विगुणो—विगताश्छाद्मस्थिकज्ञानादिगुणा यस्य विभुः—केवलज्ञानात्मना सर्वगतः न बध्यते मिथ्यादर्शनादि-
कारणाभावान्मनुष्यादिभवेषु न संसरतीत्यादीन्यपि मुक्तात्मस्वरूपनिवेदकानि न तु बन्धाद्यभावावेदकानि ॥ इति षष्ठो
मण्डितः ॥ ६ ॥ किं मन्नि अत्थि देवा, उदाहु नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं, न याणसी तेसिमो

अत्थो ॥ १ ॥ तन्निदानं 'को जानाति मायोपमान् गीर्वाणानिन्द्रयमवरुणकुबेरादीन्' इत्यादीनि तन्निषेधकानि, 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्लोकं गच्छती'त्यादीनि तद्व्यवस्थापकानि, यज्ञायुधीति यज्ञ एव दुरितदारकत्वादायुधं यस्य, तत्र प्रत्युत्तरं सन्ति देवा मत्प्रत्यक्षत्वाद् भवद्भवतोऽपि आगमात्सन्त्येव, मायोपमत्वं सर्वथाऽनित्यत्वमेव न तु देवप्रतिषेधावेदकम् ॥ इति सप्तमो मौर्यपुत्रः ॥७॥ किं मन्ने नेरइआ, अत्थि नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ तन्निबन्धनं 'न ह वै प्रेत्य नरके नारकाः सन्ती'त्यादि, तथा 'नारको वै एष जायते यः शूद्रान्नमश्नाती'त्यादि, तत्र न ह वै प्रेत्येत्यादौ नारकाभावः शङ्क्यते भवता तदयुक्तं यतोऽयमर्थः—न खलु प्रेत्य—परलोके मेर्वादिवत् शाश्वताः केचनाप्यवस्थिता नारकाः सन्ति, किन्तु य इहोत्कृष्टं पापमर्जयति, स इतो गत्वा प्रेत्य नारको भवत्यतः केनापि तत्पापं न विधेयम्, येन प्रेत्य नारकैर्भूयते इति, शेषं तु सुबोधमेव ॥ इति अष्टमोऽकम्पितः ॥८॥ किं मन्नि पुन्नपावं, अत्थि नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ एतन्निदानं 'पुरुष एवेदं ग्निं सर्वं'मित्यादि 'पुण्यः पुण्येने'त्यादि तत्रोत्तरं प्राग्वत् ॥ इति नवमोऽचलभ्राता ॥ ९ ॥ किं मन्ने परलोगो, अत्थी नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ 'विज्ञानघन एवैतेभ्यो भूतेभ्यो' इत्यादिनिषेधकं 'नारको वै एष जायते' इत्यादि व्यवस्थापकं उत्तरं प्राग्वत् ॥ इति दशमो मेतार्यः १० ॥ किं मन्ने निव्वाणं, अत्थी नत्थित्ति संसओ तुज्झ । वेयपयाण य अत्थं, न याणसी तेसिमो अत्थो ॥ १ ॥ अत्र वेदपदानि—'जरामर्यं वा यदग्निहोत्रं' तथा 'सैषा गुहा दुरवगाहा' तथा 'द्वे

ब्रह्मणी वेदितव्ये परमपरं च तत्र परं सत्यज्ञानमनन्तं ब्रह्मेति' एतेषां चायमर्थस्तव मतौ प्रतिभासते अग्निहोत्र-
क्रिया तावद्भूतवधोपकारभूतत्वात् शबलकारा अग्निहोत्रं च जरामर्यमिति सदा करणमित्युक्तं तद्व्यतिरिक्तं च
कालान्तरं नास्ति यस्मिन्नपवर्गप्रापणक्रियारम्भस्तस्मात्साधनाभावान्नास्ति मोक्ष इति मोक्षाभावप्रतिपादकानि प-
दानि शेषाणि तु तदस्तित्वख्यापकानीति संशयः, परं त्वमर्थं न जानासि तेषामयमर्थः जरामर्यं वेति वा शब्दोऽ-
प्यर्थे ततश्च यावज्जीवमपि अग्निहोत्रं कुर्यात् न तु नियमत एव ततश्चापवर्गप्रापणक्रियारम्भकालास्तित्वमनिवार्य-
मित्यादि ॥ एकादशः प्रभासः ११ ॥ एवं जिनमुखाच्छ्रुत्वा, वेदार्थमखिला अपि । द्विजोत्तमाः परिव्रज्य, सम्प्रापुः
परमं पदम् ॥ १ ॥ एवं चतुश्चत्वारिंशच्छतानि द्विजाः प्रव्रजितास्तत्र मुख्यानामेकादशानां त्रिपदीपूर्वकं एकादशा-
ङ्गचतुर्दशपूर्वरचना गणधरपदप्रतिष्ठा च, ते चैवं तत्र श्रीगौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि,
प्रणिपत्य पृच्छा च निषद्योच्यते, प्रणिपत्य पृच्छति गौतमस्वामी कथय भगवन्! तत्त्वं, ततो भगवानाचष्टे 'उप्पन्नेइ
वा' पुनस्तथैव पृष्टे प्राह 'विगमेइ वा' पुनरप्येवंकृते वदति 'धुवेइ वा' एतास्तिस्रो निषद्याः । आसामेव सकाशा-
द्यत्सत्तदुत्पादव्ययध्रौव्ययुक्तं अन्यथा वस्तुनः सत्ताऽयोगादित्येवं तेषां गणभृतां प्रतीतिर्भवति, ततश्च ते पूर्वभव-
भावितमतयो बीजबुद्धित्वाद् द्वादशाङ्गमुपरचयन्ति, ततो भगवांस्तेषां तदनुज्ञां करोति, शक्रश्च दिव्यं वज्रमय-
स्थालं दिव्यचूर्णानां भृत्वा त्रिभुवनस्वामिनः सन्निहितो भवति, ततः स्वामी रत्नमयसिंहासनादुत्थाय परिपूर्णां चूर्ण-
मुष्टिं गृह्णाति, ततो गौतमस्वामिप्रमुखा एकादशापि गणधरा ईषदवनततनवः परिपाट्या तिष्ठन्ति, ततो देवास्तू-

र्यध्वनिगीतशब्दादिनिरोधं विधाय तूष्णीकाः शृण्वन्ति, ततो भगवान् पूर्वं तावदेतद्भणति—गौतमस्य द्रव्यगुणपर्यायैस्तीर्थमनुजानामीति, चूर्णांश्च तन्मस्तके क्षिपति, ततो देवा अपि चूर्णपुष्पगन्धवर्षं तदुपरि कुर्वन्ति, गणं च भगवान् सुधर्मस्वामिनं धुरि व्यवस्थाप्यानुजानाति ॥ इति गणधरवादः ॥ १२१ ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे अट्ठियगामं नीसाए पढमं अंतरावासं वासावासं उवागए, चंपं च पिट्ठिचंपं च नीसाए तओ अंतरावासे वासावासं उवागए, वेसालिं नगरिं वाणिअगामं च नीसाए दुवालस अंतरावासे वासावासं उवागए, रायगिहं नगरिं नालंदं च बाहिरियं नीसाए चउद्दस अंतरावासे वासावासं उवागए, छ मिहिलियाए, दो भद्दियाए, एगं आलंभियाए, एगं सावत्थीए, एगं पणिअभूमीए, एगं पावाए मज्झिमाए हत्थिवालस्स रन्नो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२२ ॥

व्याख्या—तेणं कालेणमित्यादितो अपच्छिमं अंतरावासं वासावासं उवागए त्ति पर्यन्तम्, तत्रास्थिकग्रामनिश्रया प्रथममन्तरावासं—वर्षारात्रं वासावासं ति वर्षासु वसनमुपागतः १ अंतरावास इति वर्षारात्रस्याख्या उक्तं च—'अंतरघणसामलो भयवं ति' वर्षारात्रघनश्यामल इत्यर्थः, ततश्चम्पां पृष्टिचम्पां च निश्रया—ऽवलम्ब्य त्रयो वर्षारात्राः ३, एवं वैशालीं वाणिज्यग्रामं च निश्रया द्वादश वर्षारात्राः १२, राजगृहादुत्तरस्यां दिशि वाहिरिका—शाखापुरविशेषस्तत्र च-

तुर्दश १४, षट् मिथिलापुरि ६, द्वौ भद्रिकापुर्यां २, एक आलम्भिकायां १, एकः श्रावस्त्यां १, एकः प्रणितभूमौ १— वज्रभूम्याख्यानार्यदेशे इत्यर्थः, एकश्चापश्चिमो वर्षारात्रो मध्यमापापायां १ हस्तिपालस्य राज्ञः रज्जुका—लेखकास्तेषां सभा—अपरिभुज्यमाना करणशाला जीर्णशुल्कशाला तस्यामित्यर्थः, पश्चिमशब्दः पर्यन्तवाची मङ्गलार्थं चाऽपश्चिम इत्युक्तं। प्राक्किल तस्या नगर्या अपापेति नामासीत् देवैस्तु पापेत्युक्तं, यतो भगवांस्तत्र कालगतः। छद्मस्थकाले जिनकाले च सर्वसङ्ख्यया द्विचत्वारिंशद्वर्षारात्राः ॥ १२२ ॥

तत्थ णं जे से पावाए मज्झिमाए हत्थिवालस्स रन्नो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२३ ॥

व्याख्या—तत्थ णं जे से इत्यादित उवागए त्ति पर्यन्तम्, तत्र जे से त्ति यस्मिन् अन्तरावासे—वर्षारात्रे ॥१२३॥

तस्स णं अंतरावासस्स जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तियबहुले तस्स णं कत्तियबहुलस्स पण्णरसी पक्खेणं जा सा चरमा रयणी, तं रयणिं च णं समणे भगवं महावीरे कालगए विइक्कंते समुज्जाए छिन्नजाइजरामरणबंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे सव्वदुक्खप्पहीणे, चंदे नामं से दोच्चे संवच्छरे, पीइवद्धणे मासे, नंदिवद्धणे पक्खे, अग्गिवेसे नामं से दिवसे उवसमित्ति पवुच्चई, देवानंदा नामं सा रयणी निरतित्ति पवु-

च्चई, अच्चे लवे, मुहुत्ते पाणू, थोवे सिद्धे, नागे करणे, सव्वट्ठसिद्धे मुहुत्ते, साइणा नक्खत्तेणं जोगमुवागएणं कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १२४ ॥

व्याख्या—तस्स णमित्यादितो जाव सव्वदुक्खप्पहीणे त्ति पर्यन्तम्, तत्र पक्खेणं ति दिवसे, चरमा रजनी—दिनापेक्षया पश्चाद्भाविनी रात्रिः अमावास्यारात्रिरित्यर्थः, कालगतः—कार्यस्थितिभवस्थित्योः कालाद्गतः, व्यतिक्रान्तः—संसारात् समुज्जाए त्ति सम्यग् ऊर्ध्वं यातः समुद्यातः न सुगतादिवत्पुनर्भवावतारी—"ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम्। गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥१॥" इति तद्वचः। छिन्नं जात्यादीनां बन्धनहेतुभूतं कर्म्म येन, सिद्धः—साधितार्थः, बुद्धो—ज्ञः, मुक्तो—भवोपग्राहिकर्म्मांशेभ्यः, अन्तकृत् सर्वदुःखानां, परिनिर्वृतः—कर्म्मकृतसकलसन्तापविरहात्, किमुक्तं भवतीत्याह—सर्वाणि दुःखानि शारीरमानसानि प्रहीणानि यस्य स तथेति। चंदे नामं से इत्यादि, युगे हि पञ्च संवत्सराः तत्र तृतीयः पञ्चमश्चाभिवर्द्धिताख्यः शेषास्त्रयश्चन्द्राख्याः, यदागमः—'चंदे १ चंदे २ अभिवड्ढिए अ ३ चंदे ४ भिवड्ढिए ५ चेव। पंचसहिअं जुगमिणं, पन्नत्तं वीअरागेहिं ॥ १ ॥" स च द्वितीयश्चन्द्रसंवत्सरः तस्य प्रमाणं त्रीणि शतानि चतुष्पञ्चाशदधिकान्यहोरात्राणि द्वादश च षष्टिभागा दिवसस्य ३५४$\frac{12}{60}$ कार्त्तिकस्य हि प्रीतिवर्द्धन इति नाम यतः—'अभिनन्दनः १ सुप्रतिष्ठो २ विजयः ३ प्रीतिवर्द्धनः ४ श्रेयान् ५ शिशिरः ६ शोभनो ७ हैमवान् ८ वरान्तः ९ कुसुमसम्भवो १० निदाघो ११ वनविरोधी १२ चेति'

व्याख्या—जं रयणिं च णमित्यादित उज्जोविआ याविहोत्थ त्ति पर्यन्तम् सुगमम् ॥ १२५ ॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे सा णं रयणी बहूहिं देवेहिं देवीहि य ओवयमाणेहिं उप्पयमाणेहि य उप्पिंजलगमाणभूया कहकहगभूया याविहुत्था ॥ १२६ ॥

व्याख्या—जं रयणिमित्यादितः कहकहगभूआ याविहुत्थ त्ति पर्यन्तम् प्राग् व्याख्यातम् ॥ १२६ ॥

जं रयणिं च णं समणे भगवं महावीरे कालगए जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं जिट्ठस्स गोयमस्स इंदभूइस्स अणगारस्स अंतेवासिस्स नायए पिज्जबंधणे वुच्छिन्ने अणंते अणुत्तरे जाव केवलवरनाणदंसणे समुप्पन्ने ॥ १२७ ॥

व्याख्या—जं रयणिं च णमित्यादितः केवलवरनाणदंसणे समुप्पन्ने त्ति पर्यन्तम्, तत्र ज्येष्ठस्यान्तेवासिनो ज्ञानदर्शने समुत्पन्ने इति योज्यम्, गोत्रेण गौतमस्य नाम्ना इन्द्रभूतेः ज्ञातजे—श्रीमहावीरविषये पिज्जबंधणे त्ति स्नेहबन्धने व्यवच्छिन्ने—त्रुटिते सति केवलमुत्पन्नम् । तदुत्पत्तिव्यतिकरस्त्वेवं स्वनिर्वाणसमये देवशर्म्मणः प्रतिबोधनाय क्वापि ग्रामे स्वामिना प्रेषितः, तं प्रतिबोध्य पश्चादागच्छन् श्रीवीरनिर्वाणं श्रुत्वा वज्राहत इव शून्यः क्षणं तस्थौ, बभाण

नव मल्लई नव लेच्छई कासीकोसलगा अट्ठारस वि गणरायाणो अमावासाए पाराभोयं पोसहोववासं पट्ठविंसु गए से भावुज्जोए दव्वुज्जोयं करिस्सामो ॥ १२८ ॥

व्याख्या—जं रयणिं च णमित्यादितो दव्वुज्जोअं करिस्सामो त्ति पर्यन्तम् तत्र नव मल्लकिजातीयाः काशीदेशस्य राजानः, नव लेच्छकिजातीयाः कोशलदेशस्य राजानः, ते च कार्यवशात् गणं मेलापकं कुर्वन्तीति गणराजानोऽष्टादश ये चेटकमहाराजस्य भगवन्मातुलस्य सामन्ताः श्रूयन्ते, ते तस्याममावास्यायां पारं–पर्यन्तं भवस्याभोगयति–पश्यति यः स पाराभोगः–संसारसागरपारप्रापणप्रवणस्तं, अथवा पारं–पर्यन्तं यावदाभोगो—विस्तारो यस्य स पाराभोगोऽष्टप्राहरिकः प्रभातं यावत् सम्पूर्ण इत्यर्थः, तं तथाविधं पौषधोपवासं पट्ठविंसु त्ति प्रस्थापितवन्तः–कृतवन्तः। क्वचित् वाराभोए त्ति पाठस्तत्र द्वारमाभोग्यतेऽवलोक्यते यैस्ते द्वाराभोगाः–प्रदीपास्तान् कृतवन्तः आहारत्यागपौषधरूपमुपवासं चाकार्षुरिति वृद्धव्याख्या, एतदर्थानुपात्येव चोत्तरसूत्रम्, गतः स भावोद्योतो ज्ञानरूपो–ज्ञानज्ञानिनोरभेदात् ज्ञानमयो भगवान् गतो–निर्वाणः, अतो द्रव्योद्योतं प्रदीपरूपं करिष्याम इति हेतोस्तैर्दीपाः प्रवर्त्तिताः, ततः प्रभृति दीपोत्सवः संवृत्तः, कार्त्तिकशुक्लप्रतिपदि च श्रीगौतमस्य केवलमहिमा देवैश्चक्रे अतस्तत्रापि जनप्रमोदः, नन्दिवर्द्धननरेन्द्रश्च भगवतोऽस्तं श्रुत्वा शोकार्त्तः सन् सुदर्शनया भगिन्या सम्बोध्य सादरं स्ववेश्मनि द्वितीयायां भोजितः, ततो भ्रातृद्वितीया पर्वरूढिः ॥ १२८ ॥

जं रयणिं च णं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे, तं रयणिं च णं खुद्दाए भा-
सरासी नाम महग्गहे दो वाससहस्सट्ठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं
संकंते ॥ १२९ ॥

व्याख्या—जं रयणिं च णमित्यादितः जम्मनक्खत्तं संकंते त्ति पर्यन्तम्, तत्र क्षुद्रात्मा क्रूरस्वभावः भस्मराशि-
नामा त्रिंशत्तमो महाग्रहः, ग्रहनामानि चैवम्—'अङ्गारको १ विकालको २ लोहिताक्षः ३ शनैश्चर ४ आधुनिकः ५
प्राधुनिकः ६ कणः ७ कणकः ८ कणकणकः ९ कणवितानकः १० कणसन्तानकः ११ सोमः १२ सहितो १३ ऽश्व-
सेनः १४ कार्योपगः १५ कर्बुरको १६ ऽजकरको १७ दुन्दुभकः १८ शङ्खः १९ शङ्खनाभः २० शङ्खवर्णाभः २१
कंसः २२ कंसनाभः २३ कंसवर्णाभो २४ नीलो २५ नीलावभासो २६ रूपी २७ रूपावभासो २८ भस्मो २९ भ-
स्मराशिः ३० तिलः ३१ तिलपुष्पवर्णो ३२ दको ३३ दकवर्णः ३४ कायो (यों) ३५ वन्ध्य ३६ इन्द्राग्नि ३७ धूम-
केतु ३८ हरिः ३९ पिङ्गलो ४० बुधः ४१ शुक्रो ४२ बृहस्पती ४३ राहु ४४ रगस्ति ४५ माणवकः ४६ काम-
स्पर्शो ४७ धुरः ४८ प्रमुखो ४९ विकटो ५० विसन्धिकल्पः ५१ प्रकल्पो ५२ जटालो ५३ ऽरुणो ५४ ऽग्निः ५५
कालो ५६ महाकालः ५७ स्वस्तिकः ५८ सौवस्तिको ५९ वर्द्धमानकः ६० प्रलम्बो ६१ नित्यालोको ६२ नित्यो-
द्योतः ६३ स्वयंप्रभो ६४ ऽवभासः ६५ श्रेयस्करः ६६ क्षेमंकर ६७ आभङ्करः ६८ प्रभङ्करो ६९ ऽरजा ७० वि-

रजा ७१ अशोको ७२ वीतशोको ७३ विततो ७४ विवस्त्रो ७५ विशालः ७६ शालः ७७ सुव्रतो ७८ ऽनिवृत्ति ७९ रेकजटी ८० द्विजटी ८१ करः ८२ करिकः ८३ राजा ८४ अर्गलः ८५ पुष्पः ८६ भावः ८७ केतुः ८८ इत्यष्टाशीतिर्ग्रहाः ।' तत्र भस्मराशिरेकनक्षत्रे द्विवर्षसहस्रस्थितिकः, यत्तु 'द्विवर्षसहस्रस्थितिरेकराशौ एतावन्तं कालमवस्थानात्' इति सन्देहविषौषध्यामुक्तं तदसङ्गतम्, 'जाव जम्मनक्खत्ताओ वइक्कंते भविस्सइ त्ति' अग्रेतनसूत्रेण सह विरोधात् तस्मादेकराशौ पञ्चचत्वारिंशद्वर्षशतस्थितिक इति बोध्यम् ॥ १२९ ॥

जप्पभिइं च णं से खुद्दाए भासरासी महग्गहे दो वाससहस्सट्ठिई समणस्स भगवओ महावीरस्स जम्मनक्खत्तं संकंते, तप्पभिइं च णं समणाणं निग्गंथाणं निग्गंथीण य नो उदिए उदिए पूआसक्कारे पवत्तई ॥ १३० ॥ जया णं से खुद्दाए जाव जम्मनक्खत्ताओ विइक्कंते भविस्सइ, तया णं समणाणं निग्गंथाणं निग्गंथीण य उदिए उदिए पूयासक्कारे भविस्सइ ॥१३१॥

व्याख्या—जप्पभिइमित्यादितः पूआसक्कारे पवत्तइ त्ति पर्यन्तम्, तथा जयाणमित्यादितो भविस्सइ त्ति पर्यन्तम् तत्र ततः प्रभृतिर्निर्ग्रन्थानां निर्ग्रन्थीनां च उदित उदितः—स्फीतः स्फीतः पूजाऽभ्युत्थानाहारदानादिभिः सत्कारो—वस्त्रादिभिर्न प्रवर्त्तते, भस्मराशौ जन्मनक्षत्रादतिक्रान्ते च पूजासत्कारौ भविष्यत इति सूत्रद्वयेन सम्बन्धः, अत एवेन्द्रेण विज्ञप्तः स्वामी, 'यत्क्षणमवस्थाय जन्मभे सङ्क्रामतो भस्मकस्य मुखं विफलय प्रभो ! येन त्वयि मोक्षंगतेऽप्र-

भविष्णुरसौ महाग्रहः पश्चात् त्वदीयतीर्थस्य बाधाकारी न स्यात्' ततः प्रभुणोक्तम् 'न खलु त्रुटितमायुः सन्धातु
जिनेन्द्रैरपि पार्यते, ततोऽवश्यं भाविनी तीर्थबाधा, कल्किनि च कुनृपे षडशीतिवर्षायुषि सङ्घोपप्लवकारिणि
भवता निगृहीते वर्षसहस्रद्वये पूर्णे मज्जन्मनक्षत्राङ्कस्मराशिग्रहे व्यतिक्रान्ते कल्किपुत्रधर्म्मदत्तराज्यादारभ्य
भविता श्रमणसङ्घस्य पूजासत्कारः' स चैवं यतः प्रायः प्रवचनपीडामुत्पादयितुं पूजाद्यपहर्तुं च कुप्रभव
एव प्रभविष्णवस्ते च धर्म्मदत्तराज्यादापञ्चमारकं प्रायोऽसम्भविनः । उक्तञ्च श्रीहेमाचार्यैः श्रीवीरचरित्रे—
"पितुः पापफलं घोरं, शक्रशिक्षां च संस्मरन् । दत्तः करिष्यति महीमर्हच्चैत्यविभूषिताम् ॥ १ ॥
पञ्चमारकपर्यन्तं, यावदेवमतः परम् । प्रवृत्तिर्जिनधर्म्मस्य, भविष्यति निरन्तरम् ॥ २ ॥" तथा शत्रुञ्ज-
यमाहात्म्येऽपि 'पञ्चमारकपर्यन्तं' इत्यादि, एवं सर्वदेशविसंवादिकुपाक्षिकबाहुल्यमपि यत्प्रवचनपीडाकारि तस्यापि
प्रायोऽसम्भव एव भाव्यः, अन्यथोदितोदितपूजाद्युपपादकसूत्रानुपपत्तिः स्यात् । ननु सत्यपि कुपाक्षिकबा-
हुल्ये सम्प्रतिवत्तदानीमपि पूजासत्कारो भवतु किं बाधकमिति चेत्? उच्यते—यो हीदानीन्तनपूजासत्कारः स च
भाविनः स्फीतपूजासत्कारस्य बीजभूतो न पुनः स्वयं स्फीतः, यतः कुपाक्षिकबाहुल्ये सत्यास्तामन्यः सुमार्गपति-
तोऽपि प्रायो भूयान् जनः कुपक्षसुपक्षयोस्तुल्यधिया प्रवर्त्तमानः पूजासत्कारं कुर्वन्नपि न द्वेषिमुद्रामतिक्रामति ।
यतः—"सुनिश्चितं मत्सरिणो जनस्य, न नाथ मुद्रामतिशेरते ते । माध्यस्थ्यमास्थाय परीक्षका ये, मणौ च काचे च
समानबन्धाः ॥ १ ॥" इति श्रीहेमाचार्यकृतद्वात्रिंशिकायाम् । अतस्तत्कृतः पूजासत्कारोऽप्यकिञ्चित्कर एव, यस्तु

अनन्यमनाः सुपक्षमेव कक्षीकृत्य प्रवर्त्तते स चाल्पीयान्न स्वयं प्रभुश्चेति तत्कृतोऽपि पूजासत्कारो न स्फीत इति बोध्यम् ॥ १३० ॥ १३१ ॥

जं रयणिं च णं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे तं रयणिं च णं कुंथू अणुद्धरी नामं समुप्पन्ना, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाणं निग्गंथीण य नो चक्खुफासं हव्वमागच्छंति, जा अट्ठिआ चलमाणा छउमत्थाणं निग्गंथाण य निग्गंथीण य चक्खुफासं हव्वमागच्छंति ॥ १३२ ॥

व्याख्या—जं रयणिं च णमित्यादितो चक्खुफासं हव्वमागच्छंति त्ति पर्यन्तम्, तत्र कौ पृथिव्यां तिष्ठतीति पृषोदरादित्वात् कुन्थुः—प्राणिजातिः, नोद्धर्त्तुं शक्यते इत्यनुद्धरी 'अणु—सूक्ष्मं शरीरं धरतीति अणुधरी' इति चूर्णिः । स्थिता इत्यस्य व्याख्यानमचलमाना इति चक्षुःस्पर्शं—दृष्टिपथं हव्वं—शीघ्रं नागच्छन्ति, कुन्थ्वादिशब्देषु स्त्रीत्वमेकवचनं च प्राकृतत्वादिति ॥ १३२ ॥

जं पासित्ता बहूहिं निग्गंथेहिं निग्गंथीहि य भत्ताइं पच्चक्खायाइं, से किमाहु भंते ! अज्जप्पभिइं संजमे दुराराहए भविस्सइ ॥ १३३ ॥

व्याख्या—जं पासित्तेत्यादितो दुराराहए भविस्सइ त्ति पर्यन्तम्, तत्र भक्तानि प्रत्याख्यातानि—अनशनं कृत-

समणस्स भगवओ महावीरस्स सुलसारेवईपामोक्खाणं समणोवासियाणं तिन्नि सयसाहस्सीओ अट्ठारससहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था ॥ १३७ ॥

व्याख्या—समणस्सेत्यादितः समणोवासिआणं संपया हुत्थ त्ति यावत् तत्र सुलसा–नागभार्या द्वात्रिंशत्पुत्रजननी, रेवती–मङ्खलिपुत्रमुक्ततेजोऽर्चिर्जातरक्तातिसारस्य भगवतस्तथाविधौषधदानेनारोग्यकर्त्री ॥ १३७ ॥

समणस्स भगवओ महावीरस्स तिन्नि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो विव अवितहं वागरमाणाणं उक्कोसिया चउद्दसपुव्विसंपया हुत्था ॥ १३८ ॥

व्याख्या—समणस्सेत्यादितः चउद्दसपुव्विसंपया हुत्थ त्ति पर्यन्तम्, तत्र अजिनानां–असर्वज्ञानां सतां सर्वज्ञतुल्यानां सर्वेऽक्षरसन्निपाता–वर्णसंयोगा ज्ञेयतया विद्यन्ते येषां ते तथा तेषां, जिन इवावितथं–सद्भूतार्थं व्याकुर्वाणानां केवलिश्रुतकेवलिनोः प्रज्ञापनायां तुल्यत्वात् ॥ १३८ ॥

समणस्स भगवओ महावीरस्स तेरस सया ओहिनाणीणं अइसेसपत्ताणं उक्कोसिया ओहिनाणीणं संपया हुत्था ॥ १३९ ॥

व्याख्या—समणस्सेत्यादितो विउलमइसंपया हुत्थ त्ति पर्यन्तम्, तत्र विपुला–बहुविधविशेषणोपेतमन्यमानवस्तुग्राहित्वेन विस्तीर्णा मतिः मनःपर्यायज्ञानं येषां, यथा घटोऽनेन चिन्तितः, स च सौवर्णः पाटलिपुत्रकः शारदः कालवर्ण इत्यादि विपुलमतयो जानन्ति, ऋजुमतीनां तु सामान्यत एव तेषामर्द्धतृतीयाङ्गुलन्यूननृक्षेत्रव्यवस्थितानां संज्ञिनां मनोमात्रग्राहकत्वं, इतरेषां तु सम्पूर्णे नृलोके, अत्र दर्शनाभावात् जाणमाणाणमित्येवोक्तम् ॥ १४२ ॥

समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुयासुराए परिसाए वाए अपराजियाणं उक्कोसिया वाइसंपया हुत्था ॥ १४३ ॥

व्याख्या—समणस्सेत्यादितो वाइसंपया हुत्थ त्ति यावत् सुगमम् ॥ १४३ ॥

समणस्स भगवओ महावीरस्स सत्त अंतेवासीसयाइं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं चउद्दस अज्जियासयाइं सिद्धाइं ॥ १४४ ॥

व्याख्या—समणस्सेत्यादितः अज्जियासयाइं सिद्धाइं ति यावत् सुगमम् ॥ १४४ ॥

समणस्स णं भगवओ महावीरस्स अट्ठ सया अणुत्तरोववाइयाणं गइकल्लाणाणं ठिइकल्लाणाणं आगमेसिभद्दाणं उक्कोसिया अणुत्तरोववाइयाणं संपया हुत्था ॥ १४५ ॥

व्याख्या—समणस्सेत्यादितोऽणुत्तरोववाइआणं संपया होत्थ त्ति पर्यन्तम् तत्र गति–दैवगतिरूपा कल्याणी

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता, साइरेगाइं दुवालसवासाइं छउमत्थपरियायं पाउणित्ता, देसूणाइं तीसं वासाइं केवलिपरियागं पाउणित्ता, बायालीसं वासाइं सामन्नपरियागं पाउणित्ता, बावत्तरिं वासाइं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयनामगुत्ते, इमीसे ओसप्पिणीए दुसमसुसमाए समाए बहुविइक्कंताए तिहिं वासेहिं अद्धनवमेहि य मासेहिं सेसेहिं, पावाए मज्झिमाए हत्थिवालस्स रन्नो रज्जुगसभाए, एगे अबीए छट्ठेणं भत्तेणं अपाणएणं साइणा नक्खत्तेणं जोगमुवागएणं पच्चूसकालसमयंसि संपलियंकनिसन्ने, पणपन्नं अज्झयणाइं कल्लाणफलविवागाइं पणपन्नं अज्झयणाइं पावफलविवागाइं छत्तीसं च अपुट्ठवागरणाइं वागरित्ता, पहाणं नाम अज्झयणं विभावेमाणे विभावेमाणे कालगए विइक्कंते समुज्जाए छिन्नजाइजरामरणबंधणे, सिद्धे बुद्धे मुत्ते अंतगडे परिनिव्वुडे सव्वदुक्खप्पहीणे ॥ १४७ ॥

व्याख्या—तेणं कालेणमित्यादितः सव्वदुक्खप्पहीणे त्ति पर्यन्तम्, तत्र छद्मस्थत्वं पालयित्वा—पूरयित्वेत्यर्थः, देसूणाइं ति सार्द्धपञ्चमासोनानि एकः—सहायविरहात् अद्वितीय एकाकी न पुनर्यथा ऋषभादयो दशसहस्रादिसा-

माश्रमणैः प्रक्षिप्तमिति क्वचित् पर्युषणाकल्पावचूर्णौ, तदभिप्रायेण श्रीवीरनिर्वाणान्नवशताशीतिवर्षातिक्रमे सिद्धान्तं पुस्तके न्यसद्भिः श्रीदेवर्द्धिगणिक्षमाश्रमणैः श्रीपर्युषणाकल्पस्यापि वाचना पुस्तके । न्यस्ता, तथा सम्प्रदायगाथाऽपि–"वलहि पुरंमि अ नयरे, देवड्ढिप्पमुहसयलसंघेहिं । पुत्थे आगमु लिहिओ, नवसयसीआउ वीराओ ॥ १ ॥" इति श्रीदेवर्द्धिगणिक्षमाश्रमणैरेतत्सूत्रं पुस्तकलिखनकालज्ञापनाय लिखितमिति भावः, अत्र–"एवं व्रतस्थितो भक्त्या, सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु, महाश्रावक उच्यते ॥ १९ ॥" इति योगशास्त्रतृतीयप्रकाशैकोनविंशतितमश्लोकवृत्तौ तु जिनवचनं च दुःषमाकालवशादुच्छिन्नप्रायमिति मत्वा भगवद्भिर्नागार्जुनस्कन्दिलाचार्यप्रभृतिभिः पुस्तकेषु न्यस्तम्, ततो जिनवचनबहुमानिना तत्पुस्तकेषु लेखनीयम्, वस्त्रादिभिरभ्यर्चनीयं चेत्यपि दृश्यते, तेनैतदपि विचार्यमेवेति । केचित्तु–"नवशताशीतिवर्षे, वीरात् सेनाङ्गजार्थमानन्दे । सङ्घसमक्षं समहं, प्रारब्धं वाचितुं विज्ञैः ॥ १ ॥" इत्याद्यन्तर्वाच्यवचनात् श्रीवीरनिर्वाणान्नवशताशीति ९८० वर्षातिक्रमे पुत्रमरणार्त्तस्य ध्रुवसेननृपस्य समाधिमाधातुमानन्दपुरे सभासमक्षं पर्युषणाकल्पो वाचयितुमारब्ध इति वदन्ति, परं तत्रेदं विचारणीयमस्ति, यतः क्वचित्त्रिनवत्यधिकनवशत ९९३ वर्षातिक्रमे ध्रुवसेननृपाग्रहादानन्दपुरे सभासमक्षं पर्युषणाकल्पवाचना जातेत्यपि दृश्यते, यदुक्तं–"वीरात्त्रिनन्दाङ्क ९९३ शरद्यचीकरत्त्वच्चैत्यपूते ध्रुवसेनभूपतिः । यस्मिन् महैः संसदि कल्पवाचनामाद्यां तदानन्दपुरं न कः स्तुते ॥ ११ ॥" इति श्रीमुनिसुन्दरसूरिकृते स्तोत्ररत्नकोशे, एतद्व्यञ्जकमपि पुस्तकवाचनातः कियता कालेन पर्षद्वाचना जातेति

क्वचित्पर्युषणाकल्पावचूर्णाविति बोध्यम्, ननु आनन्दपुरे सभासमक्षं पर्युषणाकल्पकर्षणे ध्रुवसेननृपाग्रहस्याप्रयोजकत्वमेव पश्यामो, यतः आनन्दपुरे नृपाद्यनुरोधात्पूर्वमपि पर्षद्वाचनाया विद्यमानत्वमेवास्ति, यदागमः– "जे भिक्खू अणउत्थिअं वा गारत्थियं वा पज्जोसवेंति" त्ति निशीथसूत्रम् ॥ तद्भाष्यं यथा– "पज्जोसवणाकप्पं पज्जोसवणाइ जो उ कड्ढिज्जा । गिहिअण्णतित्थिओसन्नसंजईणं च आणाई ॥ १ ॥ गिहिअण्णतित्थिओसण्णदुगा संजमगुणेहिणुववेआ । समीववाससंकाइणो अ दोसा समणिवग्गे ॥ २ ॥ दिवसउ न चेव कप्पइ, खेत्तपडुच्चा सुणिज्जमंतेसिं । असती अ व इअरेसिं दंडगमादत्थिनो दोसा ॥३॥" एतच्चूर्णिर्यथा– "पज्जोसवणा० गाहा पज्जोसवणा पुव्ववण्णिआ गिहत्थाणं अण्णतित्थिआणं गिहित्थीणं अण्णतित्थिणीणं ओसण्णाणं संजईण य जो एए पज्जोसवेति एषामग्रतः पर्युषणाकल्पः पठतीत्यर्थः, तस्स चउगुरु आणाईआ दोसा ॥१॥ गिहिअण्ण० गाहा गिहत्था गिहत्थीओ अ एअं दुगं अहवा अण्णतित्थिगा अण्णतित्थिणीओ अ अहवा ओसण्णा ओसण्णीओ अ एते दुगा संजमजोगेहिं अणुववेआ तेसिं पुरओ न कड्ढिज्जंति, अहवा एएहिं समं समीववासदोसो भवति, इत्थीसु अ संकमाइआ दोसा भवंति, संजईओ जइवि संजमगुणेहिं उववेआ भवंति तहा वि समीववासदोसो संकादोसो अ ॥२॥ दिवसउ० गाहा पज्जोसवणाकप्पो दिवसतो कड्ढिउं न चेव कप्पति, जत्थवि खेत्तं पडुच्च कड्ढिज्जति जहा–दिवसउ आणंदपुरे मूलचेइअघरे सव्वजणसमक्खं कड्ढिज्जति, तत्थ वि साहू णो कड्ढति, पासत्थो कड्ढति, साहु सुणेज्जा न दोसो, पासत्थाण वा कड्ढगस्स असति दंडगेण अब्भत्थिओ सड्ढेहिं वा ताहे दिवसओ वि कड्ढिज्जति ॥३॥ त्ति निशीथचूर्णौ, इति चेत्?

सत्यम्, यद्येवं तथाऽपि निशीथचूर्णौ कारणिकमेव साधूनां तद्वाचनमुक्तम्, ध्रुवसेननृपाग्रहात्तु कारणाद्यनपेक्ष्यैव सर्वसम्मतं पर्युषणाकल्पस्य पर्षद्वाचनं प्रवृत्तम्, यद्वा पूर्वं कारणिकमपि ग्रन्थोक्तवचनमात्रमेवासीत्परं तथाविधकारणाद्यनवकाशान्न केनापि साधुना पर्युषणाकल्पः पर्षदि वाचयितुमारब्धो, ध्रुवसेननृपाग्रहात्तु वाचितः सन् सर्वत्रापि प्रवृत्त इति सम्भाव्यते, तत्त्वं तु बहुश्रुतगम्यमिति। वायणंतरे इत्यादि, अत्र केचिद्वाचनान्तरं क्वचिदादर्शे पाठान्तरमन्यथा इति दीसइ त्ति पदानुपपत्तिरिति कृत्वा यदेवाशीतिपक्षे तदेव पाठान्तरेण त्रिनवतिपक्षेऽपि जातमित्यव्यक्तमेव व्याख्यान्ति, अव्यक्तत्वं चैतत् सूत्रं श्रीभद्रबाहुस्वामिप्रणीतं परं न क्वापि विवृतमित्यभिप्रायेणैव बोध्यम्। केचित्पुनः पुस्तकवाचनात् कियता कालेन पर्षद्वाचना जातेति वचनात्पूर्वोक्तश्रीमुनिसुन्दरसूरिवचनाच्च पुस्तकवाचनापेक्षयाऽन्या वाचना सा वाचनान्तरं, प्राकृतत्वात् षष्ठ्यर्थे सप्तमीति कृत्वा वाचनान्तरस्य पर्षद्वाचनालक्षणस्य दशमस्य वर्षशतस्यायं त्रिनवतितमः संवत्सरः कालो गच्छति, अयं भावः—नवशताशीति ९८० वर्षातिक्रमे पुस्तकवाचना प्रवृत्ता, नवशतत्रिनवति ९९३ वर्षे च पर्षद्वाचनेति। अन्ये तु केचन सन्देहविषौषध्यनुसारेण त्रिनवतियुतनवशतपक्षे त्वियता कालेन पञ्चम्याश्चतुर्थ्यां पर्युषणापर्व प्रवृत्ते इति व्याख्यान्ति, परमेतद् व्याख्यानं स्थानकवृत्तिधर्मोपदेशमालावृत्तियावत्कालकाचार्यकथाप्रभावकचरित्रपर्युषणाकल्पचूर्णिनिशीथचूर्णिप्रभृतिभिर्विसंवदति, यतः स्थानकवृत्तौ धर्मोपदेशमालावृत्तौ सर्वास्वपि कालकाचार्यकथासु प्रभावकचरित्रे च धरावासनगराधिपतेर्वज्रसिंहनाम्नो राज्ञः सुन्दरीनाम्न्याश्च तद्देव्याः पुत्रः कालकनामा कुमारो, वैराग्यात् प्रव्रजितो, युग-

॥ ३ ॥ चउमासगपडिकमणं, पक्खिअदिवसंमि चउविहो संघो । नवसयतेणउएहिं, आयरणं तं पमाणंति ॥४॥" इति गाथाचतुष्टयं तीर्थोद्गाराद्युक्तसम्मतितया प्रदर्शितं तीर्थोद्गारे च न दृश्यत इत्यपि विचारणीयम् । यद्यपि 'तेणउअनवसएहिं' इति गाथा कालसप्ततिकायां दृश्यते, परं तत्र प्रक्षेपगाथानां विद्यमानत्वेन तदवचूर्णावव्याख्यातत्वेन चेयं गाथा न सूत्रकृत्कर्तृकेति सम्भाव्यते, तत्त्वं तु एतत्सूत्रसम्यगाम्नायविच्छेद्यमित्येतत्सूत्रव्याख्याने बहुश्रुता एव प्रमाणमिति बोध्यम् ॥ १४८ ॥ ॥ इति श्रीवीरचरित्रम् ॥

अथ जघन्यमध्यमोत्कृष्टवाचनाभिः श्रीपार्श्वनाथचरित्रमाह—

तेणं कालेणं तेणं समएणं पासेणं अरहा पुरिसादाणीए पंच विसाहे होत्था, तं जहा—विसाहाहिं चुए चइत्ता गब्भं वक्कंते, विसाहाहिं जाए, विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए, विसाहाहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुन्ने केवलवरणाणदंसणे समुप्पण्णे, विसाहाहिं परिनिव्वुडे ॥ १४९ ॥

व्याख्या—तेणं कालेणमित्यादितो विसाहाहिं परिनिव्वुडे त्ति पर्यन्तम्, तत्र पुरिसादाणीए त्ति पुरुपादानीयः पुरुषश्चासौ पुरुषाकारवर्त्तितया आदानीयश्च आदेयवाक्यतया पुरुषादानीयः—पुरुषप्रधान इत्यर्थः, पुरुषविशेषणं तु पुरुष एव प्रायस्तीर्थंकर इति ख्यापनार्थं पुरुषैर्वादानीयो ज्ञानादिगुणतया स पुरुषादानीयः ॥ १४९ ॥

पोसबहुले तस्स णं पोसबहुलस्स दसमीपक्खे णं नवण्हं मासाणं बहुपडिपुन्नाणं अद्धट्ठ-माणं राइंदियाणं विइक्कंताणं पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं नक्खत्तेणं जोगमुवाग-एणं आरोग्गारोग्गं दारयं पयाया ॥ १५२ ॥

व्याख्या—तेणं कालेणमित्यादितो दारयं पयाय त्ति पर्यन्तं सुबोधम् ॥ १५२ ॥

जं रयणिं च णं पासे अरहा पुरिसादाणीए जाए, तं रयणिं च णं बहुहिं देवेहिं देवीहि य जाव उप्पिंजलगभूआ कहकहगभूआ याविहुत्था ॥ १५३ ॥

व्याख्या—जं रयणिं च णमित्यादितो हुत्थ त्ति पर्यन्तं सुगमम् ॥ १५३ ॥

सेसं तहेव, नवरं पासाभिलावेणं भाणियव्वं, जाव तं होउ णं कुमारे पासेनामेणं ॥ १५४ ॥

व्याख्या—सेसं तहेवेत्यादितः पासे नामेणमिति पर्यन्तम्, तत्र अस्मिन् गर्भस्थिते सति शयनस्थिता जननी कृष्णसर्पं सर्पन्तं पश्यति स्मेति पार्श्व इति नाम, क्रमेण यौवनप्राप्तिरेवम्—धात्रीभिरिन्द्रादिष्टाभि–र्लाल्यमानो जगत्पतिः। नवहस्तप्रमाणाङ्गः क्रमादाप च यौवनम् ॥ १ ॥ ततः कुशस्थलेशप्रसेनजित्पुत्रीं प्रभावतीनाम्नीं कन्यामागृह्य पित्रा परिणायितः, अन्येद्युर्गवाक्षस्थः स्वामी पुरीं पश्यन् बहिर्गच्छतो नागरान्नागरीश्च पुष्पोपहारभृतो दृष्ट्वा

जय जय नंदा, जय जय भद्दा, जाव जय जय सद्दं पउंजंति ॥ १५६ ॥

व्याख्या—जय जय नन्देत्यादितः पउंजंतीति पर्यन्तं प्राग्वत् ॥ १५६ ॥

पुव्विं पि णं पासस्स णं अरहओ पुरिसादाणीयस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आहोइए, तं चेव सव्वं जाव दाणं दाइयाणं परिभाइत्ता,जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले, तस्स णं पोसबहुलस्स इक्कारसीदिवसे णं पुव्वन्हकालसमयंसि विसालाए सिबियाए सदेवमणुयासुराए परिसाए, तं चेव सव्वं नवरं वाणारसिं नगरिं मज्झंमज्झेणं निग्गच्छइ, निग्गच्छित्ता जेणेव आसमपए उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता अट्ठमेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय तिहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १५७ ॥

व्याख्या—पुव्विं पि णमित्यादितः अणगारियं पव्वइए त्ति पर्यन्तं प्राग्वत् ॥ १५७ ॥

पासे णं अरहा पुरिसादाणीए तेसीइं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति तं जहा—दिव्वा वा माणुसा वा तिरिक्खजोणिया वा अणुलोमा वा पडिलोमा वा ते उप्पन्ने सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ १५८ ॥

व्याख्या—पासे णमित्यादितः अहियासेइ त्ति पर्यन्तम्, तत्र देवोपसर्गः कमठसम्बन्धी स चैवम्—स्वामी प्रव्रज्यैकदा विहरन् तापसाश्रमे कूपसमीपे न्यग्रोधाधो निशि प्रतिमया स्थितः, इतः स मेघमाली सुराधमः श्रीपार्श्वमुपद्रोतुमागत्यामर्षान्धः वेतालशार्दूलवृश्चिकादिभिरक्षुब्धं भगवन्तं वीक्ष्य विशेषेण गगनेऽन्धकारसन्निभान् मेघान् विकृत्य कल्पान्तमेघवद्वर्षितुमारेभे, विद्युच्च ब्रह्माण्डं स्फोटयन्तीव दिशो व्यानशे, क्षणादेव नासाग्रं प्राप्ते जले आसनकम्पेन धरणेन्द्रः समं महिषीभिः समागत्य फणैः प्रभुमाच्छादितवान्, अवधिना मेघमालिनमवलोक्य रे! किमिदमारब्धमिति हक्कितो, भीतः प्रभुशरणं प्रपद्य प्रणम्य च स्वस्थानं ययौ, धरणेन्द्रोऽपि नृत्यादिविधिपुरस्सरं प्रभुभक्तिं विधाय ययाविति । एवं देवादिकृतानुपसर्गान् भगवान् सम्यक् सहते--भयाभावेनेत्यादि प्राग्वत् ॥ १५८ ॥

तएणं से पासे भगवं अणगारे जाए इरियासमिए जाव अप्पाणं भावेमाणस्स तेसीइं राइंदियाइं विइक्कंताइं चउरासीइमस्स राइंदियस्स अंतरा वट्टमाणस्स जे से गिम्हाणं पढमे

मासे पढमे पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स चउत्थीपक्खेणं पुव्वन्हकालसमयंसि धायइपायवस्स अहे छट्ठेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते जाव जाणमाणे पासमाणे विहरइ ॥ १५९ ॥

व्याख्या—तएणं से पासे इत्यादितो जाव जाणमाणे पासमाणे विहरइ त्ति पर्यन्तं प्राग्वत् ॥ १५९ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठ गणा अट्ठ गणहरा हुत्था, तं जहा—'सुभे य १ अज्जघोसे य २, वसिट्ठे ३ बंभयारि य ४। सोमे ५ सिरिहरे चेव ६, वीरभद्दे ७ जसे वि य ८ ॥ १ ॥' ॥ १६० ॥

व्याख्या—पासस्स णमित्यादितो जसे वि अ त्ति पर्यन्तम्, तत्र एकवाचनिका यतिसङ्घाता गणाः, गणधराः—तन्नायकाः सूरयोऽष्टौ, आवश्यके तु दश गणा दश गणधराश्चोक्ताः, तस्मादिह स्थानाङ्गे च द्वावल्पायुष्कत्वादिकारणेन नोक्ताविति टिप्पनकेऽप्येवमेव व्याख्यानात् ॥ १६० ॥

पासस्स णं अरहओ पुरिसादाणीयस्स अज्जदिन्नपामुक्खाओ सोलससमणसाहस्सीओ उक्कोसिया समणसंपया हुत्था ॥ १६१ ॥

व्याख्या—पासस्स णं अरहओ इत्यादितः समणसंपया हुत्थ त्ति ॥ १६१ ॥

पासस्स णं अर० पुप्फचूलापामुक्खाओ अट्ठतीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १६२ ॥

व्याख्या—पासस्स णमित्यादितः अज्जिआसंपया हुत्थ त्ति ॥ १६२ ॥

पासस्स णं० सुव्वयपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ चउसट्ठिं च सहस्सा उक्कोसिया समणोवासगसंपया हुत्था ॥ १६३ ॥

व्याख्या—पासस्स णं० समणोवा० ॥ १६३ ॥

पासस्स णं० सुनंदापामुक्खाणं समणोवासियाणं तिन्नि सयसाहस्सीओ सत्तावीसं च सहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था ॥ १६४ ॥

व्याख्या—पासस्स समणो० ॥ १६४ ॥

पासस्स णं० अद्धुट्ठसया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जाव चउद्दसपुव्वीणं संपया हुत्था ॥ १६५ ॥

व्याख्या—पासस्स० चउद्द० ॥ १६५ ॥

पासस्स णं० चउद्दससया ओहिनाणीणं, दससया केवलनाणीणं, एक्कारससया वेउव्वीणं,

छस्सया रिउमईणं, दससमणसया सिद्धा, वीसं अज्जियासया सिद्धा, अद्धट्ठमसया विउलमईणं, छस्सया वाईणं, बारससया अणुत्तरोववाइयाणं ॥ १६६ ॥

व्याख्या—पास० अणुत्तरो० ॥ १६६ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स दुविहा अंतगडभूमी हुत्था, तं जहा–जुगंतकडभूमी य परियायंतकडभूमी य, जाव चउत्थाओ पुरिसजुगाओ जुगंतकडभूमी, तिवासपरियाए अंतमकासी ॥ १६७ ॥

व्याख्या—पासस्स णं अरहओ पुरिसादाणीयस्स अंतमकासी ति पर्यन्तम्, तत्र युगान्तकरभूमिः श्रीपार्श्वनाथादारभ्य चतुर्थं पुरुषयुगं यावत्सिद्धिगमः प्रवृत्तः, पर्यायान्तकरभूमौ तु केवलोत्पादात्त्रिषु वर्षेषु सिद्धिगमारम्भः ॥ १६७ ॥

तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए तीसं वासाइं अगारवासमज्झे वसित्ता, तेसीइं राइंदियाइं छउमत्थपरियायं पाउणित्ता, देसूणाइं सत्तरिवासाइं केवलिपरियायं पाउणित्ता, पडिपुन्नाइं सत्तरिवासाइं सामन्नपरियायं पाउणित्ता, एक्कं वाससयं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयणामगुत्ते इमीसे ओसप्पिणीए दूसमसुसमाए समाए बहुविइक्कंताए

जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स अट्ठमीपक्खेणं उप्पिं सम्मेयसेलसिहरंसि अप्पचउतीसइमे मासिएणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं पुव्वन्हकालसमयंसि वग्घारियपाणी कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १६८ ॥

व्याख्या—तेणमित्यादितः सव्वदुक्खप्पहीणे त्ति पर्यन्तम्, तत्र मोक्षगमने पूर्वाह्ण एव कालः पुव्वरत्तावरत्तकालसमयंसि त्ति क्वचित्पाठस्तु लेखकदोषान्मतान्तरभेदाद्वा वग्घारिअपाणि त्ति कायोत्सर्गस्थितत्वात् प्रलम्बितभुजद्वयः ॥ १६८ ॥

पासस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स दुवालस वाससयाइं विइक्कंताइं तेरसमस्स णं अयं तीसइमे संवच्छरे काले गच्छइ ॥ १६९ ॥

व्याख्या—पासस्सेत्यादितः काले गच्छइ त्ति यावत्, तत्र श्रीपार्श्वनिर्वाणादनन्तरं श्रीवीरमुक्तेः पञ्चाशदधिकवर्षशतद्वये जातत्वात् त्रिंशदधिकद्वादशशतेषु वर्षेष्वतिक्रान्तेषु वाचनेत्यादि प्राग्वत् ॥ १६९ ॥

इति श्रीपार्श्वनाथचरित्रम् ॥

अथ श्रीनेमिनाथस्य जघन्यादिवाचनाभिश्चरित्रमाह—

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी पंच चित्ते हुत्था, तं जहा—चित्ताहिं चुए, चइत्ता गब्भं वक्कंते, तहेव उवक्खेवो जाव चित्ताहिं परिनिव्वुए ॥ १७० ॥

व्याख्या—तेणमित्यादितः चित्ताहिं परिनिव्वुए त्ति पर्यन्तम्, तत्र उवक्खेवो त्ति प्रागुक्तालापकोच्चारणं चित्राभिलापेनेत्यर्थः ॥ १७० ॥

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं चउत्थे मासे सत्तमे पक्खे कत्तियबहुले, तस्स णं कत्तियबहुलस्स बारसीपक्खेणं अपराजियाओ महाविमाणाओ बत्तीसंसागरोवमट्ठिइयाओ अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे भारहे वासे सोरियपुरे नयरे समुद्दविजयस्स रन्नो भारियाए सिवादेवीए पुव्वरत्तावरत्तकालसमयंसि जाव चित्ताहिं गब्भत्ताए वक्कंते, सव्वं तहेव सुविणदंसणदविणसंहरणाइ इत्थ भाणियव्वं ॥१७१॥

व्याख्या—तेणमित्यादितो दविणसंहरणाइ इत्थ भाणिअव्वं त्ति पर्यन्तम्, तत्र क्वचित् तित्तीसं सागरोवमाइं ति दृश्यते दविणसंहरणाइ त्ति पितुर्वेश्मनि निधाननिक्षेपादि ॥ १७१ ॥

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे साव-
तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी जे से वासाणं पढमे मासे दुच्चे पक्खे साव-
णसुद्धे, तस्स णं सावणसुद्धस्स पंचमीपक्खेणं नवन्हं मासाणं बहुपडिपुन्नाणं जाव चित्ताहिं
णसुद्धे, तस्स णं सावणसुद्धस्स पंचमीपक्खेणं नवन्हं मासाणं बहुपडिपुन्नाणं जाव चित्ताहिं

नक्खत्तेणं जोगमुवागएणं आरोग्गारोग्गं दारयं पयाया। जम्मणं समुद्दविजयाभिलावेणं नेयव्वं,
जाव तं होउ णं कुमारे अरिट्ठनेमी नामेणं। अरहा अरिट्ठनेमी दक्खे जाव तिन्नि वाससयाइं
कुमारे अगारवासमज्झे वसित्ता णं पुणरवि लोयंतिएहिं जियकप्पिएहिं देवेहिं तं चेव
सव्वं भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता ॥ १७२ ॥

व्याख्या—तेणं कालेणमित्यादितः परिभाइत्त त्ति पर्यन्तम्, तत्र रिष्टरत्नमयं नेमिं दिवि उत्पतन्तं माता स्वप्ने-ऽद्राक्षीदिति अपश्चिमशब्दवत् नञ्पूर्वत्वात् अरिष्टनेमिः कुमारे त्ति अपरिणीतत्वात् अपरिणयनं त्वेवम्—एकदा यौव-नाभिमुखं नेमिनं निरीक्ष्य शिवादेवी समवदत् 'वत्स ! अनुमन्यस्व पाणिग्रहणं, पूरय चास्मन्मनोरथं' स्वामी तु 'योग्यां कन्यां विलोक्य, करिष्येऽहं पाणिग्रहणमिति प्रत्युदतरत्' । ततः पुनरप्येकदा कौतुकरहितोऽपि भगवान् अनेकराजपुत्रमित्रपरिकरितः कृष्णायुधशालायामुपागमत् । तत्र कौतुकोत्सुकैर्मित्रैर्विज्ञप्तोऽङ्गुल्यग्रे कुलालचक्र-वच्चक्रमभ्रामयद्, अनामयच्च सारङ्गं (शार्ङ्गं) धनुर्मृणालवत्, कौमोदकीं गदां च यष्टिवदुत्पाट्य निजभुजतरौ शाखाश्रियं प्रापयद्, अपूरयच्च कमलवदादाय शङ्खं, तच्छब्देन शब्दाद्वैतं जगदभवद्बधिर इव सर्वोऽपि लोकः, गजाश्वादयस्तू-

न्मूल्य स्तम्भादीनुद्धन्धनास्तत्रसुः । कृष्णस्तूत्पन्नः कोऽपि सपत्नो राज्यलिप्सुरिति चिन्तया त्वरितमायुधशालायामागात्, दृष्ट्वा च नेमिं चकितो निजबलतुलनाय नेमिं प्रति हरिराह—"आवाभ्यां वीक्ष्यते नेमे, स्वबलं हरिरित्यवक् । ततो नेमिहरी मल्लाक्षाटके जग्मतुर्द्रुतम् ॥ १ ॥" श्रीनेमिराह—"अनुचितं ननु भूलुठनादिकं, सपदि बान्धव युद्धमिहावयोः । बलपरीक्षणकृद्भुजनामनं, भवतु नान्यरणः खलु युज्यते ॥ २ ॥" द्वाभ्यां तथैव स्वीकृत्य प्रथमं हरिर्निजबाहुं प्रसारितवान्, वालितवांश्च नेमिः कमलनालवत् तद्बाहुं, निजबाहुलग्नं च कोपात्ताम्रवदनं जनार्दनं शाखावलम्बिकपिमिवान्दोलितवान्, ततो विषण्णः कृष्णो मम राज्यमेष सुखेन ग्रहीष्यतीति चिन्तातुरः स्वचित्ते चिन्तयामास । "क्लिश्यन्ते केवलं स्थूलाः, सुधीस्तु फलमश्नुते । ममन्थ शङ्करः सिन्धुं, रत्नान्यापुर्दिवौकसः ॥ १ ॥" ततो बलभद्रेण सहालोचयति 'किं विधास्यावो नेमिस्तु राज्यलिप्सुर्बलवांश्च' ततः आकाशवाणी प्रादुरभूत् 'अहो हरे ! श्रीनमिनाथेन निगदितम्—यदयं नेमिरपरिणीत एव व्रतमाप्स्यतीति न शङ्का विधेया ।' ततश्च हरी राज्यलिप्सुरवश्यं स्त्रीपरिग्रहवानेव, न चायं बलवानपि तथेति विचिन्त्य, निश्चिन्तोऽपि पुनर्निश्चयार्थं वसन्तक्रीडामिषेण जलकेलिचिकीर्षया महाग्रहतो नेमिना सह रैवतकाचलभूतलभूषणमेकमनुपमं सरः सान्तःपुरः प्राप्तः । तत्र च—"प्रणयतः परिगृह्य करे जिनं, हरिरवेशयदाशु सरोऽन्तरे । तदनु शीघ्रमसिञ्चत नेमिनं, कनकशृङ्गजलैः स च तं तथा ॥ १ ॥ जिनपपाणिपुटेन पटीयसा, सलिलसेचनमाप्य कुमोदकः । कमपि तं प्रमदं प्रमदान्वितो—ऽप्यनुबभूव न यत्र गिरां गतिः ॥ २ ॥" तथा रुक्मिणीप्रमुखगोपिकागणमपि संज्ञितवान्—

यदयं प्रभुर्निश्शङ्कक्रीडया पाणिग्रहणाभिमुखो कार्यः, ततश्च—“तावत्यः प्रमदाः सुगन्धिपयसा स्वर्णादिशृङ्गी-
भृशं, भृत्वा तन्निपतज्जलैर्युगपदप्यत्याकुलत्वं प्रभोः । प्रावर्त्तन्त विधातुमद्भुतजलक्रीडोल्लसन्मानसा–स्तावद् व्योमनि
देवगीरिति समुद्भूता श्रुता चाखिलैः ॥ २ ॥ मुग्धाः स्थः प्रमदा यतोऽमरगिरौ गीर्वाणनाथैश्चतुः–षष्ट्या योज-
नमानवक्त्रकुहरैः कुम्भैः सहसाधिकैः । बाल्येऽपि स्नपितो य एष भगवान्नाभून्मनागाकुलः, कर्तुं तस्य सुयत्न-
तोऽपि किमहो युष्माभिरीशिष्यते ॥ ४ ॥ नेमी वि तओ काउ वि, सिंचइ सलिलेहिँ ताउ सुरभीहिं । लीला-
कमलेण उरं–मि हणइ काओ वि लीलाए ॥५॥” इत्यादि सविस्तरं जलकेलिः । ततः–कमलकेलिकुतूहलमित्यसा–
विह विलस्य विलासवतीरवः । कमलयुक्तकरः कमलाकरा–न्निरसरत्कमलाधिपतिस्ततः ॥ ६ ॥ जिनपनेमितनू-
मिह रुक्मिणी, स्ववसनेन मुदा निरमार्जयत् । तमुपवेश्य हिरण्मयविष्टरे, सबहुमानमथोग्रसुताऽवदत् ॥ ७ ॥
भो देवर ! ज्ञातं, गृहनिर्वाहकातरस्त्वं स्त्रीपरिग्रहं न करोषि, परं तदयुक्तम्, यतो भ्राता ते समर्थः, यथा-
साकं द्वात्रिंशत्सहस्रसङ्ख्याकानां निर्वाहं कुरुते, तथा किमेकस्या भ्रातृजायाया निर्वाहं कर्तुमक्षम ? इति, तथा–
“ऋषभमुख्यजिनाः करपीडनं, विदधिरे दधिरे च महीशतां । बुभुजिरे विषयांश्च बहून् सुतान्, सुपुषिरे शिवमप्यथ
लेभिरे ॥ १ ॥ त्वमसि किन्तु नवोऽद्य शिवंगमी, भृशमरिष्टकुमारगरिष्ठधीः । विमृश देव ! गृहाण गृहस्थतां, कुरु
सुबन्धुमनस्सु च सुस्थताम् ॥ २ ॥ अथ जगाद च जाम्बवती जवात्, शृणु पुरा हरिवंशविभूषणम् । स मुनिसुव्रत-
तीर्थपतिर्गृही, शिवमगादिह जातसुतोऽपि हि ॥ ३ ॥” एवमन्यासामपि गोपिकानां वचांसि, ततो गोपिकानां वचो

युक्त्या यदूनामाग्रहाच्च मौनावलम्बिनमपि स्मिताननं निरीक्ष्य 'अनिषिद्धमनुमत'मिति न्यायात् स्वीकृतं पाणिग्रहणं नेमिनेति ताभिर्निर्घोषितं प्रससार च तथैव जनोक्तिरिति। ततः कृष्णेनोग्रसेनपुत्री राजीमती मार्गिता, चलितश्च श्रीसमुद्रविजयोऽनेकनरेन्द्रपरिवृतः सर्वसामग्र्या, श्रीशिवादेवीप्रमुखप्रमदाजनेन गीयमानो नयनानन्दकारी नेमिकुमारो रथस्थो धृतातपत्रः पाणिग्रहणाय व्रजन्नग्रतो वीक्ष्य सारथिं प्रति कस्येदं कृतमङ्गलभरं धवलमन्दिरमिति पृष्टवान्, ततः सोऽङ्गुल्याऽदर्शयत् उग्रसेननृपस्य तव श्वशुरस्यायं प्रासादः, स्मितानने च राजीमतीसख्यौ मृगलोचनाचन्द्राननाख्ये त्वां पश्यतः, तत्र मृगलोचना नेमिमालोक्य हे चन्द्रानने! "इक्कुच्चिय रायमई, वणियावग्गंमि वण्णणिज्जगुणा। जीसे नेमि करिस्सइ, लायन्ननिही करग्गहणं ॥ १ ॥"ति, चन्द्राननापि मृगलोचनामाह— "रायमईए रूवं, विहिनिम्मविअं च रंभरूवहरं। न करिज्ज दइअमिआसिं, हविज्ज ता नूणमजसभरं ॥ १ ॥"ति, इतश्च तूर्यरवमाकर्ण्य मातृगृहात् राजीमती सखीमध्ये प्राप्ता, "हे सख्यौ भवतीभ्यामेव यथा साडम्बरमागच्छन् कोऽपि वरो विलोक्यते, तथाऽहमपि किं विलोकायितुं न लभेयम्"? इति बलात् तदन्तरे स्थित्वा, नेमिमालोक्य, साश्चर्यं स्वगतं–किं पातालकुमारः? किं वा मकरध्वजः? किं वा सुरेन्द्रः? किं वा पुण्यप्राग्भारो मूर्त्तिमान्? "किं तस्स करेमि अहं, अप्पाणं वि हु निउंछणं विहिणो। निरुवमसोहग्गनिही, एस पई जेण मह विहिओ ॥ १ ॥"त्ति, मृगलोचना राजीमत्यभिप्रायं परिज्ञाय सप्रीतिहासं 'हे सखि चन्द्रानने! समग्रगुणसम्पूर्णेऽपि वरेऽस्त्येकं दूषणम्, परं वरार्थिन्या राजीमत्याः शृण्वत्याः कथं वक्तुं शक्यते?' चन्द्राननाऽपि 'हे सखि! मृगलोचने! मयापि

तदवगतमेव, परं तद्दूषणभाषणं न साम्प्रतं साम्प्रतम्' राजीमत्यपि त्रपया मध्यस्थतां दर्शयन्ती 'हे सख्यौ यस्याः कस्या अपि भुवनाद्भुतभाग्यसौभाग्यधन्यायाः कन्याया वरोऽयं भवतु नाम, परं पाथसां पाथोधिरिव सर्वगुणानामयमेको निधिर्मे मनसि प्रतिभासते, तदेतस्मिन् दूषणं क्षीरसागरे क्षारत्वमिव, कल्पपादपे कार्पण्यमिव, चन्दनद्रुमे दौर्गन्ध्यमिव, भास्करेऽन्धकारमिव, सुवर्णाचले चलत्वमिव, सुवर्णे श्यामत्वमिव, पयसि पूतरजातमिव, लक्ष्म्यां दारिद्र्यमिव, सरस्वत्यां मौर्ख्यमिवासम्भाव्यमेव' । तदनु ताभ्यां सविनोदं निगदितं, 'भो राजीमति ! निरीक्षिते हि वरे गौरत्वमेव तावन्मुख्यो गुणो गीयतेऽपरे गुणास्तु प्रस्तावे तत्संस्तवे सति ज्ञायन्ते, गौरत्वं चास्य कज्जलवर्णाभमेव पश्यावः, तच्च विचार्यमाणं कस्मैचिदपि न रोचते, तदेतदेव महद्दूषणं प्रवरस्यापि वरस्य महिमानमपहरति' । राजीमती सासूयं सख्यौ प्रत्याह–'अद्य यावन्मया चतुरतया चतुराननपुत्रिके इव चिन्त्यमाने अभूतां भवत्यौ, साम्प्रतं तु विपरीते इव संवृत्ते, यदेतत्सकलगुणकारणं श्यामलत्वमेव भूषणतया भाषणार्हं दूषणरूपतया प्ररूपितम्, शृणुतां तावत्सावधानीभूय भवत्यौ, श्यामलत्वे श्यामलवस्त्वाश्रयणे च ये गुणाः केवलगौरत्वे च येऽपगुणाः, तथाहि–"भू १ चित्तवल्लि २ अगुरू ३, कच्छूरी ४ घण ५ कणीणिगा ६ केसा ७ । कसवट्ट ८ मिसी ९ रयणी १०, कसिणा एए अणग्घफला ॥ १ ॥" इति कृष्णत्वे गुणाः, "कप्पूरे अंगारो१, चंदे चिंधं २ कणीणिगा नयणे ३ । भुज्जे मरीयं ४ चित्ते, रेहा ५ कसिणा वि गुणहेऊ ॥ १ ॥" इति कृष्णवस्त्वाश्रयणे गुणाः, "खारं लवणं १ दहणं, हिमं २ च अइगोरविग्गहो रोगी ३ । परवसगुणो अ चुण्णो, केवल-

1 तानित्यध्याहार. शृणुतामित्यनेन सबध्यते.

गोरत्तणेऽवगुणा ॥ १ ॥” इति केवलगौरत्वेऽपगुणाः’ । एवं परस्परं तासां जल्पने जायमाने श्रीनेमिः पशूनामार्त्तस्वरं श्रुत्वा साक्षेपं ‘हे सारथे! कोऽयं दारुणः स्वरः’? सारथिः प्राह–‘युष्माकं विवाहकृते समुदायीकृतपशूनामयं स्वर’ इत्युक्ते स्वामी चिन्तयति, धिग् ! विवाहोत्सवं, यदनुत्सवोऽमीषाम्, इतश्च ‘हली सहिओ किं मे दाहिणं चक्खु परिप्फुरइ’ त्ति वदन्तीं राजीमतीं प्रति सख्यौ प्रतिहतममङ्गलं ते इत्युक्त्वा थुत्थुत्कारं कुरुतः । नेमिरतु हे सारथे ! रथमितो निवर्त्तय । अत्रान्तरे नेमिं पश्यन्नेको हरिणः स्वग्रीवया हरिणीग्रीवां पिधाय स्थितः । अत्र कविघटना स्वामिनं वीक्ष्य हरिणो ब्रूते–“मा पहरसु मा पहरसु, एवं मह हिअयहारिणिं हरिणिं । सामी अम्हं मरणा, वि दुस्सहो पिअतमाविरहो ॥ १ ॥” हरिणी नेमिमुखं निभाल्य हरिणं प्रति ब्रूते–“एसो पसन्नवयणो, तिहुअणसामी अकारणे वंधू । ता विण्णवेसु वल्लह, रक्खत्थं सव्वजीवाणं ॥ १ ॥” हरिणोऽपि पत्नीप्रेरितो नेमिं ब्रूते–“निज्झरणनीरपाणं, अरण्णतणभक्खणं च वणवासो । अम्हाण निरवराहा–ण जीविअं रक्ख रक्ख पहो ॥ १ ॥” एवं सर्वेऽपि पशवः स्वामिनं पशुप्राहरिकांश्च प्रति पूत्कुर्वन्ति, तावत्स्वामी बभाषे–‘भो पशुप्राहरिका ! मुञ्चत मुञ्चत मृगादीन्, नाहं विवाहं करिष्ये’ इतिनेमिवचसा प्राहरिकास्तथा कुर्वन्ति, सारथिरपि रथं निवर्त्तयति । अत्र कविः–“हेतुरिन्दोः कलङ्के यो, विरहे रामसीतयोः । नेमे राजीमतीत्यागे, कुरङ्गः सत्यमेव सः ॥ १ ॥” समुद्रविजयशिवादेवीप्रभृतयः स्वजनास्तु शीघ्रमग्रे गत्वा रथं स्खलन्ति, शिवा च सबाष्पं ब्रूते,–“पत्थेमि जणणिवच्छल !, वच्छ तुमं पढमपत्थणं किं पि । काऊण पाणिगहणं, मह दंसे निअवहूवयणं॥१॥”

नेमिराह—"मुञ्चाग्रहमिमं मात—र्मानुषीषु न मे मनः । मुक्तिस्त्रीसङ्गमोत्कण्ठ—मकुण्ठमवतिष्ठते ॥ १ ॥" यतो—"या रागिणि विरागिण्यस्ताः स्त्रियः को निषेवते । अतोऽहं कामये मुक्तिं, या विरागिणि रागिणी ॥ १ ॥" इत्यादि । राजीमती हा दैव! किमुपस्थितमित्युक्त्वा मूर्छां ययौ, सखीभ्यां चन्दनद्रवैराश्वासिता, राजीमती च निश्वस्य सबाष्पं गाढस्वरं प्राह—"हा जायवकुलदिणयर !, हा निरुवमनाण ! हा जगसरण ! । हा करुणायर ! सामी, मं मुत्तूणं कहं चलिओ ॥ १ ॥ हा हिअय धिट्ठ निट्ठुर !, अज्ज वि निलज्ज ! जीविअं वहसि । अन्नत्थ वद्धराओ, जइ नाहो अत्तणो नाहो ॥ २ ॥" पुनर्निश्वस्य सोपालम्भं जगाद,—"जइ सयलसिद्धभुत्ता—इ धुत्त रत्तो सि मुत्तिगणिआए । ता एवं परिणयणा—रंभेण विडंबिया किमहं ॥ १ ॥" सख्यौ सरोषं यथा—"लोअपसिद्धी वत्तडी, सहीए इक्क सुणिज्ज । सरलं विरलं सामलं, चुक्किअ वीहि करिज्ज ॥ १ ॥ पिम्मरहिअंमि पिइसहि, एअंमि वि किं करेसि पिअभावं । पिम्मपरं कंपि वरं, अन्नयरं ते करिस्सामो ॥ २ ॥" त्ति, राजीमती कर्णौ पिधाय हाऽश्राव्यं किं श्रावयथः । "जइ कहवि पच्छिमाए, उदयं पावेइ दिणयरो तहवि । मुत्तूण नेमिनाहं, करेमि नाहं वरं अन्नं ॥ १ ॥" पुनरपि नेमिनं प्रति ब्रूते—"व्रतेच्छुरिच्छाधिकमेव दत्से, त्वं याचकेभ्यो गृहमागतेभ्यः । मयाऽर्थयन्त्या जगतामधीश !, हस्तोऽपि हस्तोपरि नैव लब्धः ॥ १ ॥" अथ विरक्ता राजीमती प्राह—"जइ वि हु एअस्स करो, मज्झ करे नो अ आसि परिणयणे । तह वि सिरे मह सुच्चिअ, दिक्खासमए करो होही ॥ २ ॥" अथ नेमिनं प्रति सपरिकरः समुद्रविजयो यथा—"नाभेयाद्याः कृतोद्वाहा, मुक्तिं जग्मु-

जिनेश्वराः । ततोऽप्युच्चैः पदं ते स्यात्, कुमार ! ब्रह्मचारिणः ॥ १ ॥" नेमिराह–हे तात ! क्षीणभोगकर्माहमस्मि, किञ्च–"एकस्त्रीसङ्ग्रहेऽनन्त–जन्तुसङ्घातघातके । भवतां भवतांतेऽस्मिन्, विवाहे कोऽयमाग्रहः ॥ १ ॥" अत्र कवेर्घटना–"मन्येऽङ्गनाविरक्तः, परिणयनमिषेण नेमिरागत्य । राजिमतीं पूर्वभव–प्रेम्णा समकेतयन्मुक्त्यै ॥ १ ॥" अत्रान्तरे लोकान्तिका देवाः–"जय निर्जितकन्दर्प्प,! जन्तुजाताभयप्रद ! । नित्योत्सवावताराथँ, नाथ ! तीर्थं प्रवर्त्तय ॥ १ ॥" इति स्वामिनं प्रोच्य, स्वामी वार्षिकदानानन्तरं त्रिभुवनमानन्दयिष्यतीति समुद्रविजयादीन् प्रोत्साहयन्ति । ततः सर्वेऽपि सन्तुष्टा इति । दानविधिस्तु वीरवदिति ज्ञेयम् ॥ १७२ ॥

जे से वासाणं पढमे मासे दुच्चे पक्खे सावणसुद्धे, तस्स णं सावणसुद्धस्स छट्ठीपक्खेणं पुव्वन्हकालसमयंसि उत्तरकुराए सीयाए सदेवमणुयासुराए परिसाए अणुगम्ममाणमग्गे जाव बारवईए णयरीए मज्झंमज्झेणं निग्गच्छइ, निगच्छित्ता जेणेव रेवयए उज्जाणे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं चित्ताहिं नक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगेणं पुरिससहस्सेणं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १७३ ॥

व्याख्या—जे से वासाणमित्यादितः पव्वइए त्ति पर्यन्तं सुकरम् ॥ १७३ ॥

अरहओ णं अरिट्ठनेमी चउपन्नं राइंदियाइं निच्चं वोसट्ठकाए चियत्तदेहे, तं चेव सव्वं जाव पणपन्नगस्स राइंदियस्स अंतरा वट्टमाणस्स जे से वासाणं तच्चे मासे पंचमे पक्खे आसोयबहुले, तस्स णं आसोयबहुलस्स पण्णरसीपक्खेणं दिवसस्स पच्छिमे भागे उज्जिंतसेलसिहरे वेडसपायवस्स अहे अट्ठमेणं भत्तेणं अपाणएणं चित्ताहिं नक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए निरावरणे जाव केवलवरनाणदंसणे समुप्पन्ने जाव सव्वलोए सव्वजीवाणं भावे जाणमाणे पासमाणे विहरइ ॥ १७४॥

व्याख्या—अरहओ णमित्यादितो जाणमाणे पासमाणे विहरइ त्ति पर्यन्तम्, तत्र केवलज्ञानं रैवतकोपान्त्यसहस्राम्रवने समुत्पेदे, ततः—उद्यानपालकस्तत्र, गत्वा विष्णोर्व्यजिज्ञपत् । कोटीर्द्वादशरूप्यस्य, सार्द्धास्तस्मै ददावसौ ॥ १ ॥ भवान्धकूपतो रज्जु—सर्वज्ञ्यां वन्दितुं तीर्थ—करं हरिरुपागमत् । भृङ्गीव मालतीं राजी—मत्यपि प्रह्वमानसा ॥ २ ॥ प्रभुस्तं दीक्षयामास, द्विसहस्रनृपान्वितम् । देशीयां देशनां प्रभोः । निशम्य प्रार्थयाञ्चक्रे, वरदत्तनृपो व्रतम् ॥ ३ ॥ आजन्मस्वामिपादाब्ज—सेवाबद्धमनोरथाम् । वीक्ष्य राजीबहुकन्यान्वितां राजी—मतीं च समहोत्सवं ॥ ४ ॥ ततो धनधनवती—भवादारभ्य नेम्यपि । तया सह स्वसम्बन्ध—मती विष्णुः, पप्रच्छ स्नेहकारणम् ॥ ५ ॥

माख्यादष्टभवावधि ॥ ६ ॥ प्रातीहार्यैः सदाश्चर्यै-र्हृद्यैरतिशयैरपि । विजहार हरन् पापं, भगवानवनीतले ॥ ७ ॥ विहरन्नन्यदा स्वामी, रैवते समवासरत् । रथनेमिरुपादत्त, चारित्रं श्रीजिनान्तिके ॥ ८ ॥ अन्यदा नेमिनं नत्वा, रथनेमिः प्रतिव्रजन् । बाधितो वृष्टिकायेन, प्राविशत् कन्दरां गिरेः ॥ ९ ॥ राजीमत्यपि मेघाम्बु-बाधिता तद्-गुहान्तरे । रथनेमिमजानाना तत्रस्थं प्राविशत्तदा ॥ १० ॥ तमदृष्ट्वा तमिस्रेण, श्रोणीनिहितचक्षुपम् । वस्त्राणि परितोऽक्षैप्सी-दुद्घाताय महासती ॥ ११ ॥ स्वर्गलोकजयायेव, साधयन्तीं तपःक्रियाम् । दृष्ट्वा विवसनां तन्वीं, बभूवोत्कलिकाकुलः ॥ १२ ॥ भ्रातुर्वैरादिना जज्ञे, तथा कामेन मर्मसु । यथा चासौ पुरस्तस्या-स्तस्थावुत्तानि-तेक्षणः ॥ १३ ॥ आगच्छ स्वेच्छया भद्रे!, कुर्वहे सफलं जनुः । उभावपि वयःप्रान्ते, चरिष्यावस्तपोविधिं ॥१४॥ श्रुत्वेत्यश्रुत्यमव्याज-चित्ता संवीय वाससी । सती स्पष्टमभाषिष्ट, धारयित्वा च धीरताम् ॥ १५ ॥ महानुभाव! संरम्भः, कोऽयं ते भवकारणम् । संस्मर स्वप्रतिज्ञां तां, प्रव्रज्यां मा स्म विस्मरः ॥ १६ ॥ संयतीप्रतिसेवादि, यदुक्तं बोधिघातकम् । श्रीमता नेमिनाथेन, तत्त्वयाद्यैव विस्मृतम् ॥ १७ ॥ यदुक्तम्-संयतीप्रतिसेवायां, धर्मो-ड्डाहर्षिघातयोः । देवद्रव्यविनाशे च, बोधिघातो निवेदितः ॥ १८ ॥ पूर्वं गृहस्थया यस्त्वं, मया वाचापि नेहितः । साहं व्रतप्रतिज्ञायां, त्वामद्य कथमाद्रिये ॥ १९ ॥ अगन्धनकुले जाता-स्तिर्यञ्चो ये भुजङ्गमाः । तेऽपि वान्तं न पिबन्ति, तद्विद्धि स्वं ततोऽधिकम् ॥ २० ॥ वराटिकाकृतेऽकस्मान्, मा स्म कोटिं विनाशयः । तस्माद्धीरत्वमाधाय, शुद्धं धर्मं समाचर ॥ २१ ॥ इत्यादि मदनोन्माद-सर्पत्सर्पैकजाङ्गुलीं । तदुक्तियुक्तिमाकर्ण्य, चिन्तयामासिवा-

निदम् ॥ २२ ॥ स्त्रीजातावपि धन्यासौ, निधानं गुणसम्पदाम् । कुकर्मजलधौ मग्नो, धिगहं पुरुषोऽपि हि ॥२३॥ तस्मादेषैव बन्धुर्मे, गुरुर्वापि न संशयः । उद्धृतोऽहं महासत्या, यया नरककूपतः ॥ २४ ॥ भावयित्वेति धन्यात्मा, श्रीमन्नेमिपदान्तिके । गत्वा दुश्चीर्णमालोच्य, तपस्यां गाढमग्रहीत् ॥ २५ ॥ राजीमत्यपि शुद्धात्मा, साध्वीगणमहत्तरा । अभेदं नेमिना प्राप–दवन्ध्यप्रार्थना जिनाः ॥ २६ ॥ छद्मस्था वत्सरं तस्थौ, गेहे वर्षचतुःशतीम् । पञ्चवर्षशतीं राजी–मती केवलशालिनी ॥ २७ ॥ १७४ ॥

अरहओ णं अरिट्ठनेमिस्स अट्ठारस गणा अट्ठारस गणहरा होत्था ॥ १७५ ॥ अरहओ णं अरिट्ठनेमिस्स वरदत्तपामुक्खाओ अट्ठारस समणसाहस्सीओ उक्कोसिया समणसंपया हुत्था ॥ १७६ ॥ अरहओ णं अरिट्ठनेमिस्स अज्जजक्खिणिपामुक्खाओ चत्तालीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ १७७ ॥ अरहओ णं अरिट्ठनेमिस्स नंदपामुक्खाणं समणोवासगाणं एगा सयसाहस्सीओ अउणत्तरिं च सहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ १७८ ॥ अरहओ णं अरिट्ठनेमिस्स महासुव्वयापामुक्खाणं समणोवासिगाणं तिन्नि सयसाहस्सीओ छत्तीसं च सहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था ॥ १७९ ॥ अरहओ णं अरिट्ठनेमिस्स चत्तारिसया चउद्दसपुव्वीणं अजिणाणं जिणसं-

कासाणं सव्वक्खर जाव संपया हुत्था ॥ १८० ॥ पण्णरससया ओहिनाणीणं, पन्नरससया केवलनाणीणं, पन्नरससया वेउव्वियाणं, दससया विउलमईणं, अट्ठसया वाईणं, सोलससया अणुत्तरोववाइयाणं, पण्णरस्स समणसया सिद्धा, तीसं अज्जियासयाइं सिद्धाइं, अरहओ णं अरिट्ठनेमिस्स दुविहा अंतगडभूमी हुत्था, तं जहा जुगंतकडभूमी य परियायंतकडभूमी य, जाव अट्ठमाओ पुरिसजुगाओ जुगंतकडभूमी, दुवालसपरियाए अंतमकासी ॥१८१॥

व्याख्या—अरहओ णमित्यादितो दुवालसपरियाए अंतमकासी ति पर्यन्तम्, परिवारादिसम्बन्धिनी सससूत्री स्पष्टैव ॥ १७५ । १७६ । १७७ । १७८ । १७९ । १८० । १८१ ॥

तेणं कालेणं तेणं समएणं अरहा अरिट्ठनेमी तिन्नि वाससयाइं कुमारवासमज्झे वसित्ता, चउप्पन्नं राइंदियाइं छउमत्थपरियायं पाउणित्ता, देसूणाइं सत्त वाससयाइं केवलिपरियायं पाउणित्ता, पडिपुन्नाइं सत्तवाससयाइं सामण्णपरियायं पाउणित्ता, एगं वाससहस्सं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयणामगुत्ते, इमीसे ओसप्पिणीए दूसमसूसमाए बहु विइक्कंताए जे से गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्धे, तस्स णं आसाढसुद्धस्स अट्ठमीपक्खेणं

व्याख्या—नमिस्स णं अरहओ इत्यादितो वायालीसं वाससहस्सेहिं इच्चाइअमिति पर्यन्तम् विंशतिसूत्राणि व्यक्तानि, तथापि व्यक्ततरार्थं किञ्चित्समुदायार्थो लिख्यते—श्रीनमिनिर्वाणात्पञ्चभिर्वर्षाणां लक्षैः श्रीनेमिनिर्वाणं ततश्चतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि २१ ॥ १८४ ॥

मुणिसुव्वयस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स इक्कारस वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ २० ॥ १८५ ॥

व्याख्या—श्रीमुनिसुव्रतनिर्वाणात्षड्भिर्वर्षाणां लक्षैः श्रीनमिनिर्वाणं, ततश्च पञ्चलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना २० ॥ १८५ ॥

मल्लिस्स णं अरहओ जाव सव्वदुक्खप्पहीणस्स पणट्ठिं वाससयसहस्साइं चउरासीइं च वाससहस्साइं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ १९ ॥ १८६ ॥

व्याख्या—श्रीमल्लिनिर्वाणाच्चतुःपञ्चशता वर्षाणां लक्षैः श्रीमुनिसुव्रतनिर्वाणं, ततश्चैकादशलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १९ ॥ १८६ ॥

अरस्स णं अरहओ जाव प्पहीणस्स एगे वासकोडिसहस्से विइक्कंते, सेसं जहा मल्लिस्स तं च एयं पंचसट्ठिं लक्खा चउरासीइं वाससहस्साइं विइक्कंताइं, तम्मि समए महावीरो निव्वुओ, तओ परं नव वाससयाइं विइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ । एवं अग्गओ जाव सेयंसो ताव दट्ठव्वं १८ ॥ १८७ ॥

व्याख्या—श्रीअरनिर्वाणाद्वर्षाणां कोटिसहस्रेण श्रीमल्लिनिर्वाणं, ततश्च पञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १८ ॥ १८७ ॥

कुंथुस्स णं अरहओ जाव प्पहीणस्स एगे चउभागपलिओवमे विइक्कंते, पंचसट्ठिं च सयसहस्सा, सेसं जहा मल्लिस्स १७ ॥ १८८ ॥

व्याख्या—श्रीकुन्थुनिर्वाणाद्वर्षकोटिसहस्रोनपल्योपमचतुर्थांशेन श्रीअरनिर्वाणं, ततश्च सहस्रकोटिपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १७ ॥ १८८ ॥

संतिस्स णं जाव प्पहीणस्स एगे चउभागूणे पलिओवमे विइक्कंते पन्नट्ठिं च, सेसं जहा मल्लिस्स १६ ॥ १८९ ॥

व्याख्या—श्रीशान्तिनिर्वाणात्पल्योपमार्द्धेन श्रीकुन्थुनिर्वाणं, ततश्च पल्यचतुर्थांशपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १६ ॥ १८९ ॥

धम्मस्स णं जावप्पहीणस्स तिन्नि सागरोवमाइं पन्नट्ठिं च, सेसं जहा मल्लिस्स १५ ॥ १९० ॥

व्याख्या—श्रीधर्मनिर्वाणात्पादोनपल्योनैस्त्रिभिः सागरोपमैः श्रीशान्तिनिर्वाणं, ततश्च पादोनपल्योपमचतुरशीतिलक्षनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १५ ॥ १९० ॥

अणंतस्स णं जावप्पहीणस्स सत्त सागरोवमाइं पन्नट्ठिं च, सेसं जहा मल्लिस्स १४ ॥ १९१ ॥

व्याख्या—श्रीअनन्तनिर्वाणाच्चतुर्भिः सागरैः श्रीधर्मनिर्वाणं, ततश्च त्रिसागरपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १४ ॥ १९१ ॥

विमलस्स णं जावप्पहीणस्स सोलस सागरोवमाइं विइक्कंताइं पन्नट्ठिं च सेसं जहा मल्लिस्स १३ ॥ १९२ ॥

व्याख्या—श्रीविमलनिर्वाणान्नवभिः सागरोपमैः श्रीअनन्तनिर्वाणं, ततश्च सप्तसागरपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १३ ॥ १९२ ॥

वासुपुज्जस्स णं जावप्पहीणस्स छायालीसं सागरोवमाइं पन्नट्ठिं च सेसं जहा मल्लिस्स १२॥१९३॥

व्याख्या—श्रीवासुपूज्यनिर्वाणात्त्रिंशता सागरैः श्रीविमलनिर्वाणं, ततश्च षोडशसागरपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना १२ ॥ १९३ ॥

सिज्जंसस्स णं जावप्पहीणस्स एगे सागरोवमसए विइक्कंते पन्नट्ठिं च सयसहस्सा सेसं जहा
मल्लिस्स ११ ॥ १९४ ॥

व्याख्या—श्रीश्रेयांसनिर्वाणाच्चतुःपञ्चाशता सागरैः श्रीवासुपूज्यनिर्वाणं, ततश्च षट्चत्वारिंशत्सागरपञ्चषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचना ११ ॥ १९४ ॥

सीयलस्स णं जावप्पहीणस्स एगा सागरोवमकोडी तिवासअद्धनवमासाहियबायालीस-
वाससहस्सेहिं ऊणिया विइक्कंता एयंमि समए महावीरो निव्वुओ तओ परं नव वाससयाइं
विइक्कंताइं दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ १० ॥ १९५ ॥

व्याख्या—श्रीशीतलनिर्वाणाद्वर्षाणां षट्षष्टिलक्षषड्विंशतिसहस्राधिकसागरशतोनया सागरकोट्या श्रीश्रेयांसनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूने सागरशतेऽतिक्रान्ते श्रीवीरनिर्वृतिः ततः परं नवशताशीतिवर्षातिक्रमे पुस्तकवाचना १० ॥ १९५ ॥

सुविहिस्स णं अरहओ जावप्पहीणस्स दस सागरोवमकोडिओ विइक्कंताओ सेसं जहा
सीयलस्स तं च इमं तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं ऊणिया विइक्कंता
इच्चाइ ९ ॥ १९६ ॥

व्याख्या—श्रीसुविधिनिर्वाणान्नवभिः सागरकोटिभिः श्रीशीतलनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनायां सागराणामेकस्यां कोटावतिक्रान्तायां श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ९ ॥ १९६ ॥

चंदप्पहस्स णं अरहओ जावप्पहीणस्स एगं सागरोवमकोडिसयं विइक्कंतं सेसं जहा सीयलस्स तं च इमं तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं ऊणगमिच्चाइ ८ ॥१९७॥

व्याख्या—श्रीचन्द्रप्रभनिर्वाणान्नवत्या सागरकोटिभिः श्रीसुविधिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनासु दशसु सागरकोटिषु व्यतिक्रान्तासु श्रीवीरनिर्वाणं, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ८ ॥ १९७ ॥

सुपासस्स णं अरहओ जावप्पहीणस्स एगे सागरोवमकोडिसहस्से विइक्कंते सेसं जहा सीयलस्स तं च इमं तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं ऊणिया विइक्कंता इच्चाइ ७ ॥ १९८ ॥

व्याख्या—श्रीसुपार्श्वनिर्वाणान्नवशतकोटिसागरैः श्रीचन्द्रप्रभनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनया सागराणामेकशतकोट्या श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ७ ॥ १९८ ॥

व्याख्या—श्रीसम्भवनिर्वाणात् सागरकोटीनां दशभिर्लक्षैः श्रीअभिनन्दननिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनैर्दशलक्षकोटिसागरैः श्रीवीरनिर्वाणं, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना ३॥२०२॥

अजियस्स णं अरहओ जावप्पहीणस्स पन्नासं सागरोवमकोडिसयसहस्सा विइक्कंता सेसं जहा सीअलस्स तिवासअद्धनवमासाहियबायालीसवाससहस्सेहिं इच्चाइयं २ ॥ २०३ ॥

व्याख्या—श्रीअजितनिर्वाणात्सागराणां त्रिंशता लक्षैः श्रीसम्भवनिर्वाणं ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनैर्विंशत्या सागरकोटिलक्षैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना २। श्रीऋषभनिर्वाणात्सागरकोटीनां पञ्चाशता लक्षैः श्रीअजितनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकैर्द्विचत्वारिंशता वर्षसहस्रैरूनैः पञ्चाशत्कोटिलक्षसागरैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचना १॥२०३॥

अथास्यामवसर्पिण्यां प्रथमधर्म्मप्रवर्त्तकत्वेन परमोपकारित्वात्किञ्चिद्विस्तरतः श्रीऋषभदेवचरितं यथा—

तेणं कालेणं तेणं समएणं उसभे अरहा कोसलिए चउ उत्तरासाढे अभीइ पंचमे हुत्था ॥२०४॥

व्याख्या—तेणमित्यादित अभीइ पंचमे हुत्थ त्ति पर्यन्तम्, तत्र कोशलायामयोध्यायां भवः कौशलिकः ॥२०४॥

तं जहा उत्तरासाढाहिं चुए चइत्ता गब्भं वक्कंते जाव अभीइणा परिनिव्वुए ॥ २०५ ॥

व्याख्या—तं जहेत्यादितः परिनिव्वुए त्ति पर्यन्तं सुगमम् ॥ २०५ ॥

पक्खे चित्तबहुले तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं नवण्हं मासाणं बहुपडिपुन्नाणं अद्ध-ट्ठमाणं जाव आसाढाहिं नक्खत्तेणं जोगमुवागएणं आरोग्गारोग्गं दारयं पयाया ॥ २०८ ॥

व्याख्या—तेणमित्यादितो दारयं पयाय त्ति पर्यन्तं प्राग्वत् ॥ २०८ ॥

तं चेव सव्वं जाव देवा देवीओ य वसुहारवासं वासिंसु सेसं तहेव चारगसोहणं माणुम्मा-णवद्धणं उस्सुक्कमाइयं ठिइवडियजूयवज्जं सव्वं भाणियव्वं ॥ २०९ ॥

व्याख्या—तं चेव सव्वमित्यादितो जूअवज्जं सवं भाणिअवं त्ति यावत्, तत्र अथ देवलोकच्युतो भगवाननुपम-श्रीः,अप्रतिपातिज्ञानत्रयो, जातिस्मरो,ऽनेकदेवदेवीपरिवृतो, बुद्धिकान्तिकीर्त्यादिगुणैरशेषमनुष्येभ्योऽधिको,वरपद्मग-र्भगौरो,बिम्बोष्ठो, ऽञ्जनसदृक्शिरोजः, फुल्लोत्पलकमलगन्धनिश्वासः, शुभध्यानक्षीरनीरपूरप्लावितं हृदयान्निर्गत्याधरप-ल्लवलग्नं रागं प्लावितुमनुलग्नेनेव स्फटिकावदातदन्तपङ्क्तिकान्तिकलापेनोपशोभितः, शारदेन्दुसुन्दरवदनः,, क्रमेण प्रवर्द्धमानः सन्नाहाराभिलाषे सुरसंचारितामृतरसामङ्गुलिं मुखे प्रक्षिपति । एवमन्येऽपि तीर्थकृतो बालभावेऽवग-न्तव्या, बालभावातिक्रमे पुनरग्निपक्काहारभोजिनः, ऋषभस्त्वाप्रव्रज्यां(ज्यं) सुरानीतोत्तरकुरुकल्पद्रुमफलरसमा-स्वादितवान् । किञ्चिदूनसञ्जातवर्षे च भगवति प्रथमतीर्थकृद्वंशस्थापनं शक्रजीतमिति विचिन्त्य कथं रिक्तपाणिः स्वामिनः पुरो यामीति महतीमिक्षुयष्टिमादायानेकदेवपरिवृतः शक्रो नाभिकुलकराङ्कस्थितस्य स्वामिनः पुरस्तस्थौ,

१ अद्धट्ठमाण राइंदियाणं । प्रत्यन्तरे ।

दृष्ट्वा चेक्षुयष्टिं हृष्टवदनेन स्वामिना करे प्रसारिते भक्षयसीक्षुमिति भणित्वा दत्वा च तामिक्ष्वभिलाषात्स्वामिनो वंश इक्ष्वाकुनामा भवतु, गोत्रमप्यस्यैतत्पूर्वजानामिक्ष्वभिलाषात्काश्यपनामेति शक्रो वंशस्थापनां कृतवान्। अथैदृश्ये चावसरे किञ्चिन्मिथुनकं सञ्जातापत्यं सदपत्यमिथुनकं तालवृक्षाधो विमुच्य रिरंसया क्रीडामन्दिरमगात्। ततः पवनप्रेरितेन पतता तालफलेनैकेनास्मिन् दारके व्यापादिते तत्पितृमिथुनकं प्रतनुकषायं तां दारिकां संवर्ध्य कियता कालेन च विपद्य सुरलोके समुत्पन्नं, सा चोद्यानदेवतेवोत्कृष्टरूपा एकाकिन्येव वने विचचार, दृष्ट्वा च तां सुरसुन्दरीकल्पामनल्पविस्मयोत्फुल्लनयना युगलिकनरा नाभिकुलकराय न्यवेदयन्। नाभिरपि शिष्टेयं सुनन्दा नाम्नी ऋषभपत्नी भविष्यतीति लोकज्ञापनपुरस्सरं तां गृहीतवान्। ततः सुनन्दासुमङ्गलाभ्यां सह प्रवर्द्धमानो भगवान् यौवनमनुप्राप्तः। शक्रोऽपि प्रथमतीर्थकृद्विवाहकृत्यमस्माकं जीतमित्यनेकदेवदेवीकोटिपरिवृतः समागत्य स्वामिनो वरकृत्यं स्वयमेव कृतवान्, वधूकृत्यं च द्वयोः कन्ययोर्देव्य इति। ततस्ताभ्यां विषयोपभोगिनो भगवतः षड्लक्षपूर्वेषु गतेषु भरतब्राह्मीयुगलमन्यानि चैकोनपञ्चाशत्पुत्रयुगलानि सुमङ्गला प्रसूतवती बाहुबलिसुन्दरीयुगलं च सुनन्देति ॥ २०९ ॥

उसभे णं अरहा कोसलिए कासवगुत्ते णं तस्स णं पंच नामधिज्जा एवमाहिज्जंति तं जहा— उसभे इ वा १ पढमराया इ वा २ पढमभिक्खायरे इ वा ३ पढमजिणे इ वा ४ पढमतित्थंकरे इ वा ५ ॥ २१० ॥

व्याख्या—उसभेणमित्यादितः पढमतित्थंकरे इ वेति पर्यन्तम्, तत्र इकारः सर्वत्र वाक्यालङ्कारे पढमराय त्ति प्रथमराजा स चैवं–कालानुभावात्क्रमेण प्रचुरप्रचुरतरकपायोदयात्परस्परं विवदमानानां युगलिकाना दण्डनीतिस्तावत् विमलवाहनचक्षुष्मत्कुलकरकालेऽल्पापराधित्वाद्धकाररूपैवासीत्, यशस्विनोऽभिचन्द्रस्य च कालेऽपराधवृद्ध्यात्पेऽनल्पे चापराधे हकारमकारावेवाभूतां, प्रसेनजिन्मरुदेवनाभिकुलकरकाले च पुनरप्यपराधवृद्धौ क्रमेण जघन्याद्यपराधिनां हकारमकारधिकारा अभूवन् । एवमपि नीत्यतिक्रमणे ज्ञानादिगुणाधिकं भगवन्तं विज्ञाय भगवन्निवेदने कृते स्वाम्याह–'नीतिमतिक्रमतां दण्डं सर्वं नरेश्वरो राजा करोति, स चामात्यारक्षकादिवलयुतोऽनतिक्रमणीयाज्ञो भवति ।' एवमुक्ते तैरूचे–'अस्माकमपीदृशो राजा भवतु ।' स्वाम्याह 'याचध्वं राजानं कुलकरं प्रति' तैर्याचितो नाभिर्भो भवतां ऋषभ एव राजेत्युक्तवान् । ततस्ते राज्याभिषेकनिमित्तमुदकानयनाय सरः प्रति गतवन्तः, तदानीं च प्रकम्पितासनः शक्रो जीतमिति धिया समागत्य मुकुटकटककेयूरकुण्डलाभरणादिविधिपुरस्सरं राज्येऽभिषिञ्चति स्म, मिथुनकनरास्तु नलिनपत्रस्थितोदकहस्ता अलङ्कृतं भगवन्तं निरीक्ष्य विस्मयोत्फुल्लनयना व्याकुलीकृतचेतसः कियन्तमपि कालं विलम्ब्य भगवत्पादयोरुदकं प्रक्षिप्तवन्तः । एवंविधक्रियोपेतांश्च तान् दृष्ट्वा तुष्टः शक्रोऽचिन्तयत्, अहो ! खलु विनीता एते पुरुषा इति वैश्रमणमाज्ञापितवान् 'यदिह द्वादशयोजनविस्तीर्णां नवयोजनविष्कम्भां विनीतानाम्नीं नगरीं निष्पादयेति' आज्ञासमनन्तरमेव दिव्यभवनपङ्क्तिप्राकारोपशोभितां नगरीमवासयत् । ततो भगवान् राज्ये हस्त्यश्वगवादीनां सङ्ग्रहपुरस्सरमुग्रभोगराजन्यक्षत्रियलक्षणानि चत्वारि कुलानि

व्यवस्थापितवान् । तत्रोग्रदण्डकारित्वादुग्रा—आरक्षकस्थानीयाः १, भोगार्हत्वाद्भोगा—गुरुस्थानीयाः २, समानवयस इतिकृत्वा राजन्या—वयस्यस्थानीयाः ३, शेषप्रधानप्रकृतितया क्षत्रिया ४ श्च । तदानीं च कालपरिहान्या ऋषभकुलकरकाले कल्पद्रुमफलभोगाभावेन ये इक्ष्वाकास्ते इक्षुभोजिनः शेषास्तु प्रायः पत्रपुष्पफलभोजिनोऽग्नेरभावाच्चापक्वशाल्याद्यौषधीभोजिनश्चासन् । कालानुभावात् तदजीर्णे स्वल्पं स्वल्पतरं च भुक्तवन्तः तस्याप्यजीर्णे तैर्विज्ञप्तो भगवानाह—'हस्ताभ्यां घृष्ट्वा त्वचं चापनीय भुंग्ध्वं' इति निशम्य तथैव कृते कियता कालेन ता अपि ते न जीर्णवन्तः, पुनर्विज्ञप्तभगवदुपदेशेन प्रवालपुटे तिमिततन्दुलभोजिनः, पुनरप्यजीर्णे कियन्तमपिकालं हस्ततलपुटे संस्थाप्य, पुनरप्यजीर्णे कक्षासु स्वेदयित्वा, एवमप्यजीर्णे हस्ताभ्यां घृष्ट्वा पत्रपुटे च तीमित्वा, एवमप्यजीर्णे पुनर्हस्ततले मुहूर्त्तं संस्थाप्येत्यादिभङ्गकभोजिनो बभूवांसः । एवं च सत्येकदा परस्परं द्रुमघर्षणान्नवोत्थितं प्रवृद्धज्वालावल्या समुज्ज्वलन्तं भूतलावलग्नं तृणादिकलापं कवलयन्तमग्निमुपलभ्याभिनवरत्नबुद्ध्या ग्रहणाय प्रसारितपाणयो दह्यमाना भीताः सन्तो भगवन्तं यथावद् व्यतिकरकथनेन विज्ञपयामासुः । भगवता चाग्नेरुत्पत्तिं विज्ञाय 'भो युगलिका उत्पन्नोऽग्निरत्र च शाल्याद्यौषधीर्निधाय भुंग्ध्वं, यतस्ताः सुखेन जीर्यन्ति इत्युपाये कथितेऽप्यनभ्यासात्सम्यगुपायमलभमानास्ता औषधीरग्नौ प्रक्षिप्य कल्पद्रोरिव फललिप्सया पुरः स्थित्वा पश्यन्ति, अग्निना च ताः सर्वतो दह्यमाना दृष्ट्वा अहो अयं पापात्मा वेताल इवातृप्तः स्वयमेव सर्वं भक्षयति, नास्मान् प्रति किमपि प्रयच्छतीत्यतोऽस्यापराधं भगवते विज्ञाप्य शिक्षां दापयिष्याम इति बुद्ध्या गच्छन्तः पथि भगवन्तमपि हस्तिस्कन्धारूढम-

भिमुखमागच्छन्तं दृष्ट्वा यथावद्व्यतिकरं भगवते न्यवेदयन् । भगवांश्चाह—न चात्राव्यधानेन धान्यादिप्रक्षेपः कार्यः, किन्तु कुम्भादिव्यवधानेनेत्युक्त्वा तैरेव सार्द्धं मृत्पिण्डमानाय्य निधाय च हस्तिकुम्भे मिण्ठेन कुम्भकारं न्यदर्शयत् उक्तवांश्च एवंविधानि भाण्डानि विधाय तेषु पाकं कुरुध्वमिति । भगवदुक्तं सम्यगुपायमुपलभ्य ते तथैव कृतवन्तोऽतः प्रथमं कुम्भकारशिल्पं प्रवर्तितं, ततो लोह १ चित्र २ तन्तुवाय ३ नापित ४ लक्षणैश्चतुर्भिः शिल्पैः सह मूलशिल्पानि पञ्चैव तान्यपि प्रत्येकं विंशत्या भेदैः शिल्पशतं तच्चाचार्योपदेशजमिति ॥ २१० ॥

उसभे णं अरहा कोसलिए दक्खे दक्खपइन्ने पडिरूवे अल्लीणे भद्दए विणीए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसइ, वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसइ, तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसमाणे लेहाइयाओ गणियप्पहाणाओ सउणरुयपज्जवसाणाओ बावत्तरिं कलाओ, चउसट्ठिं महिलागुणे, सिप्पसयं च कम्माणं, तिन्नि वि पयाहियाए उवदिसइ, उवदिसित्ता पुत्तसयं रज्जसए अभिसिंचइ, अभिसिंचित्ता पुणरवि लोयंतिएहिं जियकप्पिएहिं देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं सेसं तं चेव भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता जे से गिम्हाणं पढमे मासे पढमे पक्खे चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमीपक्खे णं दिवसस्स पच्छिमे भागे सुदंसणाए सिवियाए सदेवमणुया सुराए

पण ५७–चित्रो ५८ पल ५९ लेप ६० चर्म्म ६१ कर्माणि । पत्रच्छेद्य ६२ नखच्छेद्य ६३–पत्रपरीक्षा ६४ वशीकरण ६५ ॥ ६ ॥ काष्ठघटन ६६ देशभाषा ६७–गारुड ६८ योगाङ्ग ६९ धातुकर्माणि ७० । केवलिविधि ७१ शकुनरुते, ७२ इति पुरुषकला द्विसप्ततिर्ज्ञेयाः ॥ ७ ॥ अत्र लिखितं हंसलिप्याद्यष्टादशलिपिविधानं, तच्च भगवता दक्षिणकरेण ब्राह्म्या उपदिष्टं । गणितं तु–"एकं दशशतमस्मात्, सहस्रमयुतं ततः परं लक्षं । प्रयुतं कोटिमथार्बुद-मब्जं खर्वं निखर्वं च ॥ १ ॥ तस्मान्महासरोजं, शंकुं सरितां पतिं ततस्त्वन्त्यं । मध्यं परार्द्ध्यमाहु–र्यथोत्तरं दशगुणं तज्ज्ञाः ॥ २ ॥" इत्यादि सङ्ख्यानं, तच्च सुन्दर्या वामकरेण । काष्ठकर्मादिरूपकर्म भरतस्य, पुरुषादिलक्षणं च बाहुबलिन उपदिष्टमिति । चउसट्ठिं महिलागुणे त्ति, ज्ञेया नृत्यौ १ चित्ये २, चित्रं ३ वादित्र ४ मन्त्र ५ तन्त्राश्च ६ । घनवृष्टि ७ फलाकृष्टी ८, संस्कृतजल्पः ९ क्रियाकल्पः १० ॥ १ ॥ ज्ञानं ११ विज्ञान १२ दम्भा १३-म्बुस्तम्भा १४ गीत १५ तालयोर्मानं १६ । आकारगोपना १७ राम-रोपणे १८ काव्यशक्ति १९ वक्रोक्ती २० ॥ २ ॥ नरलक्षण २१ गजहयवर-परीक्षणे २२ वास्तुशुद्धि २३ लघुबुद्धी २४ । शकुनविचारो २५ धर्म्मा-चारो २६ ऽञ्जन २७ चूर्णयो २८ योंगः ॥ ३ ॥ गृहिधर्म्मः २९ सुप्रसादन-कर्म्म ३० कनकसिद्धि ३१ वर्णिकावृद्धी ३२ । वाक्पाटव ३३ करलाघव ३४-ललितचरण ३५ तैलसुरभिताकरणे ॥ ३६ ॥ ४ ॥ भृत्योपचार ३७ गेहा–चारो(रौ) ३८ व्याकरण ३९ परनिराकरणे ४० । वीणानाद ४१ वितण्डा–वादा ४२ ङ्कस्थिति ४३ जनाचारः ४४ ॥ ५ ॥ कुम्भभ्रम ४५ सारिश्रम ४६–रत्नमणिभेद ४७ लिपिपरिच्छेदाः ४८ । वैद्यक्रिया ४९ च कामा–विष्करणं ५० रन्धनं ५१ चिकुर-

वरवेप ५७ सर्वभापा-
वन्धः ५२ ॥ ६ ॥ शालीखण्डन ५३ मुखमण्डने ५४ कथाकथन ५५ सुकुसुमग्रथने ५६ । भरणयथास्थानविविधपरिधाने ६२ ।
विशेप ५८ वाणिज्य ५९ भोज्ये ६० च ॥ ७ ॥ अभिधानपरिज्ञाना ६१— ति कर्म्मणां कृपिवाणि-
अन्त्याक्षरिका ६३ प्रश्न—प्रहेलिका ६४ स्त्रीकलाश्चतुःपष्टिः ॥ ८ ॥ सिप्पसयं च कम्माणं आचार्योपदे-
ज्यादीनां मध्ये कुम्भकारशिल्पादिकं प्रागुक्तं शिल्पशतमेवोपदिष्टम् । अत एवानाचार्योपदेशजं कर्म्म, तिन्नि वि पयाहिआए
शजं च शिल्पमिति कर्म्मशिल्पयोर्विशेषमामनन्ति । कर्म्माणि च क्रमेण स्वयमेव समुत्पन्नानि । भगवानुपदि-
त्ति त्रीण्यप्येतानि द्वासप्ततिपुरुषकलाचतुःपष्टिमहिलागुणशिल्पशताख्यानि वस्तूनि प्रजाहिताय तक्ष-
शति स्मेति । पुत्तसयं रज्जसए अभिसिंचइ त्ति तत्र भरतस्य विनीतायां मुख्यराज्यं वाहुवलेश्च वहलीदेशे त्विमानि—
शिलायां राज्यं दत्त्वा शेपाष्टनवतिनन्दनानां पृथक् पृथग् देशान्विभज्य दत्तवान् । नन्दननामानि वरदत्त ८
"संखो १ य विस्स विम्मो २, विमल ३ सुभक्खण य ४ अमल ५ चित्तंगो ६ । तह खायकित्ति ७ सूरय १८
दत्त ९ सागर १० जसहरो अ ११ ॥ १ ॥ वर १२ थवर १३ कामदेवो १४, धुव १५ वच्छो १६ नंद १७ ॥ २ ॥
सुनंदो १९ । कुरु २० अंग २१ वंग २२ कोसल २३—वीर २४ कलिंगे अ २५ मागह २६ विदेहे २७ विविहकरे,
संगम २८ दसन्न २९ गंभिव ३०—वसुवम्म ३१ सुवम्म ३२ रट्ठ ३३ य सुरट्ठे ३४ । वुद्धिकरे ३५ नरुत्तम-
३६ सुजसे ३७ जसकित्ति ३८ जसकरए ३९ ॥ ३ ॥ कित्तिकर ४० सुसेणे ४१ वंभसेण ४२ विकंतओ ४३ सिरिहरो ५१,
ओ ४४ । तह चंदसेण ४५ महसेण ४६ सुसेणे ४७ भाणु ४८ कंते ४९ अ ॥ ४ ॥ पुप्फुज्जओ ५०

दुद्धरिसो ५२ सुंसुमार ५३ दुजओ ५४ अ । जयमाण ५५ सुधम्मे ५६ धम्मसेण ५७ आणंदणा ५८ णंदे ५९ ॥ ५ ॥ नंदो ६० अवराजिअ ६१ विस्ससेण ६२ हरिसेणओ ६३ जओ ६४ विजओ ६५ । विजयंत ६६ पहाकरओ ६७, अरिदमणो ६८ माण ६९ महवाहू ७० ॥ ६ ॥ तह दीहवाहु ७१ मेहे ७२, सुघोस ७३ तह विस ७४ वराह ७५ वसु ७६ सेणे ७७ । कविले ७८ सेलविआरी ७९, अरिंजओ ८० कुंजरवलो ८१ अ ॥ ७ ॥ जयदेव ८२ नागदत्तो ८३, कासव ८४ वल ८५ वीर ८६ सुहमई ८७ सुमई ८८ । तह पउमनाह ८९ सीहो ९०, सयाइ ९१ संजय ९२ सुनाहो ९३ अ ॥ ८ ॥ नरदेव ९४ चित्तहर ९५ सुरवरो ९६ अ दढरह ९७ पभंजणो ९८ एए । अडनवइभरहभाया, संखाइपभंजणवसाणा ॥ ९ ॥ राज्यदेशनामानि तु अंग १ वंग २ कलिंग ३ गौड ४ चौड ५ कर्णाट ६ लाट ७ सौराष्ट्र ८ काश्मीर ९ सौवीर १० आभीर ११ चीण १२ महाचीण १३ गूर्जर १४ बंगाल १५ श्रीमाल १६ नेपाल १७ जहाल १८ कौशल १९ मालव २० सिंहल २१ मरुस्थला २२ दीनि । चउमुट्ठिअ त्ति एकां किल केशानां मुष्टिमवशिष्यमाणां पवनान्दोलितां सतीं कनककलशोपरि नीलोत्पलपिधानानुकारिणीमुभयतः स्कन्धोपरि लुठन्तीं विलोक्य प्रमुदितहृदयेन शक्रेण सोपरोधं विज्ञप्तो भगवान् रक्षितवानिति शेषमशेषं प्राग्वत् ॥ २११ ॥

उसभे णं अरहा कोसलिए एगं वाससहस्सं निच्चं वोसट्ठकाए चियत्तदेहे जाव अप्पाणं भावेमाणस्स एगं वाससहस्सं विइक्कंतं, तओ णं जे से हेमंताणं चउत्थे मासे सत्तमे पक्खे

फग्गुणबहुले, तस्स णं फग्गुणबहुलस्स एक्कारसीपक्खे णं पुव्वन्हकालसमयंसि पुरिमतालस्स नगरस्स बहिया सगडमुहंसि उज्जाणंसि नग्गोहवरपायवस्स अहे अट्ठमेणं भत्तेणं अपाण-एणं आसाढाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते जाव जाण-माणे पासमाणे विहरइ ॥ २१२ ॥

व्याख्या–उसभे णं अरहा कोसलिए इत्यादितः पासमाणे विहरइ त्ति यावत्, तत्र एगं वाससहस्सं निच्चं वोसट्ठकाए त्ति अथ चैत्रबहुलाष्टम्यां यथा भगवान् करिष्यति तथा वयमपीति कृतप्रतिज्ञैः स्वयमेव कृतचतुर्मुष्टिकलोचैः क्वचित्कु-तपश्चमुष्टिकलोचैरुग्रादिकुलसमुत्पन्नैश्चतुःसहस्रसङ्ख्याकैरात्मीयपुरुषैः सह स्वयमेव सामायिकं प्रतिपद्य गृहीत-घोराभिग्रहो भगवान् ग्रामानुग्रामं विहरति । तदानीं लोकस्यातिसमृद्धत्वादर्थिनामभावात् कीदृशी भिक्षा कीदृशा वा भिक्षाचरा इति लोको न जानाति, तेन ते भिक्षामलभमानाः क्षुधादिबाधिततनवश्च मौनावलम्बिनो भगवतस-काशादुपदेशमलभमानाः कच्छमहाकच्छौ प्रति विज्ञप्तिं कृतवन्तः 'भो ! अस्माकमनाथानां भवन्तौ नाथौ भवतां यदस्माभिरेवं क्षुत्तृड्बाधितैः कियत्कालं स्थातव्यम्' तावप्याहतुः वयमपि न जानीमः, यदि पूर्वमेव भगवान् पृष्टोऽभविष्यत् तदा शोभनमभविष्यत्, इदानीं तु भरतलज्जया गृहे गन्तुमयुक्तम्, आहारमन्तरेण च स्थातुमप्यश-क्यम्, अतो विचार्यमाणो वनवास एव श्रेयान् । तत्राप्युपवासरताः परिणतशटितपत्राद्युपभोगिनो भगवन्तमेव

ध्यायन्तः स्थास्याम इति सम्प्रधार्य सम्मत्या गङ्गातटे वर्द्धितासंस्कृतालकत्वाज्जटिलास्तापसाः सञ्जज्ञिरे। यौ च कच्छमहाकच्छसुतौ नमिविनमिनामानौ देशान्तरायातौ भरतेऽवहीलनां कृत्वा पित्रनुरागात् ताभ्यामेव सह विहृतवन्तौ तौ च वनाश्रयणकाले पितृभ्यामेव सम्बोधितौ, भो! दारुणः खल्विदानीमस्माभिर्वनवासविधिराश्रितः, तस्माद्यात यूयं स्वगृहाणि उपसर्पत वा भगवन्तं स एवाभिलषितफलदो भविष्यति, इति पित्रोर्वचः प्रमाणीकृत्य कृतपितृप्रणामौ भगवत्समीपमागत्य प्रतिमास्थिते भगवति जलाशयेभ्यो नलिनीपत्रैरुदकमानीय सर्वतः प्रवर्षणमाजानूच्छ्रयमानं सुगन्धिकुसुमप्रकरं च कृत्वा प्रतिदिनमुभयसन्ध्यं क्षितितलनिहितोत्तमाङ्गकरजानू राज्यसंविभागप्रदो भवत्विति विज्ञप्योभयपार्श्वे खड्गव्यग्रहस्तौ तस्थतुः, एवं च कियता कालेन धरणो नाम नागराजा भगवन्तं वन्दितुमागतः, स च ताभ्यामविज्ञप्तोऽप्यब्रवीत्, भो! भगवान् त्यक्तसङ्गो नास्य किञ्चिदस्त्यतो मा भगवन्तं याचेथां, भगवतो भक्त्याऽहमेव युवाभ्यां दास्यामीति भणित्वाऽष्टचत्वारिंशत्सङ्ख्याका[1] विद्यास्तत्र गौरीगान्धारीरोहिणीप्रज्ञप्तिलक्षणाश्चतस्रो महाविद्याश्च पाठसिद्धा एव दत्तवान्, उक्तवांश्चेमाभिर्विद्याभिर्विद्याधरर्द्धिप्राप्तौ सन्तौ स्वजनं जनपदं च गृहीत्वा यातं युवां वैताढ्ये नगे दक्षिणविद्याधरश्रेण्यां गौरेयगन्धारप्रमुखानष्टौ निकायान् रथनूपुरचक्रवालप्रमुखानि च पञ्चाशन्नगराणि, उत्तरश्रेण्यां च पण्डकवंशालयप्रमुखानष्टौ निकायान् गगनवल्लभप्रमुखाणि च षष्टिनगराणि निवास्य विहरतामिति। ततस्तौ तल्लब्धप्रसादौ कामितं पुष्पकविमानं विकुर्व्य तीर्थकरं नागराजं च

1 'अष्टचत्वारिंशत्सहस्रसङ्ख्याका' इति पाठस्तु सम्यक् आवश्यकादिसूत्रेषु तथैव प्रतिपादितत्वात्।

कुम्भेन सहागत आसीत्, तमेवेक्षुरसकुम्भमादायोपस्थितः श्रेयांसो भणति—भगवन्! गृहाण योग्यामिमामिक्षुरसभिक्षां, प्रसारय पाणी निस्तारय मामित्युक्ते कल्पते इति कृत्वा स्वामिनाऽपि पाणी प्रसारितौ, निसृष्टश्च तेन सर्वोऽपि रसः, न चात्र विन्दुरप्यधः क्षरति किन्तूपरि शिखा परिवर्द्धते। यतः—"माइज्जघडसहस्सा, अहवा मायंति सागरा सव्वे। जस्सेआरिसलद्धी, सो पाणिपडिग्गही होइ ॥ १ ॥"त्ति अत्र कविघटना—"स्वाम्याह दक्षिणं हस्तं, कथं भिक्षां न लासि भोः। स प्राह दातृहस्तस्याधो, भवामि कथं यतः ॥ १ ॥ पूजाभोजनदानशान्तिककलापाणिग्रहस्थापना—चोक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहम्।" इत्युक्त्वा दक्षिणकरे स्थिते वामो ब्रूते—"वामोऽहं रणसम्मुखाङ्कगणनावामाङ्गशय्यादिकृत्, द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽस्मि न त्वं शुचिः ॥ २ ॥" ततः—"राज्यश्रीर्भवतार्जितार्थिनिवहस्त्यागैः कृतार्थीकृतः, सन्तुष्टोऽस्मि गृहाण दानमधुना तन्वन् दयां दानिपु ॥ इत्यब्दं प्रतिबोध्य दक्षिणकरं श्रेयांसतः कारयन्, प्रत्यग्रेक्षुरसेन पूर्ण ऋषभः पायात्स वः श्रीजिनः ॥ ३ ॥ श्रेयांसस्य दानावसरे—नेत्राम्बुधारा वाग्दुग्ध—धारा धारा रसस्य च। स्पर्द्धया वर्द्धयामासुः, श्रीधर्मद्रुं तदाशये ॥ ४ ॥ ततस्तेन भगवान् सांवत्सरिकतपःपारणकं कृतवान्। तत्र पञ्च दिव्यानि प्रादुर्भूतानि, तद्यथा—वसुधारावृष्टिः १, चेलोत्क्षेपः २, व्योम्नि देवदुन्दुभिः ३, गन्धोदककुसुमवृष्टिः ४, आकाशेऽहोदानमिति घोषणं चेति ५, तत्र वसुधाराप्रमाणं—"अद्धत्तेरसकोडी, उक्कोसा तत्थ होइ वसुहारा। अद्धत्तेरसलक्खा, जहन्निआ होइ वसुहारा ॥ १ ॥" त्ति ततो देवसन्निपातं दृष्ट्वा राजप्रमुखोऽखिलोऽपि लोकस्ते च तापसाः श्रेयांसभवनमुपागताः। तान् श्रेयांसः प्रज्ञापयति,

"भो जनाः ! सद्गतिलिप्सया एवं भिक्षा प्रदीयते" । लोकः पृच्छति कथं भवता ज्ञातं यत्स्वामिनोऽप्येवं भिक्षा प्रदीयते, सोऽवक्-"जातिस्मृत्या मम तु स्वामिना सहाष्टभवसम्बन्धः पूर्वमासीत्" । कौतुकाज्जनः पृच्छति के तेऽष्टौ भवाः, श्रेयांस आह-"यदा स्वामीशाने ललिताङ्गनामा देवस्तदानीमहं पूर्वभवे निर्नामिका नाम्नी स्वयम्प्रभादेवी १, ततः पूर्वविदेहे पुष्कलावतीविजये लोहार्गले नगरे भगवान् वज्रजङ्घस्तदानीमहं श्रीमती भार्या २, तत उत्तरकुरौ भगवान् युगलिकोऽहं युगलिनी ३, ततः सौधर्म्मे द्वावपि मित्रदेवौ ४, ततो भगवानपरविदेहे वैद्यपुत्रस्तदाऽहं जीर्णश्रेष्ठिपुत्रः केशवनामा मित्रम् ५, ततोऽच्युते कल्पे देवौ ६, ततः पुण्डरगिण्यां भगवान् वज्रनाभस्तदाऽहं सारथी ७, ततः सर्वार्थसिद्धविमाने देवौ ८, इह पुनर्भगवतः प्रपौत्र इति तेषां च स्वप्नानामिदं फलं यद्भगवतो भिक्षा दत्तेति" । एवं च श्रुत्वा सर्वोऽपि जनः-"भुवणं जसेण भयवं, रसेण भवणं धणेण पडिहत्थो । अप्पा निरुवमसुक्खे, सुपत्तदाणं महग्घविअं ॥ १ ॥ रिसहेससमं पत्तं, निरवज्जं इक्खुरससमं दाणं । सेअंससमो भावो, हविज्ज जइ मग्गिअं हुज्जा ॥ २ ॥" इत्यादिवचोभिरभिनन्द्य स्वस्थानं गतः । श्रेयांसोऽपि यत्र स्थितो भगवान् प्रतिलाभितः तत्स्थानस्य पादैराक्रमणं मा भवत्विति भक्त्या रत्नपीठं कारयित्वोभयसन्ध्यं पूजयति, विशेषतः प्रातःकाले पूजयित्वैव भुङ्क्ते । लोकोऽपि पृच्छति किमेतकम् ? श्रेयांस आह-आदिकरमण्डलकम् । ततो लोकेनापि यत्र यत्र भगवान् स्थितः, तत्र तत्र पीठं कृतम् । कालेनादित्यपीठमिति संज्ञा जाता । एवं ऋषभस्वामिना संवत्सरेणेक्षुरसभिक्षा लब्धा, शेषैस्तु त्रयोविंशत्या जिनैर्द्विती-

यदिवस एवामृतरसरसोपमा पायसभिक्षेति । यतः–"संवच्छरेण भिक्खा, लद्धा उसहेण लोगनाहेण । सेसेहिं वियदिवसे, लद्धाओ पढमभिक्खाओ ॥ १ ॥ उसभस्स उ पारणए, इक्खुरसो आसि लोगनाहस्स । सेसाणं परमण्णं, अमयरसरसोवमं आसी ॥ २ ॥" अन्यदा च स्वामी वहलीदेशे तक्षशिलां नगरीं प्राप्तः, सन्ध्यायां चोद्यानपालकेन वाहुवलिनो निवेदने कृते प्रातः सर्वर्द्ध्या तातं वन्दिष्ये, इति रात्रिं व्यतिक्रम्य प्रातः सर्वर्द्ध्या तत्र गतो भगवांश्चान्यत्र विहृतवान् । अदृष्ट्वा च भगवन्तं महतीमधृतिं विधाय यत्र भगवान् प्रतिमया तस्थौ, तत्राष्टयोजनपरिमण्डलं पञ्चयोजनोच्छ्रयं सर्वरत्नमयं धर्म्मचक्रं चिह्नं चकार नियामकानां च सहस्रं तत्र मुमोच । एवं च क्रमेण जनपदेषु विहरन् विनीतां नगरीं प्राप्तः, कियता कालेन विहृत्येत्याह–एगं वाससहस्सं ति दीक्षादिनादारभ्य वर्षसहस्रं यावच्छद्मस्थकालस्तत्र प्रमादकालः सर्वसङ्कलितोऽप्यहोरात्रमेव । एवमेकस्मिन् वर्षसहस्रेऽतिक्रान्ते तत्रागतस्य भगवतः केवलज्ञानमुत्पन्नम्, तस्मिन्नेव दिने भरतस्य राज्ञ आयुधशालायां चक्ररत्नोत्पत्तिः, युगपत् द्वयोर्निवेदने विषमा खलु विषयतृष्णा महतामपि मतिमोहं कुरुते इति भरतश्चिन्तयति, द्वयोरपि पूजार्हयोः प्रथमं किं तातमुत चक्रं वा पूजयामीति चिन्तयन् चक्रं तावदैहिकसुखहेतुः तातस्तु शिवदायकत्वात् परलोकानन्तानन्दहेतुरतस्तातं पूजयामि । यतस्ताते पूजिते चक्रमपि पूजितं भवेदिति विचिन्त्य भरतः सर्वर्द्ध्या भगवन्तं वन्दितुं प्रवृत्तः । मरुदेवी तावद् भगवति प्रव्रजिते भरतराज्यश्रियं निरीक्ष्य प्रत्यहं भणति–'पृथिवीं प्रतिपालयन्त्यमी, भरतो वाहुवली परे सुताः । न तु कोऽपि करोति सङ्कथां, मम सूनोरिति

धिग् विधिक्रमम् ॥ १ ॥" साक्षाद् भरतं प्रत्यपि—'म्लानां मौलिस्रजमिव परित्यज्य मां त्वां च देह—प्रादुर्भूतं
मलमिव जरच्चीरवच्चेश्वरत्वं । एकाकी मे गहनमविशत् सोऽङ्गजस्तं श्रृणोमि, क्षुत्तृष्णाभ्यां वत द्रुतमहो दुर्म्मरा
न म्रियेऽहम् ॥ २ ॥' भरतोऽपि—'अयि मातरहं वाहु—वल्याद्याः सन्ति ते सुताः । तवैव ते स्वचित्ते तान्, धेहि
ताम्यसि किं मुधा ॥ १ ॥' इति भरतेनोक्ते स्वामिन्याह—'सहकारफलमनोरथ—परंपरा किं व्यपैति चिञ्चि-
कया । मन्नन्दनकान्तगुणा, यस्याप्यन्यस्य किं वा स्युः ॥ ३ ॥' इत्याद्युद्वेगं गता तीर्थंकरविभूतिं वर्णयन्त-
मपि भरतं न प्रत्येति । ततस्तस्याः पुत्रशोकेन तेजोहीने चक्षुषी सञ्जाते । अतो भरतेन गच्छता भगवती विज्ञप्ता,
अम्ब एहि येन भगवतो विभूतिं दर्शयामि, ततो भरतो हस्तिस्कन्धे पुरतः कृत्वा निर्गतः । समवसरणे प्रत्यासन्ने च
विमानारूढेनोत्तरता सुरसमूहेन विराजमानं गगनमण्डलं ध्वजपताकाकलितं अनेकदेवदुन्दुभ्यादिशब्दपूरितं दिग्म-
ण्डलं च निरीक्ष्य भरतेन भणिता भगवती अम्ब प्रेक्षस्व स्वपुत्रर्द्धिं, तया सह मम कोटिशतभागेनापि ऋद्धिर्नास्ति ।
ततः सा हर्षपुलकिताङ्गी हर्षाश्रुनीरामृतपूरप्लावितमलाभ्यां निर्मललोचनाभ्यां भगवतश्छत्रातिछत्रं पश्यन्ती के-
चित्तु देशनागिरमपि श्रृण्वन्ती चिन्तयति, धिग्! मोहविह्वलान् जीवान्, सर्वेऽपि प्राणिनः स्वार्थे स्निह्यन्ति,
मोहान्मे चक्षुषी अपि हीनतेजसी सञ्जाते, भरतं प्रत्यप्यहं सोपालम्भं भणामि यन्मम पुत्रं क्षुत्तृड्बाधितं शीतो-
ष्णवर्षादिपीडासहं निरुपानहं यानवाहनादिरहितं निरशनं निर्वसनं वनवासिनमेकाकिनं गिरिकन्दरादिष्वटन्तं
सन्मान्यानय, अयं पुनरीदृशीमृद्धिं प्राप्तो मम नामापि न पृच्छति मम दुःखं च न जानाति, सुखवार्त्तासन्देश-

कमपि न प्रयच्छति, अहो अस्य वीतरागत्वं, नीरागे कः प्रतिवन्धः, एवं सर्वत्र निर्ममत्वं गता, शुभध्यानेन केवलज्ञानं प्राप्य तत्क्षणमेव सिद्धा । ततो भरतक्षेत्रे प्रथमसिद्ध इति कृत्वा देवैः पूजा कृता, शरीरं पुनः क्षीरसमुद्रे क्षिप्तम् । अत्र कविः—"सूनुर्युगादीशसमो न विश्वे, भ्रान्त्वा क्षितौ येन शरत्सहस्रम् । यदर्जितं केवलरत्नमर्घ्यं, स्नेहात् तदेवार्प्यत मातुराशु ॥ १ ॥ मरुदेवा समा नाम्ना—याऽगात् पूर्वं किलेक्षितुम् । मुक्तिकन्यां तनूजार्थं, शैवमार्गं खिलं चिरात् ॥ २ ॥" अत्र कवेः प्रार्थनाऽपि—"नो ददासि यदि तत्त्वधियं मे, देहि मोहमपि तं जगदीश ! । येन मोहितमतिर्मरुदेवा, त्वन्मयं जगदपश्यदशेषम् ॥ ३ ॥" भगवानपि समवसरणमध्यस्थितः सदेवमनुजायां पर्षदि धर्म्मं कथयति । तत्र-ऋषभसेनो नाम भरतपुत्रः पूर्वभवनिबद्धगणधरनामसत्ताकः सञ्जातसंवेगः प्रव्रजितो, ब्राह्यपि, भरतः पुनः श्रावकः सञ्जातः, स्त्रीरत्नं भविष्यतीति भरतेन निरुद्धा सुन्दर्यपि श्राविका सञ्जाता, इति चतुर्विधसङ्घस्थापना । ते च कच्छमहाकच्छवर्जाः सर्वेऽपि तापसा भगवतो ज्ञानोत्पत्तिमाकर्ण्य तत्रागत्य प्रव्रजिताः । एवं देवादिकृतमहिमानं दृष्ट्वा मरीचिप्रमुखा वहवः कुमाराः प्रव्रजिताः । यतः—"पंच य पुत्तसयाइं, भरहस्स य सत्त नत्तुअसयाइं । सयराहं पव्वइआ, तम्मि कुमारा समोसरणे ॥ १ ॥"त्ति, भरतस्तु शक्रनिवारितस्वामिनीमरणशोको भगवन्तं वन्दित्वा स्वस्थानं गत इति ॥ ॥ २१२ ॥

'उसभस्स णं अरहओ कोसलियस्स चउरासीई गणा चउरासीई गणहरा हुत्था ॥ २१३ ॥

उसभस्स णं अरहओ कोसलियस्स उसभसेणपामुक्खाओ चउरासीओ समणसा-

हस्सीओ उक्कोसिया समणसंपया हुत्था ॥ २१४ ॥ उसभस्स णं ३ बंभीसुंदरिपामोक्खाणं अज्जियाणं तिन्नि सयसाहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥ २१५ ॥ उसभस्स णं ३ सिज्जंसपामोक्खाणं समणोवासगाणं तिन्नि सयसाहस्सीओ पंचसहस्सा उक्कोसिया समणोवासगाणं संपया हुत्था ॥ २१६ ॥ उसभस्स णं ३ सुभद्दापामोक्खाणं समणोवासियाणं पंचसयसाहस्सीओ चउप्पन्नं च सहस्सा उक्कोसिया समणोवासियाणं संपया हुत्था ॥ २१७ ॥ उसभस्स णं ३ चत्तारि सहस्सा सत्त सया पन्नासा चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं जाव उक्कोसिया चउद्दसपुव्विसंपया हुत्था ॥ २१८ ॥ उसभस्स णं ३ नवसहस्सा ओहिनाणीणं उक्कोसिया ओहिनाणिसंपया हुत्था ॥ २१९ ॥ उसभस्स णं ३ वीससहस्सा केवलनाणीणं उक्कोसिया केवलनाणिसंपया हुत्था ॥ २२० ॥ उसभस्स णं ३ वीससहस्सा छच्च सया वेउव्वियाणं उक्कोसिया वेउव्विसंपया हुत्था ॥ २२१ ॥ उसभस्स णं ३ बारस सहस्सा छच्च सया पन्नासा विउलमईणं अड्ढाइज्जेसु दीवेसु दोसु य समुद्देसु सन्नीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे जाणमाणाणं उक्कोसिया विउलमइ-

संपया हुत्था ॥ २२२ ॥ उसभस्स णं ३ बारस सहस्सा छच्च सया पन्नासा वाईणं उक्कोसिया वाइसंपया हुत्था ॥ २२३ ॥ उसभस्स णं ३ वीसं अंतेवासिसहस्सा सिद्धा चत्तालीसं अज्जिया साहस्सीओ सिद्धाओ ॥ २२४ ॥ उसभस्स णं ३ बावीस सहस्सा नव सया अणुत्तरोववाइयाणं गइकल्लाणाणं जाव भद्दाणं उक्कोसिया अणुत्तरोववाइसंपया हुत्था ॥ २२५ ॥

व्याख्या—उसभस्सणं अरहओ कोसलिअस्स चउरासीइ गणा इत्यादितो जाव भद्दाणं उक्कोसिआ संपया होत्थ'त्ति पर्यन्तम्, त्रयोदशसूत्री सुबोधैव ॥ २१३ । २१४ । २१५ । २१६ । २१७ । २१८ । २१९ । २२० । । २२१ । २२२ । २२३ । २२४ । २२५ ॥

उसभस्स णं ३ दुविहा अंतगडभूमी हुत्था, तंजहा—जुगंतगडभूमी य परियायंतगडभूमी य जाव असंखिज्जाओ पुरिसजुगाओ जुगंतगडभूमी अंतोमुहुत्तपरियाए अंतमकासी ॥ २२६ ॥

व्याख्या—उसभस्सणमित्यादितः परिआए अंतमकासीति यावत् तत्र युगान्तकृद्भूमिरसङ्ख्येयानि पुरुषयुगानि भगवतोऽन्वयक्रमे सिद्धानि पर्यायान्तकृद्भूमिस्तु भगवतः केवले समुत्पन्नेऽन्तर्मुहूर्तेन मरुदेवा स्वामिनी अन्तकृत्केवलितां प्राप्ता ॥ २२६ ॥

तेणं कालेणं तेणं समएणं उसभे अरहा कोसलिए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे

एवं वयासी, परिणिव्वुए खलु जंबुद्दीवे दीवे भारहे वासे उसहे अरहा कोसलिए तं जीयमेतं तीतपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं तित्थकराणं परिनिव्वाणमहिमं करित्तए तं गच्छामि णं अहं पि भगवओ तित्थकरस्स परिनिव्वाणमहिमं करेमि त्तिकट्टु एवं वंदति नमंसति वंदित्ता नमंसित्ता चउरासीए सामाणियसाहस्सीहिं तायत्तीसाए तायत्तीसएहिं चउहिं लोगपालेहिं जाव चउरासीइहिं आयरक्खदेवसाहस्सीहिं अण्णेहिं वहूहिं सोहम्मकप्पवासीहि य वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे, ताए उक्किट्ठाए जाव तिरियमसंखेज्जाणं दीवसमुद्दाणं मज्झं मज्झेणं जेणेव अट्ठावए पव्वए जेणेव भगवओ तित्थकरस्स सरीरए तेणेव उवागच्छइ उवागच्छित्ता विमणे णिराणंदे अंसुपुण्णणयणे तित्थगरसरीरगं तिक्खुत्तो आयाहिणपयाहिणं करेइ करित्ता णच्चासण्णे णाइदूरे सुस्सूसमाणे जाव पज्जुवासइ। तेणं कालेणं तेणं समएणं ईसाणे देविंदे देवराया उत्तरड्ढलोकाधिपती अट्ठावीसविमाणसयसहस्साधिपती सूलपाणी वसभवाहणे सुरिंदे अरयंवरवत्थधरे जाव विउलाइं भोगभोगाइं भुंजमाणे विहरति। ततेणं तस्स ईसाणस्स देवरण्णो आसणे चलति। ततेणं से ईसाणे जाव देवराया आसणं चलियं पासइ पासित्ता ओहिं पउंजति पउंजित्ता भगवं तित्थगरं ओहिणा आभोएइ आभोइत्ता जहा सक्के णियगपरिवारेणं भाणियव्वं जाव पज्जुवासइ, एवं सव्वे देविंदा जाव अच्चुते णियगपरिवारेणं णेयव्वा। एवं जाव भवणवासीण वि(स) इंदा, वाणमंतराणं सोलस, जोइसियाणं दोण्णि णियगपरिवारा णेयव्वा। ततेणं से सक्के देविंदे देवराया ते वहवे भवणवइवाणमंतरजोइसवेमाणिए देवे एवं वदासि खिप्पामेव भो!

आरुहेति २ चितिगाए ठवेति । ततेणं ते वहवे भवणवति जाव वेमाणिया देवा गणहराणं अणगाराण य विणट्ठ-जम्मजरामरणाणं सरीरगाइं सीयं आरुहेंति २ चितिगाए ठवेंति । ततेणं से सक्के देविंदे देवराया अग्गिकुमारे देवे सद्दावेति २ एवं वयासि, खिप्पामेव भो देवाणुप्पिया तित्थकरचितिकाए जाव अणगारचितिकाए य अगणिकायं विउव्वह २ एयमाणत्तियं पच्चप्पिणह । ततेणं ते अग्गिकुमारा देवा विमणा णिराणंदा अंसुपुण्णणयणा तित्थकरचियकाए जाव अणगारचियकाये य अगणिकायं विउव्वंति । ततेणं से सक्के जाव देवराया वाउकुमारे देवे सद्दावेति २ एवं वयासि खिप्पामेव भो देवाणुप्पिया तित्थकरचियकाए जाव अणगारचियगाए य वाउक्कायं विउव्वह विउव्वित्ता अगणिकायं उज्जालेह तित्थकरसरीरगं गणहरसरीरगाइं अणगारसरीरगाणि य ज्झामेह । ततेणं ते वाउकुमारा देवा विमणा णिराणंदा अंसुपुण्णणयणा ति.थकरचियगाए जाव विउव्वंति २ अगणिकायं उज्जालेंति २ तित्थकरसरीरगं जाव अणगारसरीराणि य ज्झामेंति । ततेणं से सक्के देविंदे देवराया ते वहवे भवणवति जाव वेमाणीए एवं वदासी खिप्पामेव भो देवाणुप्पिया! तित्थकरचियकाए जाव अणगारचियकाए य अगुरुतुरुक्कघयमधुं च भारग्गसोय साहरह । ततेणं ते भवणवति जाव तित्थकर जाव भारग्गसोय साहरंति । ततेणं से सक्के देविंदे देवराया मेहकुमारे देवे सद्दावेइ २ एवं वयासी खिप्पामेव भो देवाणुप्पिया तित्थगरचितकं जाव अणगारचितकं च खीरोदएणं णिव्ववेएह । तएणं ते मेहकुमारा देवा तित्थकरं जाव णिव्ववेंति । ततेणं से सक्के जाव देवराया भगवओ तित्थगरस्स उवरिल्लं दाहिणं सकहं गेण्हइ, ईसाणे देविंदे देवराया उवरिल्लं वामं सगधं

एगा सागरोवमकोडाकोडी तिवासअद्धनवमासाहियबायालीसाए वाससहस्सेहिं ऊणिया विइक्कंता एयंमि समए समणे भगवं महावीरे परिनिव्वुए, तओवि परं नववाससया विइक्कंता दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ २२८ ॥

व्याख्या—उसभस्स णं अरहओ इत्यादितः काले गच्छइ त्ति पर्यन्तं प्राग्वत् ॥ २२८ ॥

इति श्रीऋषभदेवचरित्रम् ॥

इति श्रीमत्तपागणगगनाङ्गणनभोमणिश्री ६ हीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्म्मसागरगणिविरचितायां श्रीकल्पकिरणावल्यां जिनचरितरूपप्रथमवाच्यव्याख्यानपद्धतिः समाप्ता ॥

अथ गणधरादिस्थविरावलीलक्षणे द्वितीये वाच्ये जघन्यवाचनया स्थविरावलीमाह—

तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स नवगणा इक्कारस गणहरा हुत्था ॥१॥

व्याख्या—तेणं कालेणमित्यादितो हुत्थत्ति पर्यन्तं सुगमम् ॥ १ ॥

से केणट्ठेणं भंते ! एवं वुच्चइ समणस्स भगवओ महावीरस्स नव गणा इक्कारस गणहरा हुत्था ? ॥ २ ॥

व्याख्या—से केणट्ठेणमित्यादितो हुत्थत्ति यावत् तत्र से शब्दोऽथशब्दार्थः प्रश्नयितुरयमभिप्रायः "किल जाव-

इआ जस्स गणा तावइआ गणहरा तस्स" त्ति वचनात् गणधरसङ्ख्याका गणाः सर्वजिनानां श्रीवीरस्य तु किमर्थं नवगणा एकादश गणधरा इति ? ॥ २ ॥ आचार्य आह—

समणस्स भगवओ महावीरस्स जिट्ठे इंदभूई अणगारे गोयमसगुत्ते णं पंचसमणसयाइं वाएइ, मज्झिमए अग्गिभूई अणगारे गोयमसगुत्ते णं पंचसमणसयाइं वाएइ, कणीयसे अणगारे वाउभूई नामेणं गोयमसगुत्ते णं पंचसमणसयाइं वाएइ, थेरे अज्जवियत्ते भारद्दाए गुत्ते णं पंचसमणसयाइं वाएइ, थेरे अज्जसुहम्मे अग्गिवेसायणगुत्ते णं पंचसमणसयाइं वाएइ, थेरे मंडियपुत्ते वासिट्ठसगुत्ते णं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे मोरियपुत्ते कासवगुत्ते णं अद्धुट्ठाइं समणसयाइं वाएइ, थेरे अकंपिए गोयमसगुत्ते णं थेरे अयलभाया हारियायणगुत्ते णं ते दुन्नि वि थेरा तिन्नि तिन्नि समणसयाइं वाएंति, थेरे मेयज्जे थेरे अज्जपभासे एए दुन्निवि थेरा कोडिन्नागुत्ते णं तिन्नि तिन्नि समणसयाइं वाएंति । से तेणट्ठेणं अज्जो एवं वुच्चइ समणस्स भगवओ महावीरस्स नव गणा इक्कारस गणहरा हुत्था ॥ ३ ॥

व्याख्या—समणस्सेत्यादित इक्कारस गणहरा हुत्थ त्ति पर्यन्तम्, तत्र अकम्पिताचलभ्रात्रोरेकैव वाचना जाता एवं मेतार्यप्रभासयोरपीति युक्तम् नवगणा एकादश गणधरा इति, यस्मादिहैकवाचनिको यतिसमुदायो गणः ।

मण्डिकश्चासौ नाम्ना पुत्रश्च धनदेवस्य मण्डिकपुत्रः, केचिच्च मण्डित इति नाम व्याचक्षते अन्ये तु मंडिअपुत्ते त्ति मण्डितस्य पुत्रो मण्डितपुत्र इति समर्थयन्ति धनदेवस्य नामान्तरमूह्यम्, मण्डिकमौर्यपुत्रयोरेकमातृकत्वेन भ्रात्रोरपि यद्भिन्नगोत्राभिधानं तत्पृथग्जनकापेक्षया, तत्र मण्डिकस्य पिता धनदेवो, मौर्यपुत्रस्य तु मौर्यः, माता तु विजयदेव्येवैका, अविरोधश्च तत्र देशे एकस्मिन् पत्यौ मृते द्वितीयपतिवरणस्येति वृद्धाः । अज्जो इति हे आर्य ! नोदक ! ॥ ३ ॥

सव्वे एए समणस्स भगवओ महावीरस्स इक्कारस गणहरा दुवालसंगिणो चउद्दसपुव्विणो सम्मत्तगणिपिडगधारगा रायगिहे नगरे मासिएणं भत्तेणं अपाणएणं कालगया जाव सव्वदुक्खप्पहीणा, थेरे इंदभूई थेरे अज्जसुहम्मे य सिद्धिं गए महावीरे पच्छा दुन्नि वि थेरा परिनिव्वुया । जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, एए णं सव्वे अज्जसुहम्मस्स अणगारस्स आवच्चिज्जा अवसेसा गणहरा निरवच्चा वुच्छिन्ना ॥ ४ ॥

व्याख्या—सव्वे एए समणस्सेत्यादितो निरवच्चा वुच्छिन्न त्ति पर्यन्तम्, तत्र इन्द्रभूत्यादयः सर्वेऽपि गणधरा द्वादशाङ्गिनः—आचाराङ्गादिदृष्टिवादान्तश्रुतवन्तः स्वयं तत्प्रणयनात्, चतुर्दशपूर्विणः द्वादशाङ्गिन इत्येतेनैव चतुर्दशपूर्वित्वे लब्धे यत्पुनरेतदुपादानं तदङ्गेषु चतुर्दशपूर्वाणां प्राधान्यख्यापनार्थं, प्राधान्यं च पूर्वप्रणयनात् अनेक-

विद्यामन्त्राद्यर्थमयत्वात् महाप्रमाणत्वाच्च, द्वादशाङ्गित्वं चतुर्दशपूर्वित्वं च सूत्रमात्रग्रहणेऽपि स्यादिति तदपोहार्थमाह—समस्तगणिपिटकधारकाः—गणोऽस्यास्तीति गणी—भावाचार्यस्तस्य पिटकमिव रत्नादिकरण्डकमिव गणिपिटकं—द्वादशाङ्गी तदपि न देशतः स्थूलभद्रस्येव किन्तु समस्तं—सर्वाक्षरसन्निपातित्वात् तद्धारयन्ति सूत्रतोऽर्थतश्च ये ते तथा । तत्र नव गणधरा भगवति जीवत्येव सिद्धिं प्राप्ताः, इन्द्रभूतिसुधर्म्माणौ तु तस्मिन् सिद्धिं गते सिद्धौ । आर्यतया अद्यत्वे वा—अद्यतनयुगे आवचिज्जा अपत्यानि तत्सन्तानजा इत्यर्थः, निरपत्याः—शिष्यसन्तानरहिताः स्वस्वमरणकाले स्वस्वगणस्य सुधर्म्मस्वामिनि निसर्गात्, सर्वेऽपि गणधराः पादपोपगमनेन निर्वृताः । यदाहुः—"मासं पाओवगया, सव्वे वि अ सव्वलद्धिसंपन्ना । वज्जरिसहसंघयणा, समचउरंसा य संठाणा ॥ १ ॥"त्ति ॥ ४ ॥

समणे भगवं महावीरे कासवगुत्ते णं, समणस्स भगवओ महावीरस्स कासवगुत्तस्स अज्जसुहम्मे थेरे अंतेवासी अग्गिवेसायणसगुत्ते ॥ थेरस्सणं अज्जसुहम्मस्स अग्गिवेसायणगुत्तस्स अज्जजंबुनामे थेरे अंतेवासी कासवगुत्ते ॥ थेरस्स णं अज्जजंबुनामस्स कासवगुत्तस्स अज्जपभवे थेरे अंतेवासी कच्चायणसगुत्ते ॥ थेरस्स णं अज्जप्पभवस्स कच्चायणसगुत्तस्स अज्जसिज्जंभवे थेरे अंतेवासी मणगपिया वच्छसगुत्ते, थेरस्स णं अज्जसिज्जंभवस्स मणगपिउणो वच्छसगुत्तस्स अज्जजसभद्दे थेरे अंतेवासी तुंगियायणसगुत्ते । संखित्तवायणाए ॥ ५ ॥

व्याख्या—समणे भगवमित्यादितः संखित्तवायणाए त्ति पर्यन्तम्, तत्र श्रीवीरपट्टे श्रीसुधर्म्मस्वामी पञ्चमो गणधरः, तत्स्वरूपं च सङ्क्षेपेणेदम्—कुल्लागसन्निवेशे धम्मिल्लविप्रस्य भार्या भद्दिला तस्याः कुक्षौ समुत्पन्नश्चतुर्दशविद्यानिधानं, पञ्चाशद्वर्षान्ते दीक्षा, त्रिंशद्वर्षाणि यावत् श्रीवीरचरणकमलपरिचर्या, श्रीवीरमोक्षाद् द्वादशवर्षाणि छाद्मस्थ्यं, एवं द्विनवतिवर्षान्ते केवलोत्पत्तिः, ततोऽष्टौ वर्षाणि केवलिपर्यायं परिपाल्य सर्वशतवर्षायुर्जम्बूस्वामिनं स्वपदे संस्थाप्य सिद्धिसौधमध्यास्त ॥ श्रीजम्बूस्वामिस्वरूपं चैवम्—राजगृहे ऋषभधारिण्योः पुत्रः पञ्चमस्वर्गाच्चुतोऽवतीर्णः जम्बूनामा, शैशवातिक्रमे श्रीसुधर्म्मस्वामिसमीपे सुकृतश्रवणपुरस्सरं प्रतिपन्नशीलसम्यक्त्वोऽपि पित्रोर्दृढाग्रहवशादष्टौ कन्याः परिणीतः, परं न तासां प्रेमगर्भाभिर्वाग्भिर्व्यामोहं गतः, यतः—"सम्यक्त्वशीलतुम्बाभ्यां, भवाब्धिस्तीर्यते सुखम् । ते दधानो मुनिर्जम्बूः, स्त्रीनदीषु कथं ब्रुडेत् ॥१॥" ततो रात्रौ ताः प्रतिबोधयंश्चौर्यार्थमागतं चतुःशतनवनवतिचौरपरिकरितं प्रभवमपि प्राबोधयत्, ततः प्रातः पञ्चशतचौराष्टप्रियापोडशतज्जनकजननीस्वजनकजननीभिः सह स्वयं पञ्चशतसप्तविंशतितमो नवनवतिकनककोटीः परित्यज्य प्रव्रजितः, क्रमेण दुस्तपतपस्तप्यमानः केवलज्ञानं सम्प्राप्य, पोडशवर्षाणि गार्हस्थ्ये, विंशतिः छाद्मस्थ्ये, चतुश्चत्वारिंशद्वर्षाणि केवलित्वे, इत्यशीतिवर्षाणि सर्वायुः परिपाल्य, श्रीप्रभवप्रभुं स्वपदे संस्थाप्य सिद्धिसौधमलञ्चक्रे । अत्र कविघटना—"जम्बूसमस्तलारक्षो, न भूतो न भविष्यति । शिवाध्ववाहकान् साधून्, चौरानपि चकार यः ॥ १ ॥ प्रभवोऽपि प्रभुर्जाया—चौर्येण हरता धनम् । लेभेऽनर्घ्यं चौर्यहरं, रत्नत्रितयमद्भुतम् ॥ २ ॥" तत्र "बारसवरिसेहिं गोअमु, सिद्धो वीराउ वीसहिं सुहुम्मो ।

चउसट्ठीए जंबू, वुच्छिन्ना तत्थ दस ठाणा ॥ १ ॥ मण १ परमोहि २ पुलाए ३, आहारग ४ खवग ५ उवसमे ६ कप्पे ७ । संजमतिअ ८ केवल ९ सिज्झणा १० य जंबूमि वुच्छिन्ना ॥ २ ॥" तत्र संयमत्रिकं परिहारविशुद्धिक १ सूक्ष्मसंपराय २ यथाख्यातचारित्ररूपं ३ अत्रापि कविघटना "लोकोत्तरं हि सौभाग्यं, जंबूस्वामिमहामुनेः । अद्यापि यं पतिं प्राप्य, शिवश्रीर्नान्यमिच्छति ॥ १ ॥" अन्यदा च प्रभवप्रभुणा गणे सङ्घे च शिष्यार्थ-मुपयोगे दत्ते, तत्र च तथाविधविनेयादर्शने परतीर्थिषु तदुपयोगे राजगृहे यज्ञं यजन् शय्यंभवनामा भट्टो ददृशे, ततस्तत्र गत्वा साधुभ्यां 'अहो कष्टमहो कष्टं तत्त्वं न ज्ञायते परं' इति वचः श्रावितः, प्रतिमया प्रतिबोध्य दीक्षितः, तदनु त्रिंशद्वर्षाणि गृहवासे, पञ्चाशद्वर्षाणि यतितयेत्यशीतिवर्षाणि सर्वायुः परिपाल्य श्रीशय्यंभवं स्वपदे न्यस्य स्वर्गमगादिति प्रभवप्रभुस्वरूपम् ॥ शय्यंभवोऽपि साधानमुक्तनिजभार्याप्रसूतमनकाख्यपुत्रहिताय श्रीदश-वैकालिकं कृतवान्, दशवैकालिकप्रान्तेऽपि 'सिज्जंभवं गणहर'मित्यादि क्रमेण श्रीयशोभद्रं स्वपदालङ्कृतीकृत्य श्रीवीरादष्टनवतिवर्षैः स्वर्जगाम । इति श्री यशोभद्रसूरिरपि श्रीभद्रबाहुसम्भूतविजयाख्यौ शिष्यौ स्वपदे संस्थाप्य स्वर्लोकमलङ्कृतवानिति ॥ ५ ॥ अथ मध्यमवाचनया स्थविरावलीमाह—

अज्जजसभद्दाओ अग्गओ एवं थेरावली भणिया, तं जहा—थेरस्स णं अज्जजसभद्दस्स तुंगियायण-सगुत्तस्स अंतेवासी दुवे थेरा थेरे अज्जसंभूइविजए माढरसगुत्ते थेरे अज्जभद्दबाहू पाईणसगुत्ते ।

व्याख्या—अज्जजसभद्दाओ अग्गओ एवं थेरावली भणियेत्यादितो अज्जतावसी साहा निग्गया इति पर्यन्तम्, तत्र अज्जभद्दबाहु त्ति प्रतिष्ठानपुरे वराहमिहिरभद्रबाहुद्विजौ बान्धवौ प्रव्रजितौ, भद्रबाहोराचार्यपददाने रुष्टः सन् वराहो द्विजवेषमादृत्य वाराहीसंहितां कृत्वा निमित्तैर्जीवति वक्ति च लोके क्वाप्यरण्ये शिलायामहं सिंहलग्नमण्डयं शयनावसरे तदभञ्जनस्मृत्या लग्नभक्त्या तत्र गमने सिंहं दृष्ट्वाऽपि तस्याधो हस्तप्रक्षेपेण लग्नभङ्गे सन्तुष्टः सूर्यः प्रत्यक्षीभूय स्वमण्डले नीत्वा सर्वं ग्रहचारं ममादर्शयदिति । अन्यदा राज्ञः पुरो लिखितकुण्डालके वातप्रयोगातपलार्द्धत्रुटिमज्ञात्वा द्विपञ्चाशतपलमानमत्स्यपातकथने श्रीभद्रबाहुभिस्तदन्ते पातः सार्द्धैकपञ्चाशतपलमानं चावादि । तथान्यदाऽनेन नृपनन्दनस्य शतवर्षायुर्वर्त्तते, एते न व्यवहारज्ञा इति जैननिन्दायां च क्रियमाणायां गुरुभिः सप्तदिनैर्विडालिकातो मृतिरूचे, तदनु राज्ञा पुरात्सर्वविडालिकाकर्षणेऽपि सप्तमदिने स्तन्यं पिबतो बालस्योपरि विडालिकाकारवक्रार्गलापातेन मरणे गुरूणां प्रशंसा तस्य च निन्दा सर्वत्र प्रससार । ततः कोपान्मृत्वा व्यन्तरीभूयाशिवोत्पादनादिना सङ्घमुपसर्गयन् श्रीगुरुभिरुपसर्गहरस्तोत्रं कृत्वा न्यवारि । उक्तं च–"उवसग्गहरं थुत्तं, काऊणं जेण संघकल्लाणं । करुणापरेण विहिअं, स भद्दबाहू गुरू जयउ ॥ १ ॥"

थेरस्स णं अज्जसंभूइविजयस्स माढरसगुत्तस्स अंतेवासी थेरे अज्जथूलभद्दे गोयमसगुत्ते ।

व्याख्या—अज्जथूलभद्दे त्ति पाटलीपुरे शकटालमन्त्रिपुत्रः श्रीस्थूलभद्रो, द्वादशवर्षाणि कोशागृहे स्थितः, वररु-

चिप्रयोगान्मृते च पितरि नन्दराज्ञाऽऽकार्य मन्त्रिमुद्रादानायाभ्यर्थितः सन् पितृमृत्युं चित्ते विचिन्त्य स्वयं दीक्षा-
मादत्त, पश्चाच्च श्रीसम्भूतिविजयान्तिके व्रतानि प्रतिपद्य तदादेशपुरस्सरं कोशागृहे चतुर्मासकमस्थात्, तदन्ते
बहुहावभावविधायिनीमपि तां प्रतिबोध्य गुरुसमीपमागतः सन् तैः'दुष्करकारक दुष्करकारक' इति सङ्घसमक्षं
प्रोचे, तद्वचसा च पूर्वायाताः सिंहगुहाहिबिलकूपकाष्ठस्थायिनी मुनित्रयी दूना, तेषु सिंहगुहास्थायी मुनिर्मत्सरेण
गुरुणा निवार्यमाणोऽपि द्वितीयचतुर्मास्यां कोशागृहे गतो, दृष्ट्वा च तां दिव्यरूपां चलचित्तोऽजनि, तदनु तया
नेपालदेशानायितरत्नं क्षाले क्षिप्त्वा प्रतिबोधितः सन्नागत्योवाच—स्थूलभद्रः स्थूलभद्रः, स एकोऽखिलसाधुषु ।
युक्तं दुष्करदुष्कर–कारको गुरुणा जगे ॥ १ ॥" यतः—"स्मरसिंहगुहा गेहं, दृष्टी दृष्टीविषाहिभूः । चित्रशाला
कूपपट्टः, कोशायाश्लिष्वसौ स्थितः ॥ १ ॥ पुप्फफलाणं च रसं, सुराइ मंसस्स महिलिआणं च । जाणंता जे विरया,
ते दुक्करकारए वंदे ॥ २ ॥" कोशाऽपि तत्प्रतिबोधिता सती स्वकामिनं पुङ्खार्पितैर्बाणैर्दूरस्थाम्रलुम्ब्यानयनगर्वितं
रथकारं सर्षपराशिस्थसूच्यग्रपुष्पोपरि नृत्यन्ती प्राह—'न दुक्करं अंबयलुंबितोडणं, न दुक्करं सरिसवनच्चिआए ।
तं दुक्करं तं च महाणुभावं, जं सो मुणी पमयवणंमि वुच्छो ॥ १ ॥' कवयोऽपि—'गिरौ गुहायां विजने वना-
न्तरे, वासं श्रयन्तो वशिनः सहस्रशः । हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकटालनन्दनः ॥ २ ॥'
योऽग्नौ प्रविष्टोऽपि हि नैव दग्धः, छिन्नो न खड्गाग्रगतप्रचारः । कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो, नाक्तोऽञ्जना-
गारनिवासहो यः ॥ ३ ॥ वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनम्, शुभ्रं धाम मनोहरं वपुरहो नव्यो

कि

वयःसङ्गमः । कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्, तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥ ४ ॥ रे ! काम वामनयना तव मुख्यमस्त्रं, वीरा वसन्तपिकपञ्चमचन्द्रमुख्याः । त्वत्सेवका हरिविरञ्चिमहेश्वराद्याः, हा हा हताश ! मुनिनापि कथं हतस्त्वम् ॥ ६ ॥ श्रीनन्दिषेणरथनेमिमुनीश्वरार्द्र-बुद्ध्या त्वया मदन रे ! मुनिरेष दृष्टः । ज्ञातं न नेमिमुनिजम्बुसुदर्शनानां, तुर्यो भविष्यति निहत्य रणाङ्गणे माम् ॥ ६ ॥ श्रीनेमितोऽपि शकटालसुतं विचार्य, मन्यामहे वयमसुं भटमेकमेव । देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं, यन्मोहनालयमयं तु वशी प्रविश्य ॥ ७ ॥ स्त्रीविभ्रमैश्चलति लोलमना न धीरः, श्रीस्थूलभद्र इव तादृशसङ्कटेऽपि । चूर्णीयते दृषदयोऽपि जलायते च, वैडूर्यमेति विकृतिं ज्वलनात्पुनर्न ॥ ८ ॥" अन्यदा द्वादशवर्षदुर्भिक्षप्रान्ते पाटलीपुरेऽगुणनादिना विस्मृतामेकादशाङ्गीं सङ्घः सम्भूय संहितवान्, ततो दृष्टिवादाय श्रीभद्रबाह्वानयनाय श्रीसङ्घेन मुनिद्वये प्रहिते महाप्राणारम्भतः सम्प्रत्यागमनं न भावीति तेन ज्ञापिते पुनः प्रहितमुनिद्वन्द्वेन सङ्घादेशं यो न कुर्यात् तस्य को दण्ड इत्युक्ते गुरुभिरूचे स सङ्घबाह्यः क्रियते, परं श्रीसङ्घः शिष्यानत्र प्रहिणोतु यथा तेभ्यो वाचनां दद्मः । ततः स्थूलभद्राद्याः पञ्चशतशिष्याः प्रहिताः गुरुभिस्तु वाचनासप्तके प्रदीयमानेऽन्ये उद्भग्नाः स्थूलभद्रस्तु दशपूर्वी वस्तुद्वयोनामध्यैष्ट । अन्यदा च यक्षाद्याः स्वभगिनीर्वन्दितुमायातीर्ज्ञात्वा स्वशक्तिदर्शनाय सिंहरूपं चक्रे, ता भीताः प्रतिनिवृत्ताः पुनर्गुरुवचसा ज्ञात्वाऽऽयातास्तं स्वभावस्थं ववन्दिरे । यक्षया च प्रोचेऽस्माभिः समं प्रव्रजितः श्रीयकः पर्वणि मयैवोपवासं कारितः स्वर्गतः, ततोऽहं तत्प्रायश्चित्तयाचनार्थं श्रीसङ्घे प्रतिमास्थे

शासनदेव्या श्रीसीमन्धरस्वामिपार्श्वे नीता तन्मुखाच्चूलाद्वयं लात्वागामिति, ततस्ताः स्वोपाश्रये गताः । ततः श्री-
गुरुभिस्तमपराधमुद्भाव्य वाचनाया अयोग्योऽसीति प्रोक्ते सङ्घाग्रहादन्यस्मै त्वया न देयेत्युक्त्वाऽग्रतः सूत्रतो वाचना
ददे इति "केवली चरमो जम्बू-स्वाम्यथ प्रभवप्रभुः । शय्यंभवो यशोभद्रः, सम्भूतविजयस्तथा ॥ १ ॥ भद्रबाहुः
स्थूलभद्रः, श्रुतकेवलिनो हि षट् ।"

थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स अंतेवासी दुवे थेरा थेरे अज्जमहागिरी एलावच्च-
सगुत्ते थेरे अज्जसुहत्थी वासिट्ठसगुत्ते ।

व्याख्या—अज्जमहागिरि त्ति "वुच्छिन्ने जिणकप्पे, काही जिणकप्पतुलणमिह धीरो । तं वंदे मुणिवसहं, महा-
गिरिं परमचरणधरं ॥ १ ॥ जिणकप्पपरीकम्मं, जो कासी जस्स संथवमकासी । सिट्ठिघरंमि सुहत्थी, तं अज्ज-
महागिरिं वंदे ॥ २ ॥' अज्जसुहत्थि त्ति 'वंदे अज्जसुहत्थिं, मुणिपवरं जेण संपई राया । रिद्धिं सवपसिद्धं, चारित्ता
पाविओ परमं ॥ १ ॥' तथाहि—दुर्भिक्षे कापीभ्यगृहे विविधां भिक्षां साधुभ्यो दीयमानां वीक्ष्य कश्चिद् द्रमकः,
श्रीसुहस्तिसूरिशिष्यसाधुभ्यो भिक्षां मार्गयन् गुरवो जानन्तीति तैरुक्ते गुरुपार्श्वेऽभ्यागतस्तथैव याचमानो लाभं
विभाव्य दत्तदीक्षो यथेच्छं भोजितो विसूचिकया चारित्रानुमोदनातो मृत्वोज्जयिन्यां श्रेणिकराजपट्टे कोणिकः
तत्पट्टे उदायी, तत्पट्टे नव नन्दाः, तत्पट्टे चन्द्रगुप्तः, तत्पट्टे विन्दुसारः, तत्पट्टे अशोकश्रीः, तस्य सुतः

कुणालस्तन्नन्दनस्त्रिखण्डभोक्ता सम्प्रतिनामा भूपतिरभूत्, स च जातमात्र एव पितामहदत्तराज्यः, अन्यदा रथयात्रार्थागतश्रीसुहस्तिसूरीन् दृष्ट्वा जातजातिस्मृतिरव्यक्तसामायिकस्य किं फलमिति ? पृच्छन् गुरुभिस्तत्फलं राज्यादीत्युक्ते जातप्रत्ययो दत्तोपयोगैस्तैः प्रतिबोधितः सन् सपादकोटिबिम्बसपादकोटिनवीनजिनभवनषट्त्रिंशत्सहस्रजीर्णप्रासादोद्धारपञ्चनवतिसहस्रपित्तलमयप्रतिमाऽनेकशतसहस्रसत्रशालादिभिर्विभूषितां त्रिखण्डामपि महीमकरोत्, अनार्यदेशानपि करं मुक्त्वा पूर्वं साधुवेषभृत्स्ववण्ठप्रेषणादिना साधुविहारयोग्यान् स्वसेवकनृपान् जैनधर्मरतांश्च चकार । तथा। वस्त्रपात्रान्नदध्यादि–प्रासुकद्रव्यविक्रयं । ये कुर्वन्त्यथ तानुर्वी-पतिः सम्प्रतिरूचिवान् ॥ १ ॥ साधुभ्यः सञ्चरद्भ्योऽग्रे, ढौकनीयं स्ववस्तु भोः । ते यदाददते पूज्या-स्तेभ्यो दातव्यमेव तत् ॥ २ ॥ अस्मत्कोशाधिकारी च, छन्नं दास्यति याचितम् । मूल्यमभ्युल्लसल्लाभं, समस्तं तस्य वस्तुनः ॥ ३ ॥ अथ ते पृथिवीभर्त्तु-राज्ञया तद्व्यधुर्मुदा । अशुद्धमपि तच्छुद्ध-बुद्ध्या त्वादायि साधुभिः ॥ ४ ॥

थेरस्स णं अज्जसुहत्थिस्स वासिट्ठसगुत्तस्स अंतेवासी दुवे थेरा सुट्ठियसुप्पडिबुद्धा कोडियकाकंदगा वग्घावच्चसगुत्ता । थेराणं सुट्ठियसुप्पडिबुद्धाणं कोडियकाकंदगाणं वग्घावच्चसगुत्ताणं अंतेवासी थेरे अज्जइंददिन्ने कोसियगुत्ते । थेरस्स णं अज्जइंददिन्नस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जदिन्ने गोअमसगुत्ते । थेरस्स णं अज्जदिण्णस्स गोयमसगुत्तस्स अंतेवासी

थेरे अज्जसीहगिरी जाईसरे कोसियगुत्ते । थेरस्स णं अज्जसीहगिरिस्स जाईसरस्स कोसियगुत्तस्स अंतेवासी थेरे अज्जवइरे गोयमसगुत्ते । थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स अंतेवासी थेरे अज्जवइरसेणे उक्कोसियगुत्ते । थेरस्स णं अज्जवइरसेणस्स उक्कोसियगुत्तस्स अंतेवासी चत्तारि थेरा-थेरे अज्जनाइले १, थेरे अज्जपोमिले २, थेरे अज्जजयंते ३, थेरे अज्जतावसे ४, थेराओ अज्जनाइलाओ अज्जनाइला साहानिग्गया, थेराओ अज्जपोमिलाओ अज्जपोमिली साहा निग्गया, थेराओ अज्जजयंताओ अज्जजयंती साहा निग्गया, थेराओ अज्जतावसाओ अज्जतावसी साहा निग्गया इति ॥ ६ ॥

व्याख्या—सुट्ठिअसुप्पडिबुद्ध त्ति सुस्थितौ-सुविहितक्रियानिष्ठौ सुप्रतिबुद्धौ-सुज्ञाततत्त्वौ ततो विशेषणकर्म्मधारयः कोटिककाकन्दिकाविति नाम, अन्ये तु सुस्थितसुप्रतिबद्धाविति नाम कोटिककाकन्दिकाविति विरुदप्रायं विशेषणं, कोटिशः सूरिमन्त्रजापपरिज्ञानादिना कोटिकौ, काकन्द्यां नगर्यां सञ्जातत्वात् काकन्दिकौ, ततो विशेषणसमासः, त्रिषष्टिकारास्तु सुस्थितसुप्रतिबद्ध इत्येकमेव नामामनन्ति, तदाशयं वृद्धा विदन्ति येन द्वित्वव्याघातः स्यात्, यदि परं मधुकैटभन्यायेन सुस्थितेन सहचरितः सुप्रतिबुद्धः सुस्थितसुप्रतिबुद्ध इति पक्षाश्रयणं तत्र च पूज्यत्वाद्बहुवचनमिति ॥ ६ ॥ अथ विस्तरवाचनया स्थविरावलीमाह—

वित्थरवायणाए पुण अज्जजसभद्दाओ पुरओ थेरावली एवं पलोइज्जइ, तं जहा-थेरस्स णं अज्जजसभद्दस्स तुंगियायणसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—थेरे अज्जभद्दबाहू पाईणसगुत्ते, थेरे अज्जसंभूइविजए माढरसगुत्ते । थेरस्स णं अज्जभद्दबाहुस्स पाईणसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—थेरे गोदासे १, थेरे अग्गिदत्ते २, थेरे जन्नदत्ते ३, थेरे सोमदत्ते ४, कासवगुत्ते णं थेरेहिंतो गोदासेहिंतो कासवगुत्तेहिंतो इत्थ णं गोदासे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ एवमाहिज्जंति, तं जहा—तामलित्तिआ १, कोडीवरिसिया २, पोंडवद्धणिया ३, दासी खब्बडिया ४ । थेरस्स णं अज्जसंभूइविजयस्स माढरसगुत्तस्स इमे दुवालस थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—नंदणभद्दे थेरे, उवणंदे तीसभद्दजसभद्दे । थेरे अ सुमिणभद्दे, गणिभद्दे[1] पुन्नभद्दे अ ॥१॥ थेरे अ थूलभद्दे, उज्जुमई जंबुनामधिज्जे अ । थेरे अ दीहभद्दे, थेरे तह पुंडभद्दे[2] अ ॥ २ ॥ थेरस्स णं अज्जसंभूइविजयस्स माढरसगुत्तस्स इमाओ सत्त अंतेवासिणीओ अहावच्चा अभिन्नाया हुत्था, तं जहा—जक्खा य जक्खदिन्ना,

१ मणिभद्दे । प्र० २ पडुभद्दे । प्र०

भूआ तह होइ भूअदिन्ना य । सेणा वेणा रेणा, भगिणीओ थूलभद्दस्स ॥ १ ॥ थेरस्स णं अज्जथूलभद्दस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—थेरे अज्जमहागिरी एलावच्चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते । थेरस्स णं अज्जमहागिरिस्स एलावच्चसगुत्तस्स इमे अट्ठ थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा—थेरे उत्तरे १, थेरे बलिस्सहे २, थेरे धणड्ढे ३, थेरे सिरिड्ढे, ४, थेरे कोडिन्ने ५, थेरे नागे ६, थेरे नागमित्ते ७, थेरे छलुए रोहगुत्ते कोसियगुत्ते णं ८, थेरेहिंतो णं छलुएहिंतो रोहगुत्तेहिंतो कोसियगुत्तेहिंतो तत्थ णं तेरासिया निग्गया ।

व्याख्या—वित्थरवायणाए पुण इत्यादितः कासवगुत्ते पणिवयामीति पर्यन्तम्, तत्र अस्यां किल वाचनायां भूरिशो भेदा लेखकदोषहेतुका एवावसेयाः, तत्तत्स्थविराणां च शाखाः कूलानि च प्रायः सम्प्रति नावसीयन्ते, संज्ञान्तरतिरोहितानि वा भविष्यन्तीति पाठविषयकनिर्णयं कर्तुमशक्यत्वेनात्र तद्विद एव प्रमाणम् । तत्र कुलमेकाचार्यसन्ततिः, गणस्त्वेकवाचनाचारमुनिसमुदायः । यदुक्तम्—"तत्थ कुलं विन्नेअं, एगायरिअस्स संतती जा ओ । दुन्ह कुलाणमिहो पुण, साविक्खाणं गणो होइ ॥ १ ॥" शाखास्तु एकाचार्यसन्ततावेव पुरुषविशेषाणां पृथक्पृथगन्वयाः, अथवा

विवक्षिताद्यपुरुषसन्ततिः शाखा, यथा-ऽस्मदीया वैरनाम्ना वैरीशाखा । कुलानि तु तत्तच्छिष्याणां पृथक्पृथगन्वयाः यथा-चान्द्रकुलं नागेन्द्रकुलमित्यादि । अहावच्चा इति न पतन्ति यस्मिन्नुत्पन्ने दुर्गतावयशःपङ्के वा पूर्वजास्तदपत्यं सदाचारिणश्च सुशिष्याः पूर्वजान् गुरूंश्चोभयत्रापि पातयन्ति प्रत्युत प्रभासयन्तीति यथापत्यानि, यतश्चैवमत एवाभिज्ञाताः-सर्वत्र ख्यातिभाज इत्यर्थः । सेणा वेणेत्यादौ, क्वचित् सेणास्थाने एणेत्यपि । छलुए रोहगुत्ते त्ति विवादावसरे द्रव्य १ गुण २ कर्म ३ सामान्य ४ विशेष ५ समवाया ६ ख्यषट्पदार्थप्ररूपकत्वात् षट् उलूकगोत्रोत्पन्नत्वेनोलूकः षट् चासावुलूकः, उलूकत्वमेव व्यनक्ति कोसिअगुत्ते णं त्ति कौशिकोलूकशब्दयोर्नार्थभिन्नत्वं तेरासिअ त्ति त्रैराशिका जीव १ अजीव २ नोजीवा ३ ख्यराशित्रयप्ररूपिणस्तच्छिष्यप्रशिष्याः, तदुत्पत्तिस्त्वेवम्-श्रीवीरात्पञ्चशतचतुश्चत्वारिंशत्तमे वर्षे अन्तरञ्जिकायां पुर्यां भूतमहोद्यानस्थश्रीगुप्ताचार्यशिष्यो रोहगुप्तोऽन्यदा विद्ययोदरं स्फुटतीति बद्धोदरपट्टवृश्चिक १ सर्प २ मूषक ३ मृगी ४ वराही ५ काकी ६ शकुनिका ७ रूपसप्तविद्याकुशलपोट्टशालाभिधपरिव्राजकप्रवादिवाद्यमानपटहं पस्पर्श, तदनु गुरुभ्यः पठितसिद्धतत्प्रतिपक्षमयूरी १ नकुली २ विडाली ३ व्याघ्री ४ सिंही ५ उलूकी ६ उलावकी ७ ति सप्तविद्याः शेषोपद्रवे इदं त्वया भ्राम्यं यथाऽजेयो भवसीत्युक्त्वाऽर्पितरजोहरणं च प्राप्य ताभिर्विद्याभिर्विजितेन तेन सौख्यासौख्ये, नीचोच्चौ, मुक्तिसंसारौ, सारासारौ, पुण्यपापे, शुभाशुभे, संपदापदौ, जिवितमरणे, जीवाजीवावित्यादिराशिद्वयकक्षायां कक्षीकृतायां तत्प्रतिभापराभवार्थं 'देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः । त्रैगुण्यं पुरुषत्रयी

व्याख्या—तं जहा थेरे अज्जरोहणेत्यादि आर्यरोहणो १ भद्रयशा २ मेघः ३ कामर्द्धिः ४ सुस्थितः ५ सुप्रतिबुद्धो ६ रक्षितो ७ रोहगुप्तः ८ ऋषिगुप्तः ९ श्रीगुप्तः १० ब्रह्मा ११ सोम १२ इति द्वादश गणधारिणः सुहस्तिशिष्याः ।

थेरेहिंतो णं अज्जरोहणेहिंतो कासवगुत्तेहिंतो तत्थ णं उद्देहगणे नामं गणे निग्गए, तस्सिमाओ चत्तारि साहाओ निग्गयाओ, छच्च कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति तं जहा—उदुंबरिज्जिआ १, मासपूरिआ २, मइपत्तिआ ३, पन्नपत्तिआ ४, से तं साहाओ, से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा—पढमं च नागभूअं, बीअं पुणसोमभूइअं होइ । अह उल्लगच्छ तइअं, चउत्थयं हत्थलिज्जं तु ॥ १ ॥ पंचमगं नंदिज्जं, छट्ठं पुण पारिहासयं होइ । उद्देहगणस्सेए, छच्च कुला हुंति नायव्वा ॥२॥ थेरेहिंतो णं सिरिगुत्तेहिंतो हारियसगुत्तेहिंतो इत्थ णं चारगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ, सत्त य कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा—हारिअमालागारी १, संकासिआ २, गवेधुआ ३, विज्जनागरी ४, से तं साहाओ, से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा-पढमित्थ वत्थलिज्जं, बीअं पुण पीइधम्मिअं होइ ।

तइअं पुण हालिज्जं, चउत्थगं पूसमित्तिज्जं ॥ १ ॥ पंचमगं मालिज्जं, छट्ठं पुण अज्जवेडयं
होइ । सत्तमगं कन्हसहं, सत्त कुला चारणगणस्स ॥ २ ॥ थेरेहिंतो भद्दजसेहिंतो भारद्दा-
यसगुत्तेहिंतो इत्थ णं उडुवालियगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ
तिन्नि अ कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा—चंपि-
ज्जिआ १, भद्दिज्जिआ २, काकंदिआ ३, मेहलिज्जिआ ४, से तं साहाओ, से किं तं कुलाइं ?
कुलाइं एवमाहिज्जंति, तं जहा—भद्दजसिअं तह भद्द—गुत्तिअं तइअं च होइ जसभद्दं ।
एयाइं उडुवालिअ-गणस्स तिन्नेव य कुलाइं ॥ १ ॥ थेरेहिंतो णं कामिड्ढीहिंतो कोडालसगु-
त्तेहिंतो इत्थ णं वेसवाडिअगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ
चत्तारि कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एव माहिज्जंति, तं जहा—साव-
त्थिआ १, रज्जपालिआ २, अंतरिज्जिआ ३, खेमलिज्जिआ ४, से तं साहाओ, से किं तं
कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा—गणिअं मेहलिअकाम—ड्ढिअं च तह होइ इंदपुरगं
च । एयाइँ वेसवाडिअ—गणस्स चत्तारि उ कुलाइं ॥ १ ॥ थेरेहिंतो णं इसिगोत्तेहिंतो काकं-
दिएहिंतो वासिट्ठसगुत्तेहिंतो इत्थ णं माणवगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि

साहाओ तिन्निओ कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा–कासविज्जिया १, गोअमिज्जिआ २, वासिट्ठिआ ३, सोरट्ठिआ ४, से तं साहाओ, से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा–इसिगुत्ति इत्थ पढमं, बिइअं च इसिदत्तिअं मुणेयव्वं। तइअं च अभिजयंतं, तिन्नि कुला माणवगणस्स ॥ १ ॥ थेरेहिंतो सुट्ठिअसुप्पडिबुद्धेहिंतो कोडिअकाकंदगेहिंतो वग्घावच्चसगुत्तेहिंतो इत्थ णं कोडिअगणे नामं गणे निग्गए, तस्स णं इमाओ चत्तारि साहाओ चत्तारि कुलाइं एवमाहिज्जंति, से किं तं साहाओ ? साहाओ एवमाहिज्जंति, तं जहा–उच्चानागरिविज्जा-हरी अ वयरी अ मज्झिमिल्ला य । कोडिअगणस्स एआ, हवंति चत्तारि साहाओ ॥१॥ से तं साहाओ, से किं तं कुलाइं ? कुलाइं एवमाहिज्जंति, तं जहा–पढमित्थ बंभलिज्जं, बिइअं नामेण वत्थलिज्जं तु । तइअं पुण वाणिज्जं, चउत्थयं पन्हवाहणयं ॥ २ ॥ थेराणं सुट्ठिअसुप्पडिबुद्धाणं कोडिअकाकंदगाणं वग्घावच्चसगुत्ताणं इमे पंच थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था तं जहा–थेरे अज्जइंददिन्ने १, थेरे पियगंथे २, थेरे विज्जाहरगोवाले कासवगुत्ते णं ३, थेरे इसिदत्ते ४, थेरे अरिहदत्ते ५, थेरेहिंतो णं पियगंथेहिंतो इत्थ णं मज्झिमा साहा निग्गया ।

व्याख्या—पिअगंथे त्ति एकदा त्रिशतजिनभवनचतुःशतलौकिकप्रासादाष्टादशशतविप्रगृहषट्त्रिंशच्छतवणिग्गेहनवशतारामसप्तशतवापीद्विशतकूपसप्तशतसत्रागारविराजमानेऽजमेरुनिकटवर्त्तिनि सुभटपालराजसम्बन्धिनि हर्षपुरे श्रीप्रियग्रन्थसूरयोऽभ्येयुः, तत्र चान्यदा द्विजैर्यागे छागो हन्तुमारेभे, तैः श्राद्धकरार्पितवासक्षेपे तं छागमागत्याम्बिकाऽधितष्टौ, ततः स छागो नभसि भूत्वा बभाण,—"हनिष्यथ तु मां हुत्यै, बध्नीतायात मा हत । युष्मद्वन्निर्दयः स्यां चेत्, तदा हन्मि क्षणेन वः ॥ १ ॥ यत्कृतं रक्षसां द्रङ्गे, कुपितेन हनूमता । तत्करोम्येव वः स्वस्थः, कृपा चेन्नान्तरा भवेत् ॥ २ ॥ यावन्ति रोमकूपाणि पशुगात्रेषु भारत! । तावद्वर्षसहस्राणि, पच्यन्ते पशुघातकाः ॥ ३ ॥ यो दद्यात्काञ्चनं मेरुं, कृत्स्नां चैव वसुन्धरां । एकस्य जीवितं दद्यात्, न च तुल्यं युधिष्ठिर! ॥ ४ ॥ महतामपि दानानां, कालेन क्षीयते फलम् । भीताभयप्रदानस्य, क्षय एव न विद्यते ॥ ५ ॥ कस्त्वं प्रकाशयात्मानं, तेनोक्तं पावकोऽस्म्यहम् । ममैनं वाहनं कस्मात्, जिघांसथ पशुं वृथा ॥ ६ ॥ इहास्ति श्रीप्रियग्रन्थः, सूरीन्द्रः समुपागतः । तं पृच्छत शुचिं धर्म्मं, समाचरत शुद्धितः ॥ ७ ॥ यथा चक्री नरेन्द्राणां, धानुष्काणां धनञ्जयः । तथा धुरि स्थितः साधुः, स एकः सत्यवादिनाम् ॥ ८ ॥ ततस्ते तथा कृतवन्त इति ॥

थेरेहिंतो णं विज्जाहरगोवालेहिंतो कासवगोत्तेहिंतो इत्थ णं विज्जाहरी साहा निग्गया, थेरस्स णं अज्जइंददिन्नस्स कासवगोत्तस्स अज्जदिन्ने थेरे अंतेवासी गोयमसगुत्ते, थेरस्स णं अज्जदिन्नस्स गोयमसगुत्तस्स इमे दो थेरा अंतेवासी अहावच्चा अभिण्णाया हुत्था, तं जहा–( ग्रं० १००० )

थेरे अज्जसंतिसेणिए माढरसगुत्ते १, थेरे अज्जसीहगिरी जाईसरे कोसियगुत्ते २, थेरेहिंतो णं अज्जसंतिसेणिएहिंतो माढरसगुत्तेहिंतो इत्थ णं उच्चनागरी साहा निग्गया । थेरस्स णं अज्जसंतिसेणियस्स माढरसगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं०—थेरे अज्जसेणिए, थेरे अज्जतावसे, थेरे अज्जकुबेरे, थेरे अज्जइसिपालिए। थेरेहिंतो णं अज्जसेणिएहिंतो इत्थ णं अज्जसेणिया साहा निग्गया, थेरेहिंतो णं अज्जतावसेहिंतो इत्थ णं अज्जतावसी साहा निग्गया, थेरेहिंतो णं अज्जकुबेरेहिंतो अज्जकुबेरी साहा निग्गया, थेरेहिंतो णं अज्जइसिपालिएहिंतो अज्जइसिपालिया साहा निग्गया । थेरस्स णं अज्जसीहगिरिस्स जाईसरस्स कोसियगुत्तस्स इमे चत्तारि थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था तं०—थेरे धणगिरी, थेरे अज्जवइरे, थेरे अज्जसमिए, थेरे अरिहदिन्ने ।

व्याख्या—थेरे अज्जवइरे त्ति तुम्बवनग्रामे सुनन्दाऽभिधानां साधानां भार्यां मुक्त्वा धनगिरिणा तपस्या जगृहे, सुनन्दानन्दनस्तु स्वजन्मसमय एव पितुस्तपस्यामाकर्ण्य जातजातिस्मृतिर्मातुरुद्वेगाय सततं रुदन्नेवास्ते, ततस्तया स षण्मासवया एव धनगिरिसाधोरर्पितः, तेन च गोचरसमयेऽद्य त्वया सचित्तमचित्तं वा यल्लभ्यते तद्ग्राह्यमिति गुरुवचः स्मृत्वा जगृहे, ततो वज्रवत्प्रभूतभाराकलितत्वाद्वज्रेतिदत्तनामा साऽध्युपाश्रये शय्यातरीभिर्वर्द्धमानः

पालनकस्य एवैकादशाङ्गान्यध्यैष्ट, ततस्त्रिवार्षिकः सन् मात्रा राजसमक्षं विवादेऽनेकसुखभक्षिकादिभिर्लोभ्यमानोऽपि पितृसाध्वर्पितं रजोहरणमेवाग्रहीत्, ततो माताऽपि प्रवव्राज शिशुरप्यष्टवर्षान्ते। एकदा तस्य पूर्वभववयस्यैर्जृम्भकैरुज्जयिनीमार्गे वृष्टिनिवृत्तौ कूष्मांडभिक्षायां दीयमानायामनिमेषत्वादिना देवपिण्डावगमेऽग्रहणे तुष्टैस्तैर्वैक्रियलब्धिर्दत्ता, पुनस्तथैवान्यदा घृतपूरैः परीक्षायां नभोगमनविद्यापि, अथैकदा वज्रमुनिर्गुरुषु बहिर्भूमौ साधुषु तु विहर्त्तुं गतेषु साधुवेष्टिकामध्यस्थितस्तासां वाचनां दातुमारेभे, गुरवस्तद्व्यतिकरं विज्ञायान्येषां तद्ज्ञापनाय वज्रो वो वाचनाचार्य इत्यादिश्य ग्रामं गतवन्तः, ततस्तेषां विनीतानां वाचनां ददौ, ते च तदेकवाचनया तावत्पेठुर्यावद् गुरुभ्यो नानेकवाचनाभिरपीति, तेऽन्योन्यमभ्यधुर्यदि गुरवस्तत्र विलम्बन्ते तदा वज्रान्तिके शीघ्रं श्रुतस्कन्धः समाप्यते, ततो गुरुष्वागतेषु स प्रागपठिते च श्रुतेऽध्यापिते श्रीभद्रगुप्ताचार्यान्तिके दश पूर्वाण्यधीते स्म, ततः सम्प्राप्तसूरिपदः पाटलीपुरप्रवेशक्षणे मा भूद्दिव्यरूपाक्षेपान्नगरक्षोभ इति शङ्कया शक्त्या सङ्क्षिप्तरूपः क्षीराश्रवलब्ध्या राजादीनां धर्मोपदेशं दिदेश। द्वितीयेऽह्नि न प्रभोर्गुणानुरूपं रूपमिति पौरालापं श्रुत्वा विकुर्वितसहस्राजस्थः स्वाभाविकरूपेण धर्ममुपदिशन्नखिलानपि तान् विस्मापितवान्। तत्र च धनश्रेष्ठितनया रुक्मिणीनाम्नी साध्वीभ्यः प्राग्विख्यातगुणानुरागिणी सती कोटिधनसहिता पित्रा प्रदीयमानाऽपि प्रबोध्य प्रव्राजिता, अत्र कविः—"मोहाब्धिश्चुलुकीचक्रे, येन बालेन लीलया। स्त्रीनदीस्नेहपूरस्तं, वज्रापि प्लावयेत्कथम् ॥ १ ॥" ततः स्वामिना पदानुसारिलब्ध्या श्रीआचाराङ्गमहापरिज्ञाध्ययनान्नभोगविद्या उद्दध्रे, एकदोत्तरस्यां दुर्भिक्षे श्रीसङ्घं पट्टे संस्थाप्य चारित्रहणार्थं

गतशय्यातरमपि लोचकरणेन साधर्मिकत्वं ख्यापयन्तं तत्रारोप्य च नभःस्थ एव स्थाने स्थाने चैत्यानि वन्दमानः स सुभिक्षां पुरिकापुरीं प्राप, तत्र च बौद्धराज्ञा जिनचैत्येषु पुष्पप्रतिषेधे कृते पर्युषणापर्वणि सखेदं श्राद्धैर्विज्ञप्तो व्योम्नोत्पत्य माहेश्वर्यां पुर्यां हुताशनाख्यदेवस्य वने पितृमित्रमारामिकं कुसुमप्रगुणीकरणार्थमादिश्य हिमवदद्रिं गतः, तत्र च श्रीदेव्या ववन्दे, तदनु प्राग्देवार्चार्थं विरचितमहापद्मं तदर्पितं हुताशनवनाद्विंशतिलक्षाणि पुष्पाणि चादाय विकुर्व्य च विमानं प्राग्मित्रजृम्भकामरकृतगीतवादित्राद्यतुलोत्सवैरागत्यार्हन्मतं प्राभावयत्, ततो नृपतिरपि श्राद्धो बभूव, अन्यदा दक्षिणापथे विहरन् श्रीवज्रः श्लेष्मप्रकोपे भोजनादनुग्रहणाय कर्णे स्थापितशुण्ठ्याः प्रतिक्रान्तिमुखपोतिकाप्रतिलेखनावसरे पतने स्वप्रमादमवगम्यानशनार्थी सन् द्वादशाब्दं दुर्भिक्षं विभाव्य 'लक्षमूल्यौदनाद्भिक्षां, यत्राह्नि त्वमवाप्नुयाः । सुभिक्षमवबुद्ध्येथा-स्तदुत्तरदिनोषसि ॥ १ ॥' इत्युक्त्वा वज्रसेनाभिख्यं स्वशिष्यमन्यत्र व्यहारयत् स्वान्तिकस्थसाधूंश्च दुर्भिक्षे भिक्षामलभमानान् विद्यापिण्डेन कियद्दिनानि भोजयित्वा संविग्नान् पञ्चशतशिष्यान् सहादायानशनार्थं वार्यमाणमप्यतिष्ठन्तं क्षुल्लं कथमपि विप्रतार्य गिरिमारोहत्, स च मा भूद् गुरूणामप्रीतिरिति गिरेर्मूल एव तप्तशिलातलेऽनशनं कृत्वा स्वरलंकृतवान् । देवैस्तु तन्महिमानं क्रियमाणं दृष्ट्वा साधवोऽत्यन्तं स्थिरीभूताः, तत्र च मोदकादिभिर्निमन्त्रयन्त्या मिथ्यादृग्देव्या अप्रीतिं विज्ञायान्यासन्नगिरौ गत्वाऽनशनेन दिवं प्रापत्, ततः शक्रेण सरथेन गिरेः प्रदक्षिणीकरणात् रथावर्त्तेति नामाजनि, तरूणां च नमनादद्यापि तरवो नम्रीभूता एव जायन्ते, तत्र च दशमपूर्वं तुर्यं संहननं च व्युच्छिन्नं, तदनु च श्रीवज्रसेनः सोपारके जिनदत्त-

थेरेहिंतो णं अज्जवयरेहिंतो गोयमसगुत्तेहिंतो इत्थ णं अज्जवइरी साहा निग्गया। थेरस्स णं अज्जवइरस्स गोयमसगुत्तस्स इमे तिन्नि थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं०-थेरे अज्जवइरसेणिए, थेरे अज्जपउमे, थेरे अज्जरहे, । थेरेहिंतो णं अज्जवइरसेणिएहिंतो इत्थ णं अज्जनाइलीसाहा निग्गया, थेरेहिंतो णं अज्जपउमेहिंतो इत्थणं अज्जपउमा साहा निग्गया, थेरेहिंतो णं अज्जरहेहिंतो इत्थ णं अज्जजयंती साहा निग्गया, थेरस्स णं अज्जरहस्स वच्छसगुत्तस्स अज्जपूसगिरी थेरे अंतेवासी कोसियगुत्ते १, थेरस्स णं अज्जपूसगिरिस्स कोसियगुत्तस्स अज्जफग्गुमित्ते थेरे अंतेवासी गोयमसगुत्ते २, थेरस्स णं अज्जफग्गुमित्तस्स गोयमसगुत्तस्स अज्जधणगिरी थेरे अंतेवासी वासिट्ठसगुत्ते ३, थेरस्स णं अज्जधणगिरिस्स वासिट्ठसगुत्तस्स अज्जसिवभूई थेरे अंतेवासी कुच्छसगुत्ते ४, थेरस्स णं अज्जसिवभूइस्स कुच्छसगुत्तस्स अज्जभद्दे थेरे अंतेवासी कासवगुत्ते ५, थेरस्स णं अज्जभद्दस्स कासवगुत्तस्स अज्जनक्खत्ते थेरे अंतेवासी कासवगुत्ते ६, थेरस्स णं अज्जनक्खत्तस्स कासवगुत्तस्स अज्जरक्खे थेरे अंतेवासी कासवगुत्ते ७।

व्याख्या—अज्जरक्खे त्ति दशपुरनगरे पुरोहितः सोमदेवस्तद्भार्या सोमरुद्रा तस्यास्तनय आर्यरक्षितनामा विदेशे गत्वा चतुर्दश विद्या अधीत्यागतो राजादिकृतकरिस्कन्धारोपणादिबहुसन्मानो मातुः प्रणामावसरे विशेषहर्षमदृष्ट्वा तत्कारणमपृच्छत्, तया परमार्हत्योचे किमनेन नरकपातहेतुनाऽधीतेन यदि च मां मन्यसे तदा दृष्टिवादमधीष्व । ततस्तं विभणिषुर्दृष्टीनां-दर्शनानां वादो-विचार इति नामाप्यस्य शोभनमिति निशि ध्यात्वा प्रातरम्बां पृष्ट्वा इक्षुवाटकस्थस्वमातुलतोसलिपुत्राचार्यसमीपे गच्छन् स्वमिलनार्थमागच्छन् मित्रहस्ते सार्द्धनवेक्षुयष्टीः सार्द्धनवपूर्वाध्ययनसूचिका दृष्ट्वा शकुनं मत्वा स्वमातुरर्पणायादिश्योपाश्रयद्वारं प्राप्तो ढड्डरश्राद्धकृतविधिना स मुनीन् गुरून् नत्वोपविवेश । ततः श्राद्धावन्दनेन गुरुभिरभिनवश्राद्ध इत्युक्तः साधुभिरुपलक्षितश्च स्वस्वरूपं प्रोचे । गुरुभिस्तु योग्यमवगम्य स्वजनाद्युत्प्रव्राजनभीत्याऽन्यत्र गत्वा प्रव्राजितोऽध्यापितश्च स्वान्तिकस्थं श्रुतं, तदनु च पूर्वाध्ययनार्थं श्रीवज्रसमीपे गच्छन्नुज्जयिन्यां श्रीभद्रगुप्तसूरिमनशनिनं निरयामयत्, ततः 'यो हि सोपक्रमायुष्को, वज्रेण सह यामिनीं । एकामपि वसेत्सोऽनु–म्रियतेऽत्र न संशयः ॥ १ ॥' इति विचिन्त्य गुरुभिस्त्वया पृथगालये स्थित्वाऽध्येयमिति पूर्वोदितः सन्नुपाश्रय उपधिं मुक्त्वा श्रीवज्रमवन्दत, ततः सोऽद्यास्मत्पायसपतद्ग्रहः केनाप्यागन्तुकजनेन पीतः किञ्चिचास्यादिति रात्रिदृष्टस्वप्नानुसारेण किञ्चिन्न्यूनदशपूर्वाध्येतारं तं मत्वा स्वरूपं च पृष्ट्वा पृथगुपाश्रयस्थितमप्यध्यापयत्, दशमपूर्वयमकेष्वधीयमानेषु पितृभिः सन्देशकैराकारणेऽप्यनागमने तल्लघुभ्राता फल्गुरक्षितः प्रैषि, तेन प्रबोध्य सोऽपि प्रव्राजितः, ततः स्वजनान् प्रबोधयितुमुत्सुकोऽध्ययनपराजितश्चेदं पूर्वमद्यापि कियदवशिष्यते इति गुरून्

पप्रच्छ बिन्दुमात्रमधीतमुदधितुल्यञ्चावशिष्यते, इति गुरुभिरुक्ते भग्नोत्साहोऽपि गुरुगिरा कियदध्यैष्ट, ततो दत्तोपयोगैर्गुरुभिः शेषश्रुतस्य स्वस्मिन्नेव व्युच्छेदं विज्ञायानुज्ञातः सन् सफलल्गुरक्षितोऽपि दशपुरं प्राप, तत्र च राजादिनिर्मितप्रवेशमहा मातृभगिन्यादिस्वजनान् प्राव्राजयत्, पिता तु पुत्राद्यनुरागेण प्रव्रजितः, परं स्नुषादिह्रिया धौतिकयज्ञोपवीतच्छत्रिकोपानह्(त्)कमण्डलूनि न मुमोच, ततो गुरुशिक्षया बालैः सकलसाधुवन्दनेऽपि भवन्तं छत्रिकावन्तं न वन्दामह इत्युक्तश्छत्रिकाममुचत्, क्रमेण तथैव कुण्डिकां यज्ञोपवीतमुपानहावपि च, धौतिकन्तु तथापि न मुक्तवान्। अन्यदा चानशनिनि साधौ मृते गुरुशिक्षया साधुषु वैयावृत्त्यकृते परस्परं कलहायमानेषु किमत्र महती निर्जराऽस्तीति गुरुं प्रपच्छ, गुरुभिरोमित्युक्तेऽहं वहामीत्यूचेऽत्रोत्पद्यमानानुपसर्गान् यदि सोढुं शक्नुथ तदा वहतापरथाऽस्माकमरिष्टमिति गुरूक्ते स तमुत्क्षिप्य व्रजन् गुरुशिक्षया बालैर्धौतिकाकर्षणे गुरुणा चोलपट्टः परिधापितः, ततः पश्चात्स्थितस्नुषादिदर्शनाल्लज्जितोऽपि एष उपसर्गः सोढव्य इति विचिन्त्य तत्कार्यं कृत्वा पश्चादागात्, ततः किमेतदानयत धौतिकमिति गुरूक्ते बभाण किमथ धौतिकेन यद् द्रष्टव्यं तत्तु दृष्टमिति चोलपट्ट एवास्तु, तथापि त्रपया भिक्षामहिण्डमाने तस्मिन् गुरवः साधून् शिक्षयित्वाऽन्यत्र विहृतवन्तः, साधवस्तु स्वं स्वं विहृत्य भुक्तवन्तः, स तु क्षुधित एवास्थात्, द्वितीयदिने गुरुभिरागतैः कृत्रिमकोपकरणे तेषु किमेष स्वयं न यातीति प्रतिवदत्सु गुरुभिर्विहर्तुं गमने स एव जगाम, कस्यापीभ्यगृहेऽज्ञानादपरद्वारेण व्रजंस्तेन द्वारेणैहीत्युक्तः श्रीर्यतस्तत आयान्ती सुन्दरेति वदंस्तत्र द्वात्रिंशन्मोदकान् लब्ध्वाऽऽगतः, द्वात्रिंशच्छिष्या अस्माकं परम्परया

भविष्यन्तीति गुरुरपि निमित्तमग्रहीत्। ततः प्रथमलाभत्वाद् गुरूक्त्या तेषु साधूनां दत्तेषु पुनः परमान्नमानीय स्वयं बुभुजे, लब्धिसम्पन्नत्वाद्बालग्लानादीनामाधारश्च जज्ञे। ततस्तस्य च गच्छे त्रयः पुष्पमित्राः दुर्बलिका-पुष्प १ घृतपुष्प २ वस्त्रपुष्प ३ मित्राश्चत्वारश्च महाप्रज्ञा दुर्बलिकापुष्पमित्र १ वन्ध्य २ फल्गुरक्षित ३ गोष्ठामाहिला ४ बभूवुः। एकदा चेन्द्रः श्रीसीमन्धरवचसा कालकसूरिवत् श्रीआर्यरक्षितसूरीन् परीक्ष्य वन्दित्वा शालाद्वारं परावर्त्य गतस्ततस्तैर्मेधाहानिं विभाव्य सूत्रस्य चतुर्द्धाऽप्यनुयोगः पृथग्व्यवस्थापित इत्यार्यरक्षितस्वरूपम् ॥

थेरस्स णं अज्जरक्खस्स कासवगुत्तस्स अज्जनागे थेरे अंतेवासी गोअमसगुत्ते ८, थेरस्स णं अज्जनागस्स गोयमसगुत्तस्स अज्जजेहिले थेरे अंतेवासी वासिट्ठसगुत्ते ९, थेरस्स णं अज्जजेहिलस्स वासिट्ठसगुत्तस्स अज्जविन्हू थेरे अंतेवासी माढरसगुत्ते १०, थेरस्स णं अज्जविन्हुस्स माढरसगुत्तस्स अज्जकालए थेरे अंतेवासी गोयमसगुत्ते ११, थेरस्स णं अज्जकालगस्स गोयमसगुत्तस्स इमे दुवे थेरा अंतेवासी गोयमसगुत्ता थेरे अज्जसंपलिए १२, थेरे अज्जभद्दे, एएसिं दुन्हवि थेराणं गोयमसगुत्ताणं अज्जवुड्ढे थेरे अंतेवासी गोयमसगुत्ते १३, थेरस्स णं अज्जवुढस्स गोमयसगुत्तस्स अज्जसंघपालिए थेरे अंतेवासी गोयमसगुत्ते १४, थेरस्स णं अज्जसंघपालियस्स गोयमसगुत्तस्स अज्जहत्थी थेरे अंतेवासी कासवगुत्ते १५, थेरस्स णं

अज्जहत्थिस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी सावयगुत्ते १६, थेरस्स णं अज्जधम्मस्स सावयगुत्तस्स अज्जसीहे थेरे अंतेवासी कासवगुत्ते १७, थेरस्स णं अज्जसीहस्स कासवगुत्तस्स अज्जधम्मे थेरे अंतेवासी कासवगुत्ते १८ थेरस्स णं अज्जधम्मस्स कासवगुत्तस्स अज्जसंडिल्ले थेरे अंतेवासी १९। वंदामि फग्गुमित्तं च, गोयमं धणगिरिं च वासिट्ठं। कुच्छं सिवभूइं पि अ, कोसिअदुज्जंत कन्हे अ ॥ १ तं वंदिऊण सिरसा, भद्दं वंदामि कासवं गुत्तं। नक्खं कासवगुत्तं, रक्खंपि य कासवं वंदे ॥ २ ॥ वंदामि अज्जनागं च, गोयमं जेहिलं च वासिट्ठं। विन्हुं माढरगुत्तं, कालगमवि गोयमं वंदे ॥ ३ ॥ गोअमगुत्तकुमारं, संपलि यं तह य भद्दयं वंदे। थेरं च अज्जवुड्ढं, गोअमगुत्तं नमंसामि ॥ ४ ॥ तं वंदिऊण सिरसा, थिरसत्तचरित्तनाणसंपन्नं। थेरं च संघवालिय, कासवगुत्तं पणिवयामि ॥ ५ ॥ वंदामि अज्जहत्थिं च, कासवं खंति सागरं धीरं। गिम्हाण पढममासे, कालगयं चेव सुद्धस्स ॥ ६ ॥ वंदामि अज्जधम्मं च, सुवयं सीललद्धिसंपन्नं। जस्स निक्खमणे देवो, छत्तं वरमुत्तमं वहइ ॥ ७ ॥ हत्थिं कासवगुत्तं, धम्मं सिवसाहगं पणिवयामि। सीहं कासवगुत्तं, धम्मं पि अ कासवं वंदे ॥ ८ ॥ तं वंदि-

सागरगणिविरचितायां श्रीकल्पकिरणावल्यां स्थविरावलीव्याख्यानपद्धतिः समाप्ता । तत्समाप्तौ च समाप्ता श्रीपर्युषणाकल्पे द्वितीयवाच्यव्याख्यानपद्धतिः ॥ ॥ ॥ ॥ ॥ ॥

---

अथ पर्युषणासामाचारीलक्षणं तृतीयं वाच्यं विवक्षुः प्रथमं पर्युषणा कदा विधेयेति शिष्यप्रशिष्यादिदृष्टान्तेनाह—

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ, से केणट्ठेणं भंते! एवं वुच्चइ समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ? ॥ १ ॥

व्याख्या—तेणं कालेणमित्यादितो वासावासं पज्जोसवेइ त्ति पर्यन्तम्, तत्र आषाढचतुर्मासकदिनादारभ्य सविंशतिरात्रे मासे व्यतिक्रान्ते भगवान् पज्जोसवेइ त्ति पर्युषणामकार्षीत्। से केणट्ठेणं भंते इत्यादिप्रश्नवाक्यम् ॥ १ ॥

निर्वचनवाक्यमाह—

जओ णं पाएणं अगारीणं अगाराइं कडियाइं उक्कंपियाइं छन्नाइं लित्ताइं [ गुत्ताइं ] घट्ठाइं मट्ठाइं संपधूमिआइं खाओदगाइं खायनिद्धमणाइं अप्पणो अट्ठाए कडाइं परिभुत्ताइं परि-

णासियाइं भवंति, से तेणट्ठेणं एवं वुच्चइ समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ ॥ २॥

व्याख्या—जओ णमित्यादितः पज्जोसवेइ त्ति यावत्, तत्र यतो णं—वाक्यालङ्कारे प्रायेणागारिणां—गृहस्थानामगाराणि—गृहाणि कडिआइं कटयुक्तानि उक्कंपिआइं धवलितानि छन्नाइं तृणादिभिः लित्ताइं छगणाद्यैः मट्ठाइं विषमभूमिभञ्जनात् घट्ठाइं श्लक्ष्णीकृतानि क्वचिच्च गुत्ताइं ति पाठस्तत्र गुप्तानि वृतिकरणद्वारपिधानादिभिः संपधूमिआइं सौगन्ध्यापादनार्थं—धूपनैर्वासितानि खाओदगाइं क्वचित् संमट्ठाइं ति समन्तान्मृष्टानि—मसृणीकृतानि खायनिद्धमणाइं ति निद्धमणं खालं येन गृहाज्जलं निर्गच्छति अप्पणो अट्ठाए त्ति कृतप्रणालीरूपजलमार्गाणि परिकम्मार्थत्वात्परिकर्म्मितानि चूर्णिकारस्तु—'कडिआइं पासेहिं आत्मार्थं—स्वार्थं गृहस्थैरित्यर्थः, कृतानि—करोतेः परिभुज्यमानत्वात् अत एव परिणामितानि—अचित्तीकृतानि उक्कंपिआइं उवरिं' इत्याह परिभुक्तानि—तैः स्वयं भवन्ति ततः सविंशतिरात्रिमासे गते इति ॥ २ ॥

जहा णं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ तहा णं गणहरा वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति ॥ ३ ॥

जहा णं गणहरा वासाणं जाव पज्जोसविंति तहा णं गणहरसीसा वि वासाणं जाव पज्जोसविंति ॥ ४ ॥ जहा णं गणहरसीसा वासाणं जाव पज्जोसविंति तहा णं थेरा वि वासावासं पज्जोसविंति ॥ ५ ॥

व्याख्या—जहा णमित्यादितः थेरा वि वासावासं पज्जोसविंति त्ति पर्यन्तम्, त्रीणि सूत्राणि सुबोधानि परं स्थविराः-स्थविरकल्पिकाः ॥ ३ ॥ ४ ॥ ५ ॥

जहा णं थेरा वासाणं जाव पज्जोसविंति तहा णं जे इमे अज्जत्ताए समणा निग्गंथा विहरंति, तेवि णं वासाणं जाव पज्जोसविंति ॥ ६ ॥

व्याख्या—जहा णमित्यादितः पज्जोसविंति त्ति पर्यन्तम्, तत्र अज्जत्ताए त्ति अद्यकालीना आर्यतया व्रतस्थविरत्वेनेत्येके, यदि पुनः प्रथममेव वयं स्थिताः स्म इति साधवो वदेयुस्तदा ते प्रव्रजितानामवस्थानेन सुभिक्षं सम्भाव्य तप्तायोगोलकल्पा दन्तालक्षेत्रकर्षणगृहाच्छादनादीनि कुर्युस्तथा चाधिकरणदोषाः अतस्तत्परिहाराय पञ्चशता दिनैः स्थिताः स्म इति वाच्यम् ॥ ६ ॥

जहा णं जे इमे अज्जत्ताए समणा निग्गंथा वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसविंति तहा णं अम्हं पि आयरिया उवज्झाया वासाणं जाव पज्जोसविंति ॥ ७ ॥

जहा णं अम्हं पि आयरिया उवज्झाया वासाणं जाव पज्जोसविंति तहा णं अम्हे वि वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो अंतरा वि अ से कप्पइ पज्जोसवित्तए नो से कप्पइ तं रयणिं उवायणावित्तए ॥ ८ ॥

व्याख्या—जहा णमित्यादितो नो से कप्पइ तं रयणिं उवायणावित्तए त्ति पर्यन्तं सूत्रद्वयं, तत्र अन्तराऽपि च-अर्वागपि च कल्पते पर्युषितुं, न कल्पते तां रजनीं-भाद्रपदशुक्लपञ्चमीं उवायणावित्तए त्ति अतिक्रमितुं 'उष निवासे' इत्यागमिको 'वसं निवासे' इति गणसम्बन्धी वा धातुः, इह हि पर्युषणा द्विविधा गृहिज्ञाताज्ञातभेदात्, तत्र गृहिणामज्ञाता यस्यां वर्षायोग्यपीठफलकादौ यत्ने कल्पोक्तद्रव्यक्षेत्रकालभावस्थापना क्रियते, सा चाषाढपूर्णिमास्यां योग्यक्षेत्राभावे तु पञ्चपञ्चदिनवृद्ध्या दशपर्वतिथिक्रमेण यावत् श्रावणकृष्णपञ्चदश्यामेवेति। गृहिज्ञाता तु द्वेधा सांवत्सरिककृत्यविशिष्टा गृहिज्ञातमात्रा च, तत्र सांवत्सरिककृत्यानि–सांवत्सरप्रतिक्रान्ति १ र्लुञ्चनं २ चाष्टमं तपः ३। सर्वार्हद्भक्तिपूजा च ४, सङ्घस्य क्षामणं मिथः ५ ॥ १ ॥ एतत्कृत्यविशिष्टा च भाद्रसितपञ्चम्यां कालकाचार्यादेशाच्च साम्प्रतं चतुर्थ्यामपि जनप्रकटं कार्या, द्वितीया तु अभिवर्द्धितवर्षे चतुर्मासकदिनादारभ्य विंशत्या दिनैर्वयमत्र स्थिताः स्म इति पृच्छतां गृहस्थानां पुरो वदन्ति तत्तु गृहिज्ञातमात्रमेव, तदपि जैनटिप्पनकानुसारेण यतस्तत्र युगमध्ये पोषो युगान्ते चाषाढ एव वर्द्धते नान्ये मासाः, तच्चाधुना

सम्यग् न ज्ञायतेऽतः पञ्चाशतैव दिनैः पर्युषणा सङ्गतेति वृद्धाः, अत्र कश्चिदुच्छ्रवणः श्रावणिकः शङ्कते, ननु भोः ! श्रावणवृद्धौ श्रावणसितचतुर्थ्यामेव पर्युषणापर्व युक्तं न पुनर्भाद्रपदसितचतुर्थ्यां दिनानामशीत्यापत्त्या, "समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ"त्ति श्रीपर्युषणाकल्पसूत्रादिप्रवचनबाधा स्यादिति चेत् ? आहोश्विद्देवानुप्रिय ! आश्विनमासवृद्धावाश्विनमास एव चतुर्दश्यां चतुर्मासककृत्यं कर्तव्यं स्यात् कार्त्तिकसितचतुर्दश्यां तु शतदिनापत्त्या, "समणे भगवं महावीरे वासाणं सवीसइराए मासे वइक्कंते सत्तरिराइंदिएहिं सेसेहिं वासावासं पज्जोसवेइ"त्ति श्रीसमवायाङ्गादिप्रवचनबाधा स्यादित्यपि वक्तव्ये वाचालस्य ते किमयुक्तं स्यात् आगमन्यायस्योभयत्रापि समानत्वात् । ननु भवेदेवं यदि चतुर्मासकान्याषाढादिमासप्रतिबद्धानि न स्युः, तस्मात्कार्त्तिकचतुर्मासकं कार्त्तिकसितचतुर्दश्यामेव युक्तं दिनगणनायां त्वधिकमासः कालचूलेत्यविवक्षणाद्दिनानां सप्ततिरेवेति कुतः प्रवचनबाधेति चेत्? अहो ! सुदृग् पर्युषणापर्वापि भाद्रपदप्रतिबद्धं भाद्रसितचतुर्थ्यामेव युक्तं दिनगणनायां त्वधिकमासः कालचूलेति पञ्चाशदेव दिनाः सम्पद्यन्ते कुतोऽशीतिवार्त्ताऽपि, न च भाद्रपदप्रतिबद्धत्वं पर्युषणापर्वणोऽनागमिकं बहुष्वागमेषु प्रतिपादनात्, तथाहि—"अण्णया पज्जोसवणादिवसे आगए अज्जकालगेणं सालवाहणो भणिओ भद्दवयजुण्हपंचमीए पज्जोसवणा, रण्णा भणिओ" इत्यादि श्रीपर्युषणाकल्पचूर्णौ, तथा—"सीसो पुच्छति इआणिं कहं चउत्थीए अपव्वे पज्जोसविज्जति ? आयरिओ भणति कारणिआ चउत्थी अज्जकालगायरिएण पवत्तिआ, कहं भण्णते कारणं,

होहि त्ति साहू चेइए अ ण पज्जुवासेस्सं ततो छट्ठीए पज्जोसवणा किज्जउ, आयरिएहिं भणिअं ण व... अतिक्कमितुं, ताहे रण्णा भणितं ता अणागयचउत्थीए पज्जोसविज्जति, आयरिएहिं भणिअं एवं भवउ, ताहे चउत्थीए पज्जोसविअं, एवं जुगप्पहाणेहिं कारणे चउत्थी पवत्तिआ सा चेवाणुमता सव्वसाहूणं" इत्यादि श्रीनिशीथचूर्णिदशमोद्देशके । तथा तत्रैव कषायविषये 'गच्छो अ दुन्निमासे' इत्यादिगाथाव्याख्याने "भद्दवयसुद्धपंचमीए अधिकरणे उप्पण्णे संवच्छरो भवइ, छट्ठीए एगदिणूणो संवच्छरो भवति एवमिक्किक्कदिणं परिहरंतेण ताव आणेअव्वं जाव ठवणदिणु"त्ति । एवमन्येष्वपि ग्रन्थेषु यत्र क्वापि पर्युषणानिरूपणं तत्र भाद्रपदविशेषितमेव, आस्तामन्यः श्रावणिकसगोत्रः सन्देहविषौषधीकारोऽपि कल्याणकादिषु स्वमतं पोषयन्नपि पर्युषणापर्व तु भाद्रपदविशेषितमेवोक्तवान्, न पुनः क्वापि केनाप्यभिवर्द्धितमासे श्रावणविशेषितं सर्वसाधुसर्वचैत्यवन्दना १ आलोचना २ ऽष्टमतपो ३ लोच ४ वार्षिकप्रतिक्रमण ५ विशिष्टं पर्युषणापर्व प्रतिपादितम्, यत्तु कश्चित् किमधिकमासः काकेन भक्षितः किं वा तस्मिन् मासि पातकं न भवति उत बुभुक्षादिकं न लगतीत्याद्युपहास्यवाक् भवति, स हि यक्षावेशोज्झितवसनोऽप्यलङ्कृतपुरुषं प्रत्युपहसन्निवावगन्तव्यः, कथमन्यथा पञ्चभिर्मासैश्चतुर्मासकं त्रयोदशभिश्च द्वादशमासात्मकं संवत्सरमभिवर्द्धितवर्षे ब्रुवाणोऽपीत्थमकथयिष्यत्, ननु सर्वत्राप्यागमे "चउन्हं मासाणं अट्ठण्हं पक्खाण"मित्यादि तथा "बारसण्हं मासाणं चउवीसण्हं पक्खाण"मित्यादि पाठ एवोपलभ्यते, न पुनस्तत्स्थाने क्वापि पंचण्हं मासाणं दसण्हं पक्खाणं पंचासुत्तरसयराइंदि-

आणमित्यादि, तथा तेरसण्हं मासाणं छव्वीसण्हं पक्खाणं तिन्निसयनउइराइंदियाणमित्यादि पाठः, इत्यागमपाठबलेनैव पञ्चभिरपि मासैश्चतुर्मास्येव त्रयोदशमासैश्च संवत्सर एव स्वीक्रियते इति चेत् ? चित्रं भवद्वदनेऽप्यसृतबुद्बुदोद्भवो, यतः स्वयमेवायातोऽस्मदभिमतमार्गे, न हि क्वाप्यागमे–"भद्दवयसुद्धपञ्चमीए पज्जोसविज्जइ" त्ति पाठवत्, अभिवड्डिअवरिसे सावणसुद्धपंचमीए पज्जोसविज्जइ त्ति पाठ उपलभ्यते, तस्मान्मुञ्च मुञ्च श्रावणपर्युषणापर्वगर्वं, एवमन्येष्वपि स्थविरनवकल्पविहारादिलोकोत्तरकृत्येष्वधिको मासो न विवक्षितः, आपाढे मासे दुपया इत्यादि सूर्यचारेऽपि तथैव, तथा लोकेऽपि शुद्धवर्षान्तरभाविषु नियतदिनप्रतिबद्धाक्षततृतीयादीपोत्सवादिषु पर्वस्वप्यधिकमासोनाऽधिक्रियते, मासानियतान्यपि कानिचित् शोभनानि कृत्यानि वर्द्धितमासो नपुंसक इति कृत्वा त्यक्तानीति ज्योतिःशास्त्रेषु सुप्रतीतं, ननु तर्हि प्रतिदिवसानुष्ठेयसाधुदानजिनपूजाद्यनुष्ठानस्य पर्वानुष्ठेयपाक्षिकप्रतिक्रमणादेश्च प्रयासमात्रतैवापद्येत वर्द्धितमासस्य नपुंसकत्वेन तत्कृत्यस्याप्यकिञ्चित्करत्वादिति चेत् ? अहो वैदग्ध्यं नहि नपुंसकोऽपि स्वापत्योत्पत्तिं प्रत्यकिञ्चित्करः सन् सर्वकार्यं प्रत्यकिञ्चित्कर एव, तद्वदधिकमासोऽपि न सर्वत्राप्रमाणं किन्तु यत्कृत्यं प्रति यो मासो नामग्राहं नियतस्तत्कृत्यं तस्मिन्नेव मासि विधेयम्, नान्यत्रेति विवक्षया तिथिरिव न्यूनाधिकमासोऽप्युपेक्षणीयः, अन्यत्र तु गण्यतेऽपि तथाहि-विवक्षितं हि पाक्षिकप्रतिक्रमणं तच्च चतुर्दश्यां नियतं सा च यद्यभिवर्द्धिता तदा प्रथमां परित्यज्य द्वितीयाऽधिकर्त्तव्या दिनगणनायां त्वस्या अन्यासां वा वृद्धौ सम्भवन्तोऽपि षोडशदिनाः पञ्चदशैव गण्यन्ते एवं

क्षीणायां चतुर्दशापि दिनाः पञ्चदशैवेति वोध्यम्, तद्वदत्रापि विवक्षितं कृत्यं सांवत्सरिकप्रतिक्रमणादिकं, तच्च नियतं भाद्रपदे, स च यद्यभिवर्द्धितस्तदा प्रथमं परित्यज्य द्वितीयोऽधिक्रियते दिनगणनायां त्वस्यान्यस्य वा मासस्य वृद्धौ सम्भवन्तोऽप्यशीतिर्दिनाः पञ्चाशदेव गण्यन्ते यथा तवाप्यभिमता पञ्चमास्यपि चतुर्मासीति। यच्चोक्तं साधुदानादेः प्रयासमात्रतेति तदयुक्तमेव, यतः—साधुदानजिनपूजादिकं न मासप्रतिवद्धं किन्तु दिनमात्रप्रतिवद्धं, तच्च यं कञ्चन दिनमवाप्यापि कर्त्तव्यमेव, तत्रापि क्षणविशेषनियतत्वेन, रात्रिक-दैवसिकप्रतिक्रमणयोरपि निरालम्बनं जिनोक्तवेलामतिक्रम्य परावर्त्त्य वा करणेऽनाज्ञैव, पाक्षिककृत्यमपि पाक्षिकप्रतिक्रमणादिकं तच्च चतुर्दशीनियतं तच्च यां काञ्चन चतुर्दशीमवाप्य कर्त्तव्यम्। तथा तन्मासि किं पातकं न भवति उत बुभुक्षा न लगतीत्याद्युन्मत्तोपहसनेऽपीयमेव रीतिरनुसर्त्तव्या, यतः-पातकं तु प्रति प्राणिनं प्रतिसमयं तथाविधाध्यवसायादिसामग्र्यनुरूपमुत्पद्यते न पुनर्नियतमासाद्यपेक्षयेति, एवं बुभुक्षाऽपि तथाविधवेदनीयकर्म्मोदयादेव भवति न पुनर्दिवसमासाद्यपेक्षया अन्यथा मनुष्यक्षेत्राद्वहिर्वर्त्तिनां तिरश्चां दिवसमासादिरूपकालासम्भवेन बुभुक्षाया अभाव एव सम्पद्येतेत्यादि स्वयमेवालोच्य वालचेष्टितं परिहर्त्तव्यम्। न च पर्युषणापर्वणो मासनैयत्येऽपि तिथिरपि चूर्ण्यादिषु पञ्चम्येव नियता दृश्यते तत्कथं चतुर्थीकथनमिति शङ्क्यम्, युगप्रधानश्रीकालकसूरेः पूर्वं पञ्चम्येव, इदानीं तु सर्वसङ्घाभिमततत्प्रवर्त्तिता चतुर्थ्येव, एवमागमयुक्तियुक्ते भाद्रपदविशेषितपर्युषणापर्वणि सत्यपि भोः श्रावणिक! स्वकीयकदाग्रहादश्राव्यमपि श्रावणपर्युषणापर्व

न त्यक्ष्यसि तर्हि त्वत्तः सहकारादयः प्रशस्तवनस्पतयोऽचेतना अपि शस्ताः, यतस्तेऽप्यधिकमासे प्रथममासं
परित्यज्य द्वितीयमास एव निजपुष्पफलादिकं प्रयच्छन्ति, यत उक्तम्—"जइ फुल्ला कणिआरया, चूअग!
अहिमासयंमि घुट्ठंमि । तुह न खमं फुल्लेउं, जइ पच्चंता करिंति डमराइं ॥ १ ॥" इति श्रीआवश्यकनिर्युक्तौ ।
त्वं तु ततोऽप्यचेतन इति त्वया सह विचारो न युक्तिसङ्गतः, यतः—"लभेत सिकतासु तैलमपि यत्नतः
पीडयन्, पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः । कदाचिदपि पर्यटन् शशविषाणमासादये—न्न तु प्रति-
निविष्टमूर्खजनचित्तमाराधयेत् ॥ १ ॥" इत्युपेक्षैव प्रत्युत्तरम् । यत्तु कश्चित् श्रावणिकविशेषः 'अभिवड्ढिअंमि
वीसाइअरेसु सवीसइमासो'त्ति अक्षरबलेन विंशत्याऽपि दिनैर्लोचादिपञ्चकृत्यविशिष्टं पर्युषणापर्व करोति तद-
त्यन्तासङ्गतम्, यतस्तदधिकरणादिदोषाद्यभावेन गृहिज्ञातमात्रापेक्षया पर्युषणाकरणं न तु सांवत्सरिकप्रति-
क्रमणादिविशिष्टं पर्वापि, अन्यथा "आसाढीपुण्णिमाए पज्जोसविंति एस उस्सग्गो सेसकालं पज्जोसविंताणं
सव्वो अववाओ"त्ति श्रीनिशीथचूर्णिदशमोद्देशकवचनादाषाढपूर्णिमायामेवौत्सर्गिकं पर्व करणीयं स्यात् नाप-
वादिकान्यपराणि, अथवा 'इत्थ य पणगं पणगं, कारणिअं जा सवीसइमासो । सुद्धदसमीट्ठिआणं, आसाढी-
पुण्णिमोसरणं ॥१॥' त्ति श्रीपर्युषणाकल्पनिर्युक्त्यादिवचनादाषाढशुद्धदशम्या आरभ्य पञ्चसु पञ्चसु दिनेषु गतेषु पर्यु-
षणा कृता विलोक्यते, तथाविधाने च पर्वणोऽनैयत्यात् । "तत्थ णं बहवे भवणवइ-वाणमंतर-जोइसिआ-
वेमाणिआ देवा चाउम्मासिअपाडिवएसु संवच्छरेसु अ अण्णेसु अ बहुसु जिणजम्मणनिक्खमणनाणुप्पत्तिपरि-

निव्वाणमाइएसु अ देवकज्जेसु अ देवसमुदइएसु अ देवसमितीसु अ देवसमवाएसु अ देवपओअणेसु अ एगयओसहिआ समुवागया समाणा पमुइअपक्कीलिआ अट्ठाहियारूवाओ महामहिमाओ करेमाणा पालेमाणा विहरिंति"त्ति श्रीजीवाभिगमोक्तामष्टाहिकां देवादयः क्व कुर्युः? ततो भाद्रसितपञ्चम्या अर्वाग् आषाढपूर्णिमाया आरभ्य ये ये पर्युषणाप्रकारास्ते सर्वेऽपि श्रीपर्युषणाकल्पकर्षणपूर्वकवर्षासामाचारीस्थापनरूपा एव न पुनः सांवत्सरिकप्रतिक्रमणादिविशिष्टाः। नन्वेते पर्युषणाप्रकाराः सम्प्रति कथं न क्रियन्ते? उच्यते—व्यवच्छिन्नत्वात्। तथाऽभिवर्द्धितवर्षे विंशत्यादिदिनैः क्रियमाणगृहिज्ञातावस्थानरूपपर्युषणाप्रकारस्यापि व्यवच्छिन्नत्वात् सम्प्रति तदपि कर्त्तुमनुचितं, प्रतिक्रमणादिकृत्यानि तु दूरापास्तानीत्यत्र बहु वक्तव्यं ग्रन्थगौरवभयान्नेह प्रतन्यते, अत एव कालावग्रहो जघन्यतोऽपि भाद्रपदसितपञ्चम्याश्चतुर्थ्या वारभ्य कार्तिकचतुर्मासिकान्तः सप्ततिदिनमान एवोक्तो न पुनः शतदिनमानः। कश्चित्तु 'चाउम्मासुक्कोसं सत्तरिराइंदिया जहन्नेणं'ति वचनादेकसप्ततिदिनादारभ्यैकदिनोनचातुर्मासिकं यावन्मध्यममवग्रहं स्वीकृत्य पर्युषणानन्तरं मासवृद्धौ दिनानां शतमपि न दोषायेति धार्ष्ट्यमवलम्बते, तदयुक्तम्, मध्यमत्वमपि पञ्चाशद्दिनलक्षणानियतावग्रहमध्यात् पञ्चपञ्चदिनवृद्ध्या हान्या वा स्यान्न पुनः पर्युषणानन्तरमपि दिनवृद्ध्या अन्यथा कार्तिकचतुर्मासकानैयत्यं स्यादित्यलं प्रपञ्चेनेति। उत्कर्षतो वर्षायोग्यक्षेत्रान्तराभावे आषाढमासकल्पेन सह पाश्चात्यवृष्टिसद्भावान्मार्गशीर्षेणापि सह षाण्मासिक इति। तत्र द्रव्य १ क्षेत्र २ काल ३ भाव ४ स्थापना चैवं द्रव्यस्थापना—तृणडगलः

छारमल्लकादीनां परिभोगः सचित्तादीनां च परिहारः, तत्र च सचित्तद्रव्यं शैक्षो न प्रव्राज्यते अतिश्रद्धं राजानं राजामात्यं वा विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं च सोपधिकः शैक्षः एवमाहारविकृतिसंस्तारकादिद्रव्येषु परिभोगपरिहारौ योज्यौ १, क्षेत्रस्थापना—सक्रोशं योजनं ग्लानवैद्यौपधादौ च कारणे चत्वारि पञ्च वा योजनानि २ कालस्थापना—चत्वारो मासास्तत्र कल्पन्ते ३ भावस्थापना—क्रोधादीनां विवेकईर्याभापादिसमितिषु चोपयोग ४ इति ॥ ७ । ८ ॥

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सवओ समंता सक्कोसं

जोअणं ओग्गहं ओगिन्हित्ता णं चिट्ठिउं अहालंदमवि ओग्गहे ॥ ९ ॥

व्याख्या—वासावासमित्यादितः अहालंदमवि ओग्गहे त्ति पर्यन्तम् , तत्र वर्षावासं पर्युपितानां-स्थितानां निर्ग्रन्थानां निर्ग्रन्थीनां वा सर्वतः-चतसृषु दिक्षु विदिक्षु च सक्रोशं योजनमवग्रहमवगृह्य अथालंदमपीति अथेत्ययं निपातः लन्दमिति कालस्याख्या ततो लन्दमपि स्तोककालमप्यवग्रहे स्थातुं कल्पते न बहिर्लन्दकालमपि स्थातुं कल्पते, तत्र यावत्कालेनोदकार्द्रः करः शुष्यति तावान् कालो जघन्यं लन्दं, उत्कृष्टं पञ्चाहोरात्रास्तयोरन्तरे मध्यं, यथा—रेफप्रकृतिरप्यरेफप्रकृतिरपीति, एवं लन्दमप्यवग्रहे स्थातुं कल्पते अलन्दमपि यावत् पण्मासानेकत्रावग्रहे स्थातुं कल्पते, ऊर्ध्वाधोमध्यग्रामान् विना चतसृषु दिक्षु गजेन्द्रपदादिगिरेर्मेखलाग्रामस्थितानां तु पट्सु दिक्षु उपाश्रयात्सार्द्ध-

क्रोशद्वयं गमागमेन पञ्चक्रोशावग्रहः । यच्चानन्तरं विदिक्षु इत्युक्तं तद् व्यावहारिकविदिगपेक्षयाऽवगन्तव्यम्, यतो भवन्ति हि ग्रामा मूलग्रामादाग्नेय्यादिविदिक्षु, निश्चयिकविदिक्षु चैकप्रदेशात्मकत्वान्न गमनागमनसम्भवः, अटवीजलादिना व्याघाते तु त्रिदिको द्विदिक एकदिको वाऽवग्रहो भाव्यः ॥ ९ ॥

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सवओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतु पडिनियत्तए ॥ १० ॥

व्याख्या—वासावासमित्यादितो गंतु पडिनिअत्तए त्ति पर्यन्तं सुगमम् ॥ १० ॥

जत्थ नई निच्चोयगा निच्चसंदणा नो से कप्पइ सवओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतु पडिनियत्तए ॥ ११ ॥

व्याख्या—जत्थ नई इत्यादितो निअत्तए त्ति पर्यन्तम्, तत्र यत्र नदी नित्योदका–नित्यमस्तोकजला नित्यस्यन्दना–नित्यश्रवणशीला सततवाहिनीत्यर्थः ॥ ११ ॥

एरावई कुणालाए, जत्थ चक्किआ सिआ, एगं पायं जले किच्चा एगं पायं थले किच्चा एवं चक्किआ एवन्हं कप्पइ सवओ समंता सक्कोसं जोयणं गंतुं पडिनियत्तए ॥ १२ ॥

व्याख्या—एरावई इत्यादितो निअत्तए त्ति पर्यन्तम्, तत्र एरावती नाम नदी कुणालापुर्यां सदा द्विक्रोश-

वाहिनी तादृशी नदी लंघयितुं कल्पते स्तोकजलत्वात्, पर्यूषणाकल्पटिप्पनके त्वैरावती नदी वर्षाकाले अक-
ल्प्यत्वेनैव व्याख्याताऽस्ति, परं बृहत्कल्पादिभिर्विसंवादित्वाद्विचार्यमेवैतद् व्याख्यानमिति । जत्थ चक्किअ त्ति
यत्र शक्नुयात् सिआ यदि एकं पादं जलमध्ये निक्षिप्य एकं च पादं स्थले-आकाशे कृत्वा द्वाभ्यां पादाभ्याम-
विलोडयन् गन्तुं शक्नुयात् तदा तत्परतः स्थितग्रामादौ भिक्षाचर्या कल्प्या नान्यथा, एकं पादं जलान्तः प्रक्षि-
पति द्वितीयं च जलादुपर्युत्पाटयति तदा कल्प्या, जलं विलोड्य गमने त्वकल्प्येत्यर्थः ॥ १२ ॥

एवं च नो चक्किआ एवं से नो कप्पइ सव्वओ समंता सक्कोसं जोयणं गंतुं पडिनिअत्तए ॥ १३ ॥

व्याख्या—एवं चेत्यादितो निअत्तए त्ति यावत्, तत्र एवं च यत्र न शक्नुयात् गत्वा प्रत्यागन्तुं तत्र न गच्छेत् ।
यत्र च जङ्घार्धं यावदुदकं स दकसङ्घट्टः नाभिं यावल्लेपः तत्परतो लेपोपरि, तत्र ऋतुबद्धे काले भिक्षाचर्यायां
यत्र त्रयो दकसङ्घट्टाः वर्षासु च सप्त भवेयुस्तत्र क्षेत्रं नोपहन्यते चतुरादिभिरष्टादिभिश्च तैरुपहन्यते, ते च ऋतुबद्धे
गतागतेन षट् वर्षासु च चतुर्दश स्युः, लेपश्चैकोऽपि क्षेत्रं हन्ति किं पुनर्लेपोपरि, तथा यदि चतुरो मासान्
एकद्वित्र्यादिदिनान् वा उपोषितः स्थातुमशक्तः तदा जघन्यतोऽपि पूर्वक्रियमाणनमस्कारसहितादेः पौरुष्या-
दितपोवृद्धिं कुर्यादिति ॥ १३ ॥

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ, दावे भंते! एवं से कप्पइ
दावित्तए नो से कप्पइ पडिगाहित्तए ॥ १४ ॥

व्याख्या—वासावासमित्यादितः पडिगाहित्तए त्ति पर्यन्तम्, तत्र अत्थे गइआणं त्ति अस्त्येतत् यदेकेषां साधूनां पुरत एवमुक्तपूर्वं भवति गुरुभिरिति गम्यते चूर्णौ तु 'अत्थेगइआ आयरिया' इत्युक्तं 'अत्थं भासइ आयरिओ' त्ति वचनात्, अर्थ एव—अनुयोग एव एकायिता—एकाग्रचेतसोऽर्थैकायितास्तेषां अथवा अस्त्येतत् एकेषामाचार्याणामिदमुक्तपूर्वं भवतीति व्याख्येयम्, तत्र च षष्ठी तृतीयार्थे ततश्चाचार्यैरेवमुक्तं भवति—यत् दावे भंते त्ति हे भदन्त !—कल्याणिन्! साधो ! दावे इति—ग्लानाय दद्याः 'स्वार्थिके णो वा' दापयेः—दद्याः अशनादिकमानीयेति गम्यते, अनेन च ग्लानदानादेशेनाद्यचतुर्मासकादौ स्वयं मा प्रतिगृण्हीयात् इत्युक्तं एवमुक्ते से तस्य साधोः कल्पते दातुमर्थात् ग्लानाय न स्वयं प्रतिगृहीतुं गुरुणाऽननुज्ञातत्वात् ॥ १४ ॥

वासावासं पज्जोसवियाणं अत्थे गइयाणं एवं वुत्तपुव्वं भवइ पडिगाहेहि भंते! एवं से कप्पइ पडिगाहित्तए नो से कप्पइ दावित्तए ॥ १५ ॥

व्याख्या—वासावासमित्यादितः नो से कप्पइ दावित्तए त्ति पर्यन्तम्, तत्र गुरुणोक्तं स्वयं प्रतिगृण्हीयाः ग्लानायान्यो दास्यति नासौ वाऽद्य भोक्ष्यते ततः प्रतिगृहीतुं कल्पते न ग्लानाय दातुम् ॥ १५ ॥

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ दावे भंते पडिग्गाहेहि भंते! एवं से कप्पइ दावित्तए वि पडिग्गाहित्तए वि ॥ १६ ॥

व्याख्या—वासावासमित्यादितः पडिग्गाहित्तए वि त्ति पर्यन्तम्, तत्र अथ गुरुणोक्तं स्याद् भदन्त ! दद्याश्च ग्लानाय प्रतिगृण्हीयाश्च यदद्य त्वमक्षमोऽसीति ततो दानं तस्मै प्रतिग्रहणं च स्वयं कल्पते, गुरुभिरनुक्ते चेत् ग्लानायानयति स्वयं वा गृण्हाति तदा परिष्ठापनिकादिदोषोऽजीर्णादिना ग्लानत्वं वा मोहोद्भवो वा क्षीरादौ च धरणाधरणे आत्मसंयमविराधनेति ॥ १६ ॥

वासावासं पज्जोसवियाणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा हट्ठाणं आरुग्गाणं बलिअ-सरीराणं इमाओ नवरसविगईओ अभिक्खणं अभिक्खणं आहारित्तए तं जहा खीरं १ दहिं २ णवणीअं ३ सप्पिं ४ तिल्लं ५ गुडं ६ महुं ७ मज्जं ८ मंसं ९ ॥ १७ ॥

व्याख्या—वासावासमित्यादितो मंसं ति पर्यन्तम्, तत्र हृष्टानां–तरुणत्वेन समर्थानां युवानोऽपि केचित्सरोगाः स्युरित्याह—अरोगाणां क्वचिद् आरुग्गाणमिति पाठस्तत्रारोग्यमस्त्येषामित्यभ्रादित्वादप्रत्यये आरोग्यास्तेषां, तादृशा अपि केचित् कृशाङ्गाः स्युरित्याह—बलिकशरीरिणां, रसप्रधाना विकृतयो रसविकृतयस्ता अभीक्ष्णं–पुनः पुनर्न कल्पन्ते, रसग्रहणं तासां मोहोद्भवहेतुत्वख्यापनार्थं, अभीक्ष्णग्रहणं पुष्टालम्बने कदाचित्तासां परिभोगानुज्ञार्थं, नवग्रहात्कदाचित् पक्वान्नं गृह्यतेऽपि । विकृतयो द्विधा सञ्चयिका असञ्चयिकाश्च, तत्रासञ्चयिकाः दुग्धदधिपक्वान्नाख्या ग्लानत्वे वा गुरुबालवृद्धतपस्विगच्छोपग्रहार्थं वा श्रावकादरनिमन्त्रणाद्वा ग्राह्याः, सञ्चयिकास्तु घृततैल-

गुडाख्यास्तिस्रस्ताश्च प्रतिलाभयन् गृही वाच्यः महान् कालोऽस्ति ततो ग्लानादिकार्ये ग्रहीष्यामः स वदेत् गृण्हीत चतुर्मासीं यावत्प्रभूताः सन्ति ततो ग्राह्याः बालादीनां च देया न तरुणानाम् । यद्यपि मद्यादिवर्जनं यावज्जीवमस्त्येव तथापि कदाचिदत्यन्तापवाददशायां ग्रहणेऽपि कृतपर्युषणानां सर्वथा निषेधः ॥ १७ ॥

वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ, अट्ठो भंते! गिलाणस्स, से अ वइज्जा अट्ठो, से अ पुच्छेअव्वे केवइएणं अट्ठो? से य वइज्जा एवइएणं अट्ठो गिलाणस्स, जं से पमाणं वयइ से पमाणओ घित्तव्वे, से अ विन्नविज्जा, से अ विन्नवेमाणे लभेज्जा, से अ पमाणपत्ते होउ अलाहि इअ वत्तव्वं सिआ, से किमाहु भंते! एवइएणं अट्ठो गिलाणस्स, सिया णं एवं वयंतं परो वइज्जा पडिगाहेहि अज्जो तुमं पच्छा भुक्खसि वा पाहिसि वा, एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ गिलाणनीसाए पडिगाहित्तए ॥ १८ ॥

व्याख्या—वासावासमित्यादितो नो से कप्पइ गिलाणनीसाए पडिग्गाहित्तए त्ति पर्यन्तम्, तत्र अस्त्येकेषां वैयावृत्त्यकरादीनामेवमुक्तपूर्वं भवति गुरुं प्रतीति शेषः, हे भदन्त! भगवन्! अर्थः—प्रयोजनं ग्लानस्य विकृत्येति काका प्रश्नावगतिः एवमुक्ते स च गुरुर्वदेत् अर्थः से अ पुच्छेइ त्ति तं च ग्लानं स वैयावृत्त्यकरः पृच्छति कियत्

से अ पुच्छेअव्वे त्ति पाठः तत्र ग्लानः प्रष्टव्यः किं पृच्छतीत्याह–केवइएणं अट्ठो कियता विकृतिजातेन क्षीरादिना तवार्थः, तेन च ग्लानेन स्वप्रमाणे उक्ते स वैयावृत्यकरो गुरोरग्रे समागत्य ब्रूयात्, एवइएणं अट्ठो गिलाणस्स इति इयतार्थो ग्लानस्य, ततो गुरुराह–जं से इति यत्स ग्लानः प्रमाणं वदति तत्प्रमाणेन से इति तद्विकृतिजातं ग्राह्यं त्वया, से अ विण्णविज्जा स च वैयावृत्यकरादिर्विज्ञपयेत्–याचेत् गृहस्थपार्श्वात् विज्ञसि-धातुरत्र याञ्चायां, स च याचमानो लभेत तद्वस्तु, तच्च प्रमाणप्राप्तं-पर्याप्तं जातं ततश्च होउ अलाहि त्ति साधुप्रसिद्ध-इत्थमिति शब्दस्यार्थे भवत्विति पदं अलाहि त्ति सृतमित्यर्थः, 'अलाहि निवारणे' इति वचनात् अन्यन्मा दाः इति वक्तव्यं स्यात् गृहस्थं प्रति ततो गृही प्राह–अथ किमाहुर्भदन्ताः—किमर्थं सृतमिति ब्रुवते भवन्तः इत्यर्थः, साधुराह-एवइएणं अट्ठो गिलाणस्स एतावताऽर्थो ग्लानस्य सिआ कदाचित् एनं साधुमेवंवदन्तं परो दाता गृही वदेत् किमित्याह अज्जो इत्यादि हे आर्य! प्रतिगृहाण त्वं पश्चाद्यदधिकं तत्त्वं भोक्ष्यसे–भुञ्जीथाः पक्वान्नादि पास्यसि पिबेर्द्रवं क्षीरादि क्वचित् पाहिसिस्थाने दाहिसि त्ति पाठः, तत्रातीव हृद्यम्, अन्यस्य साधोर्वा दद्याः एवमुक्ते गृहिणा से तस्य साधोः कल्पते प्रतिगृहीतुं न पुनर्ग्लाननिश्रया गार्ध्यात् स्वयं गृहीतुं ग्लानार्थं याचितं मण्डल्यां नानेयमित्याकूतम् ॥ १८ ॥

वासावासं पज्जोसवियाणं अत्थि णं थेराणं तहप्पगाराइं कुलाइं कडाइं पत्तियाइं थिज्जाइं

वेसासियाइं संमयाइं बहुमयाइं अणुमयाइं भवंति, तत्थ से नो कप्पइ अदक्खुवइत्तए अत्थि ते आउसो ! इमं वा इमं वा से किमाहु भंते ! सड्ढी गिही गिन्हइ वा तेणिअं पि कुज्जा ॥१९॥

व्याख्या—वासावासमित्यादितः तेणिअं पि कुज्ज त्ति पर्यन्तम्, तत्र तहप्पगाराइं इत्यादि, तथाप्रकाराणि—अजुगुप्सितानि कुलानि—गृहाणि कडाइं ति तैरन्यैर्वा श्रावकीकृतानि पत्तिआइं ति प्रत्ययितानि प्रीतिकराणि वा, स्थैर्यमस्त्येष्विति स्थैर्याणि प्रीतौ दाने वा, ध्रुवं लप्स्येऽहमत्रेति विश्वासो येष्विति वैश्वासिकानि, सम्मयाइं ति सम्मतयतिप्रवेशानि, बहवोऽपि साधवोऽपि नैको द्वौ वा मता येषु बहूनां वा गृहिमानुषाणां मतः साधुप्रवेशो येषु तानि बहुमतानि, अनुमतानि—दातुमनुज्ञातानि अणुरपि—क्षुल्लकोऽपि मतो येषु सर्वसाधुसाधारणत्वात् अणुमतानीति वा न तु मुखं दृष्ट्वा तिलकं कर्षयन्तीति, तत्थ त्ति तेषु कुलेषु तस्य साधोः अदक्खु इति याच्यं वस्त्वदृष्ट्वा न कल्पते वक्तुं यथाऽस्ति ते आयुष्मन् असुकमसुकं वा वस्त्विति, कुतो यतः सड्ढी त्ति श्रद्धावान् दानवासितको गृही तत्साधुयाचितं वस्तु मूल्येन गृण्हीत चौर्येणाप्यानीय तद्वस्तु वितरेत् पूर्वकथिते उष्णोदके दुग्धे वा ओदनसक्तुमण्डकादिप्रक्षिपेद्वा आपणाद्वा नयेत् प्रामित्यं वा कुर्यादिति, कृपणगृहेष्वदृष्ट्वापि याचने न तथा दोष इत्यर्थः ॥ १९ ॥

वासावासं पज्जोसवियस्स निच्चभत्तिअस्स भिक्खुस्स कप्पति एगं गोयरकालं गाहावइकुलं

भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा, णण्णत्थायरिअवेआवच्चेण वा एवं उवज्झायवेयावच्चेण वा तवस्सिवेआवच्चेण वा गिलाणवेआवच्चेण वा खुडएण वा खुड्डि-आए वा अव्वंजणजायएण वा ॥ २० ॥

व्याख्या—वासावासमित्यादितोऽव्वंजणजाएण वेति पर्यन्तम्, तत्र निच्चभत्तिअस्स त्ति नित्यमेकाशनिनः गाहावइकुलं गृहस्थवेश्म भत्ताए एगं गोअरकालं एकस्मिन् गोचरचर्याकाले सूत्रपौरुष्यर्थपौरुष्यनन्तरमित्यर्थः, एकवार-भक्तार्थं पानाए पानार्थं णण्णत्थेत्यादि, णं वाक्यालङ्कारे अन्यत्राचार्यवैयावृत्त्यात् तद्वर्जयित्वेत्यर्थः, एकवार-भुक्तेन यदि तत्कर्त्तुं न पारयति तदा द्विरपि भुङ्क्ते, यतस्तपोऽपेक्षया वैयावृत्त्यं गरीयः एवमुपाध्यायादिष्वपि वाच्यम्, अव्वंजणजायएणं त्ति न व्यञ्जनानि—वस्तिकूर्चकक्षादिरोमाणि जातानि यस्यासावव्यञ्जनजातस्ततः स्वार्थे कस्तस्मात् क्षुल्लकादन्यत्र यावत्तस्य व्यञ्जनानि नो भिद्यन्ते तावत्तस्य द्विरपि भुञ्जानस्य न दोषः, यद्वा वैयावृत्त्य-मस्यास्तीत्यभ्रादित्वादप्रत्यये वैयावृत्त्यः आचार्यश्च वैयावृत्त्यश्चाचार्यवैयावृत्त्यौ ताभ्यामन्यत्र एवमुपाध्यायादिष्वपि नेयम्, आचार्योपाध्यायतपस्विग्लानक्षुल्लकानां द्विभक्तस्याप्यनुज्ञातत्वात् ॥ २० ॥

वासावासं पज्जोसवियस्स चउत्थभत्तिअस्स भिक्खुस्स अयं एवइए विसेसे जं से पाओ नि-क्खम्म पुव्वामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिअ संपमज्जिय से य संथरिज्जा

कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए से अ नो संथरिज्जा एवं से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २१ ॥

व्याख्या—वासावासमित्यादितः पविसित्तए व त्ति यावत्, तत्र अयमेवइए इत्यादि, अयं वक्ष्यमाण एतावान् विशेषः यत्स आचार्योपाध्यायादिभ्योऽन्यः साधुश्चतुर्थभोजी प्रातर्निःक्रम्य-उपाश्रयान्निर्गत्य पूर्वमेव विकटं—उद्गमादिशुद्धं प्रासुकाहारं भुक्त्वा पीत्वा च तक्रादिकं संसृष्टकल्पं वा पतद्ग्रहं—पात्रं संलिख्य—निर्लेपीकृत्य संमृज्य च—प्रक्षाल्य से अ त्ति यदि संस्तरेत्—निर्वहेत् तदा तत्र दिने तेनैव भक्तार्थेन—भोजनेन परिवसेत्, अथ न संस्तरेत् स्तोकत्वात् तदा दुच्चंपि त्ति द्वितीयवेलायामपि भिक्षेतेत्यर्थः ॥ २१ ॥

वासावासं पज्जोसवियस्स छट्ठभत्तियस्स भिक्खुस्स कप्पंति दो गोयरकाला गाहावइ कुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥ २२ ॥

व्याख्या—वासावासमित्यादितः पविसित्तए त्ति पर्यन्तम्, तत्र षष्ठभक्तिकस्य द्वौ गोचरकालाविति ॥ २२ ॥

वासावासं प० अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ गोयरकाला गाहा० भ० पा० नि० प० ॥ २३ ॥

व्याख्या—वासावासमित्यादितः पविसित्तए त्ति यावत्, तत्र अष्टमभक्तिकस्य त्रयः, न च प्रातर्गृहीतमेव धारयेत् सञ्चयसंसक्तिसर्पाघ्राणादिदोपप्रसङ्गात् ॥ २३ ॥

वासावासं प० विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वे वि गोयरकाला गाहा० भ० पा० नि० प० ॥ २४ ॥

व्याख्या—वासा० पवि० तत्र विगिट्ठभत्तिअस्स त्ति अष्टमादूर्ध्वं यत्तपस्तद्विकृष्टभक्तमुच्यते सव्वे वि गोअरकाल त्ति चतुरोऽपि प्रहरान् ॥ २४ ॥ एवमाहारविधिमुक्त्वा पानकविधिमाह—

वासावासं प० निच्चभत्तिअस्स भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए, वासावासं प० चउत्थभत्तिअस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा-उस्सेइमं संसेइमं चाउलोदगं । वासावासं प० छट्ठभत्तिअस्स भिखुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं जहा-तिलोदगं तुसोदगं जवोदगं । वासावासं प० अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए तं जहा—आयामं सोवीरं सुद्धवियडं । वासावासं प० विकिट्ठभत्तियस्स भिक्खुस्स कप्पति एगे उसिणवियडे पडिगाहित्तए, से वि अ णं अ-

**सित्थे नो चेव णंससित्थे, से वि य णं परिपूए नो चेव णं अपरिपूए, से वि य णं परिमिए नो चेव णं अपरिमिए, से वि य णं बहुसंपुन्ने नो चेव णं अबहुसंपुन्ने ॥ २५ ॥**

व्याख्या—वासावासमित्यादितो नो चेव णं अबहुसंपुन्ने त्ति यावत्, तत्र सव्वाइं पाणगाइं ति पानैषणोक्तानि वक्ष्यमाणानि वोत्स्वेदिमादीनि अन्यत्रोक्तानि त्वेवं—"उस्सेइम १ संसेइम २-तंदुल ३ तिल ४ तुस ५ जवोदगा ६ यामं ७। सोवीर ८ सुद्धविअडं ९, अंबय १० अंबाडग ११ कविट्ठं १२ ॥ १ ॥ मउलिंग १३ दक्ख १४ दाडिम १५-खजूर १६ नालिअर १७ कइर १८ बोर १९ जलं। आमलगं २० चिंचापाणगाइ २१, पढमंगभणिआइं ॥२॥" तथा—"आयामगं चेव जवोदणं च, सीअं सोवीरं च जवोदगं च। नो हीलए पिंडं नीरसं तु, पंतकुलाइं परिव्वए जे स भिक्खु ॥ १ ॥" त्ति श्रीउत्तराध्ययने इत्यादि, अत्र च ग्रन्थे "उस्सेइम १ संसेइम २-चाउल ३ तिल ४ तुस ५ जवाण ६ तह उदयं। आयामं ७ सोवीरं ८ च, सुद्धविअडं ९ जलं नवहा ॥ १ ॥" त्ति तत्र उत्स्वेदिमं—पिष्टजलं पिष्टभृतहस्तादिक्षालनजलं वा १, संस्वेदिमं संसेकिमं वा—यत् पर्णाद्युत्काल्य शीतोदकेन सिच्यते २, चाउलोदगं—तंदुलधावनं ३, तिलोदकं—महाराष्ट्रादिषु निस्त्वचिततिलधावनजलं ४, तुषोदकं—व्रीह्यादिधावनं ५, यवोदकं—यवधावनं ६, आयामको—ऽवश्रावणं ७, सोवीरं—काञ्जिकं ८ शुद्धविकटं—उष्णोदकं, केचित् तु शुद्धविकटशब्देन उष्णोदकं वर्णान्तरादिप्राप्तं शुद्धजलं वेति विकल्प्य व्याख्यानयन्ति तत्तु पट्कल्याणकव्याख्यानवत्सन्देहविषौषधीगतमेव व्याख्यानं न पुनरागमिकम्, यतः पर्युषणाकल्पचूर्ण्यादिषु स्थानाङ्गवृत्त्यादिषु च यत्र

क्वापि शुद्धविकटशब्दस्य व्याख्यानमुपलभ्यते तदुष्णोदकपरमेव न पुनर्वैकल्पिकमपीति । उसिणवियडे इत्युष्णजलं
तदप्यसिक्थम्, यतः प्रायेणाष्टमोर्ध्वं तपस्विनः शरीरं देवताऽधितिष्ठति, भत्तपडिआइक्खिअस्स त्ति प्रत्याख्यात-
भक्तस्यानशनिन इत्यर्थः, परिपूए त्ति वस्त्रगलितं अपरिपूते तृणकाष्ठादेर्गले लगनात्, तदपि परिमितमन्यथाऽजीर्णं
स्यात्, क्वचित् से वि अ णं बहुसंपुन्ने नो वि अ णं अबहुसंपुण्णे इति, तत्र ईषदपरिसमासं सम्पूर्णं—बहुसम्पूर्णं 'नाम्नः
प्राग् बहुर्वा' इति बहुप्रत्ययः, स्तोकतरे हि तृष्मात्रस्यापि नोपशम इति, एवमागमसिद्धेऽप्युत्स्वेदिमाद्युष्णा-
वसाने पानीये प्रत्याख्यानभङ्गाद्यसद्दोषमाविष्कृत्य वर्णान्तरमात्रापन्नं शीतलजलमेवोत्सर्गतः पिबन्तः पानीयाहार-
लाम्पट्यात्रसेष्वप्यनुकम्पारहिता दीर्घसंसारिणोऽवगन्तव्याः, न चैवंविधपानीयं पिबन्तः सचित्ताहारपरित्यागिनः
श्रावका अप्युपलभ्यन्ते तेषामपि त्रसानुकम्पाराहित्यं सम्पत्स्यते इति शङ्क्यम्, यतः तैर्वस्त्रपूतीकृतव्यापारितजलाद-
वशिष्टस्य सत्रसजलस्य यतना कर्तुं शक्यत न पुनस्तद्वत्साधुभिरपीति ॥ २५ ॥

वासावासं प० संखादत्तिअस्स भिक्खुस्स कप्पंति पंचदत्तीओ भोअणस्स पडिगाहित्तए पंच
पाणगस्स, अहवा चत्तारि भोयणस्स पंच पाणगस्स, अहवा पंच भोयणस्स चत्तारि पाणगस्स,
तत्थ णं एगा दत्ती लोणासायणमित्तमवि पडिगहिया सिया कप्पइ से तद्दिवसं तेणेव भत्त-
ट्ठेणं पज्जोसवित्तए, नो से कप्पइ दुच्चंपि गा० भ० पा० नि० प० ॥ २६ ॥

व्याख्या—वासावासं० पविसत्तए त्ति यावत्, तत्र संखादत्तिअस्स त्ति सङ्ख्यया उपलक्षिता दत्तयो यस्येति सङ्ख्यादत्तिकस्तस्य दत्तिपरिमाणवत इत्यर्थः, लोणासायण त्ति लवणं किल स्तोकं दीयते यदि तावन्मात्रं भक्तपानस्य गृण्हाति साऽपि दत्तिर्गण्यते अतो लवणास्वादनमात्रमपि प्रतिगृहीता दत्तिः स्यात्, पञ्चेत्युपलक्षणं तेन चतस्रस्तिस्रो द्वे एका षट् वा सप्त वा यथाऽभिग्रहं वाच्याः, केनचित्पञ्च दत्तयो भोजनस्य लब्धाः तिस्रश्च पानकस्य ततोऽवशिष्टाः पानसक्ता भोजने भोजनसक्ता वा पाने इत्येवं समावेशोऽकल्प्य इत्यर्थः ॥ २६ ॥

वासावासं पज्जोसविआणं नो कप्पइ निग्गंथाण वा निग्गंथीण वा जाव उवस्सयाओ सत्तघरंतरं संखडिं संनियट्टचारिस्सइत्तए, एगे पुण एवमाहंसु नो कप्पइ जाव उवस्सयाओ परेणं संखडिं सन्निअट्टचारिस्सइत्तए, एगे पुण एवमाहंसु नो कप्पइ जाव उवस्सयाओ परंपरेणं संखडिं संनियट्टचारिस्सइत्तए ॥ २७ ॥

व्याख्या—वासावासमित्यादितः संनिअट्टचारिस्सइत्तए त्ति यावत्, तत्र उपाश्रयात्—शय्यातरगृहादारभ्य यावत्सप्तगृहान्तरं—सप्तगृहमध्ये संखडिं ति संस्क्रियते इति संस्कृतिः—ओदनपाकस्तां गन्तुं न कल्पते—पिण्डपानार्थं तत्र न गच्छेदित्यर्थः, तेषां गृहाणां सन्निहिततया साधुगुणहृतहृदयत्वेनोद्गमादिदोषसम्भवात् एतावता—शय्यातरगृहमन्यानि च षडासन्नगृहाणि वर्जयेदित्युक्तं, कस्य न कल्पते इत्याह—सन्निअट्टचारिस्स त्ति निषिद्धगृहेभ्यः सन्निवृत्तश्च-

व्याख्या—वासावासमित्यादितो दगफुसिआ वा णो परिआवज्जइ त्ति यावत्, तत्र अगिहंसि त्ति अनाच्छादिते आकाशे इत्यर्थः, पिण्डपातं-आहारं प्रतिगृह्य पज्जोसवित्तए आहारयितुं न कल्पते, पज्जोसवेमाणस्स कदाचिदाकाशे भुञ्जानस्य यद्यर्द्धभुक्तेऽपि वृष्टिपातः स्यात् तदा पिण्डपातस्य देशं भुक्त्वा देशं चादाय पाणिमाहारैकदेशसहितं पाणिना—द्वितीयहस्तेन परिधाय—आच्छाद्य उरसि—हृदये निलीयते—निक्षिप्येत् वाणमिति तं साहारं पाणिं कक्षायां वा समाहरेत्—अन्तर्हितं कुर्यात्, एवं च कृत्वा यथाछन्नानि—गृहिभिः स्वनिमित्तमाच्छादितानि लयनानि-गृहाणि उपागच्छेत् वृक्षमूलानि वा, यथा से तस्य पाणौ दकादीनि न पर्यापद्यन्ते-न पतन्ति वा, तत्र दकं—बहवो बिन्दवः दकरजो—बिन्दुमात्रं दगफुसिआ फुसारं-अवश्याय इत्यर्थः । ननु जिनकल्पिकादयो देशोनदशपूर्वधरत्वेनातिशयज्ञानिनस्तैश्च प्रागेवोपयोगः कृतो भविष्यतीति कथमर्धभुक्तेऽपि वृष्टिः सम्भवेत् ? सत्यं छाद्मस्थिकोपयोगस्तथा स्यान्नवेत्यदोषः ॥ २९ ॥ उक्तमेवार्थं निगमयन्नाह—

वासावासं प० पाणिपडिग्गहिअस्स भिक्खुस्स जं किंचि कणगफुसिअमित्तं पि निवडइ नो से कप्पइ गाहा०भ० पा० नि० प० ॥ ३० ॥

व्याख्या—वासावासमित्यादितः पविसित्तए त्ति यावत्, तत्र कणगफुसिअमित्तं पि त्ति कणो—लेशस्तन्मात्रकं पानीयं कणकं तस्य फुसिआ—फुसारमात्रम् ॥ ३० ॥ उक्तः पाणिपात्रविधिः । अथ पतद्ग्रहधारिणस्तमाह—

व्याख्या—वासावासमित्यादितो उवागच्छित्तए त्ति यावत्, तत्र निगिज्झिअ निग्गिज्झिअ त्ति स्थित्वा स्थित्वा वर्षति अहे उवस्सयंसि वा आत्मनः साम्भोगिकानामितरेषां वोपाश्रयस्याधः तदभावे विकटगृहे—आस्थानमण्डपिकायां यत्र ग्राम्यपर्षदुपविशति, तत्र स्थितो हि वेलां वृष्टेः स्थितास्थितस्वरूपं च जानाति यथाऽशङ्कनीयश्च स्यात् वृक्षमूलं वाऽनिर्गलकरीरादौ उवागच्छित्तए त्ति उपागन्तुम् ॥ ३२ ॥

तत्थ से पुव्वागमणेणं पुव्वाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे कप्पइ से चाउलोदणे पडिगाहित्तए, नो कप्पइ से भिलिंगसूवे पडिगाहित्तए ॥ ३३ ॥ तत्थ से पुव्वागमणेणं पुव्वाउत्ते भिलिंगसूवे पच्छाउत्ते चाउलोदणे कप्पइ से भिलिंगसूवे पडिगाहित्तए नो से कप्पइ चाउलोदणे पडिगाहित्तए ॥ ३४ ॥ तत्थ से पुव्वागमणेणं दोवि पुव्वाउत्ताइं कप्पंति से दोवि पडिगाहित्तए, तत्थ से पुव्वागमणेणं दोवि पच्छाउत्ताइं एवं नो से कप्पंति दोवि पडिगाहित्तए, जे से तत्थपुव्वागमणेणं पुव्वाउत्ते से कप्पइ पडिगाहित्तए, जे से तत्थ पुव्वागमणेणं पच्छाउत्ते नो से कप्पइ पडिगाहित्तए ॥ ३५ ॥

व्याख्या—तत्थ से पुव्वेत्यादितः पडिगाहित्तए त्ति यावत् सूत्रत्रयेण सम्बन्धः, तत्र तत्थ त्ति विकटगृहवृक्षमू-

लादौ स्थितस्य तस्य साधोः पुव्वागमणेणं ति आगमनात् पूर्वकालं अथवा पूर्वं साधुरागतः पश्चाद्दायको राद्धुं प्रवृत्त इति पूर्वागमनेन हेतुना पूर्वायुक्तस्तन्दुलोदनः कल्पते, पश्चादायुक्तो भिलिङ्गसूपो–मसूरदालिर्माषिकदालिर्वा सस्नेह-सूपो वा न कल्पते, तत्र पूर्वायुक्तः–साध्वागमनात् पूर्वमेव स्वार्थं गृहस्थैः पक्तुमारब्धः, साधावागते च यः पक्तुमारब्धः स पश्चादायुक्तः स च न कल्पते उद्गमादिदोषसम्भवात्, पूर्वायुक्तस्तु कल्पते तदभावात्, एवं शेषालापकद्वयमपि भाव्यम् । जे से तत्थेत्यादिना सङ्ग्रहस्तु स्पष्ट एव, केचित्तु यच्चुल्ल्यामारोपितं तत्पूर्वायुक्तं, अन्ये तु यत्समीहितं तत्पूर्वायुक्तं, समीहितं नाम–यत्पाकार्थमुपढौकितं, एतौ च द्वावप्यनादेशौ, आदेशस्त्वयं यः साध्वागमनात् पूर्वं गृहिभिः स्वार्थमुपस्क्रियमाणं तत्पूर्वायुक्तं तथा चागमः–"पुव्वाउत्तारुहिअं, केसिंचि समीहिअं तु जं तत्थ । एए न हुंति दुन्नि वि, पुव्वपवत्तं तु जं तत्थ ॥ १ ॥" अनादेशे त्वयं हेतुः—"पुवारुहिए अ समी–हिए अ किं बुज्झइ न खलु अन्नं । तम्हा जं खलु उचिअं, तं तु पमाणं न इअरं तु ॥ २ ॥ वालगपुच्छाईहिं, नाउं आयरमणायरेहिं च । जं जुग्गं तं गिण्हइ, दव्वपमाणं च जाणिज्जा ॥ ३ ॥" ॥ ३३ ॥ ३४ ॥ ३५ ॥

वासावासं प० निग्गंथस्स गाहावइकुलं पिंडवायपडिआए अणुपविट्ठस्स निग्गिज्झिअ निग्गिज्झिअ वुट्ठिकाए निवइज्जा कप्पइ से अहे आरामंसि वा जाव उवागच्छित्तए, नो से कप्पइ पुव्वगहिएणं भत्तपाणेणं वेलं उवायणावित्तए, कप्पइ से पुव्वामेव वियडगं भुच्चा

पिच्चा पडिग्गहगं संलिहिअ २ संपमज्जिअ २ एगाययं भंडगं कट्टु सावसेसे सूरिए जेणेव उवस्सए तेणेव उवागच्छित्तए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥ ३६ ॥

व्याख्या—वासावासमित्यादितो नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए त्ति पर्यन्तम्, तत्र वेलं उवायणावित्तए त्ति वेलामतिक्रामयितुं, तत्र च तिष्ठतः कदाचिद्वर्षं नोपरमति तत्र का मेरेत्याह विअडगं इत्यादि विकटं—उद्गमादिशुद्धं भुक्त्वा पीत्वा च एकत्रायतं—सुबद्धं भाण्डकं—पात्रकाद्युपकरणं कृत्वा वपुषा सह प्रावृत्य वर्षत्यप्यनस्तमिते सूर्ये वसतावागन्तव्यमेव, बहिर्वसतस्त्वेकाकिन आत्मपरोभयसमुत्था बहवो दोषाः, वसतिस्थाः साधवश्चाधृतिं कुर्युरिति ॥ ३६ ॥

वासावासं पज्जोसवियस्स निग्गंथस्स गाहावइकुलं पिंडवायपडिआए अणुपविट्ठस्स निगिज्जिअ २ वुट्ठिकाए निवइज्जा कप्पइ से अहे आरामंसि वा जाव उवागच्छित्तए ॥ ३७ ॥

व्याख्या—वासावासमित्यादित उवागच्छित्तए त्ति यावत्सुगमम् ॥ ३७ ॥ अथ कथं विकटगृहवृक्षमूलादौ स्थेयमित्याह—

तत्थ नो कप्पइ एगस्स निग्गंथस्स एगाए निग्गंथीए एगओ चिट्ठित्तए १, तत्थ नो कप्पइ एगस्स निग्गंथस्स दुन्हं निग्गंथीणं एगओ चिट्ठित्तए २, तत्थ नो कप्पइ दुन्हं निग्गंथाणं

एगाए निग्गंथीए एगओ चिट्ठित्तए ३, तत्थ नो कप्पइ दुन्हं निग्गंथाणं दुन्हं निग्गंथीणं एगओ चिट्ठित्तए ४, अत्थि अ इत्थ केइ पंचमे खुड्डुए वा खुड्डिआए वा अन्नेसिं वा संलोए सपडिदुवारे एवं न्हं कप्पइ एगओ चिट्ठित्तए ॥ ३८ ॥

व्याख्या—तत्थ नो कप्पइ एगस्सेत्यादित एगओ चिट्ठित्तए त्ति यावत्, व्याख्यानं सुबोधम्, एकाकित्वं च तस्य सङ्घाटिके उपोषितेऽसुखिते वा कारणविशेषाद्वा स्यात् अत्थि अ इत्थ केइ त्ति अस्ति चात्र कश्चित्पञ्चमः क्षुल्लकः साधूनां, साध्वीनां च क्षुल्लिका, उत्सर्गतः साधुरात्मना द्वितीयः संयत्यस्तु त्र्यादयः 'षट्कर्णो भिद्यते मन्त्र' इति न्यायात् अन्नेसिं वा संलोए त्ति यत्र क्षुल्लिकादिर्न स्यात् तत्रान्येषां ध्रुवकर्म्मिकलोहकारादीनां वर्पत्यप्यमुक्तस्व-कर्मणां संलोके दृष्टिपथे तत्रापि सप्रतिद्वारे सर्वतोद्वारे सर्वगृहाणां वा द्वारे एवं ण्हं ति एवं कल्पते स्थातुं ण्हमि-त्यलङ्कारे ॥ ३८ ॥

वासावासं प० निग्गंथस्स गाहावइकुलं पिंडवायपडिआए अणुप्पविट्ठस्स निग्गिज्झअ २ वुट्ठि-काए निवइज्जा कप्पइ से अहे आरामंसि वा अहे उवस्सयंसि वा जाव उवागच्छित्तए, तत्थ नो कप्पइ एगस्स निग्गंथस्स य एगाए अगारीए एगओ चिट्ठित्तए एवं चउभंगो,

अत्थि अ इत्थ केइ पंचमे थेरे वा थेरिया वा अन्नेसिं वा संलोए सपडिदुवारे एवं कप्पइ एगओ चिट्ठित्तए एवं चेव निग्गंथीए अगारस्स य भाणियव्वं ॥ ३९ ॥

व्याख्या—वासावासमित्यादितो भाणिअव्वं ति यावत्, तत्र निर्ग्रन्थस्यागारीसूत्रे निर्ग्रन्थ्याश्चागारसूत्रे प्रागुक्तरीतिरेव, अगारमस्यास्तीत्यश्रादित्वादप्रत्ययेऽगारो—गृही ॥ ३९ ॥

वासावासं प० नो कप्पइ निग्गंथाण वा निग्गंथीण वा अपरिन्नएणं अपरियन्नयस्स अट्ठाए असणं वा १ पाणं वा २ खाइमं वा ३ साइमं वा ४ जाव पडिग्गहित्तए ॥ ४० ॥ से किमाहु भंते! इच्छापरो अपरिन्नए भुंजिज्जा इच्छापरो न भुंजिज्जा ॥ ४१ ॥

व्याख्या—वासावासमित्यादित इच्छापरो न भुंजिज्जेतिपर्यन्तं सूत्रद्वयम्, तत्र अपरिण्णएणमित्यादि, मम योग्यमशनादिकं त्वमानयेरित्यपरिज्ञसेन-अभणितेन अहं तव योग्यमशनाद्यानेष्ये इत्यपरिज्ञसस्यार्थाय—कृतेऽशनादि परिगृहीतुं न कल्पते, प्रश्नपर आह—से किमाहु भंते त्ति अत्र किं कारणम् भदन्त आहुः? गुरुराह—इच्छेत्यादि इच्छा चेदस्ति तदा परो—यस्मै आनीतं स भुञ्जीत, इच्छा—अभोजनरुचिश्चेत् तदा न भुञ्जीत, यदि च परोऽनिच्छन् दाक्षिण्याद् भुङ्क्ते ततो ग्लानिस्तस्याजीर्णादिना, न भुङ्क्ते चेत् तदा वर्षासु जलहरितबाहुल्येन स्थण्डिलदौर्लभ्यात् परिष्ठापनादोषः तस्मात् पृष्ट्वाऽऽनेयमिति ॥ ४० ॥ ४१ ॥

वासावासं० प० नो कप्पइ निग्गंथाण वा २ उदउल्लेण वा ससिणिद्धेण वा काएणं असणं वा १ पा० २ खा० ३ सा० ४ आहारित्तए ॥ ४२ ॥ से किमाहु भंते ! सत्त सिणेहाययणा पन्नत्ता तं जहा पाणी १, पाणिलेहा २, नहा ३, नहसिहा ४, भमुहा ५, अहरुट्ठा ६, उत्तरुट्ठा ७। अह पुण एवं जाणिज्जा विगओदए मे काए छिन्नसिणेहे एवं से कप्पइ असणं वा ४ आहारित्तए ॥ ४३ ॥ वासावासं प० इह खलु निग्गंथाण वा २ इमाइं अट्ठ सुहुमाइं जाइं छउमत्थेणं निग्गंथेण वा २ अभिक्खणं २ जाणियव्वाइं पासियव्वाइं पडिलेहियव्वाइं भवंति, तं जहा—पाणसुहुमं १, पणगसुहुमं २, बीअसुहुमं ३, हरिअसुहुमं ४, पुप्फसुहुमं ५, अंडसुहुमं ६, लेणसुहुमं ७, सिणेहसुहुमं ८ ॥ ४४ ॥ से किं तं पाणसुहुमे? पाणसुहुमे पंचविहे पन्नत्ते तं जहा किन्हे १, नीले २, लोहिए ३, हालिद्दे ४, सुक्किले ५, अत्थि कुंथू अणुद्धरी नाम समुप्पन्ना जा ठिआ अचलमाणा छउमत्थाणं निग्गंथाण वा २ नो चक्खुफासं हव्वमागच्छंति, जा अट्ठिआ चलमाणा छउमत्थाणं नीग्गंथाण वा निग्गंथीण वा चक्खुफासं हव्वमागच्छइ, जाव छउमत्थेणं निग्गंथेण वा २

अभिक्खणं २ जाणिअव्वा पासिअव्वा पडिलेहियव्वा भवइ, से तं पाणसुहुमे १। से किं तं पणगसुहुमे? पणगसुहुमे पंचविहे पन्नत्ते तं जहा—किन्हे जाव सुक्किले । अत्थि पणगसुहुमे तद्दव्वसमाणवन्नए नामं पन्नत्ते, जे छउमत्थेणं जाव पडिलेहियव्वे भवइ, से तं पणगसुहुमे २। से किं तं बीअसुहुमे? बीअसुहुमे पंचविहे पन्नत्ते तं जहा—किन्हे जाव सुक्किल्ले, अत्थि बीअसुहुमे कणियासमाणवन्नए नामं पन्नत्ते, जे छउमत्थेणं जाव पडिलेहिअव्वे भवइ, से तं बीअसुहुमे ३। से किं तं हरिअसुहुमे? हरिअसुहुमे पंचविहे पन्नत्ते तं० किन्हे जाव सुक्किल्ले, अत्थि हरिअसुहुमे पुढवीसमाणवन्नए नामं पन्नत्ते, जे निग्गंथेण वा २ जाव पडिलेहिअव्वे भवइ, से तं हरिअसुहुमे ४। से किं तं पुप्फसुहुमे? पुप्फसुहुमे पंचविहे पन्नत्ते तं० किन्हे जाव सुकिल्ले, अत्थि पुप्फसुहुमे रुक्खसमाणवन्नए नामं पन्नत्ते, जे छउमत्थेणं जाव पडिलेहिअव्वे भवइ, से तं पुप्फसुहुमे ५। से किं तं अंडसुहमे? अंडसुहमे पंचविहे पन्नत्ते, तं जहा—उद्दंसंडे १, उक्कलिअंडे २, पिपीलिअंडे ३, हलिअंडे ४, हल्लोहलिअंडे ५, जे निग्गंथेण २ वा जाव पडिलेहिअव्वे भवइ, से तं अंडसुहुमे ६। से किं तं लेणसुहुमे? लेणसुहुमे पंच-

संबुक्कावट्टे ५, नामं पं-
विहे पन्नत्ते तं० उत्तिंगलेणे १, भिंगुलेणे २, उज्जुए ३, तालमूलए ४, संबुक्कावट्टे ५, नामं पं-
चमे जे छउमत्थेण जाव पडिलेहिअव्वे भवइ, से तं लेणसुहुमे ७। से किं तं सिणेहसुहुमे ?
सिणेहसुहुमे पंचविहे पन्नत्ते तं० उस्सा १, हिमए २, महिआ ३, करए ४, हरतणुए ५,
जे छउमत्थेणं जाव पडिलेहिअव्वे भवइ, से तं सिणेह सुहुमे ८ ॥ ४५ ॥

व्याख्या—वासावासमित्यादितः से तं सिणेहसुहुमे त्ति पर्यन्तम् सूत्रचतुष्टयेन सम्बन्धः तत्र उदउल्लेणेत्यादि
उदकार्द्रेण—गलद्बिन्दुयुक्तेन सस्निग्धेन—ईषद्बिन्दुयुक्तेन। से किमाहु भंते! स भगवान् तीर्थकरः किं कारणमत्राह गु-
रुराह—सत्तेत्यादि सप्त स्नेहायतनानि—जलावस्थानानि येषु जलं चिरेण शुष्यति, पाणी—हस्तौ पाणिरेखा—आयूरे-
खादयस्तासु चिरमुदकस्थितिः, नखा—अखण्डाः, नखशिखाः—तदग्रभागाः, भ्रूः—नेत्रोर्ध्वरोमाणि, अहरुट्ठा दाढिका,
उत्तरुट्ठा श्मश्रूणि विगतोदको—बिन्दुरहितः छिन्नस्नेहः—सर्वथा उद्घानः ॥ अट्ठ सुहुमाइं इत्यादि, सूक्ष्मत्वादल्पा-
धारत्वाच्च सूक्ष्माणि अभीक्ष्णं—पुनः पुनर्यत्र यत्र स्थाननिषीदनादाननिक्षेपादिकं करोति तानि ज्ञातव्यानि—
सूत्रोपदेशेन द्रष्टव्यानि च—चक्षुषा ज्ञात्वा दृष्ट्वा च प्रतिलेखितव्यानि—परिहर्त्तव्यतया विचारणीयानि तमिति
तद्यथा ॥ प्राणसूक्ष्मं पञ्चविधं प्रज्ञप्तं तीर्थकरगणधरैः, एकैकवर्णे सहस्रशो भेदा बहुप्रकाराश्च संयोगाः ते सर्वेऽपि
पञ्चसु कृष्णादिष्ववतरन्ति । प्राणसूक्ष्मं तु द्वीन्द्रियादयः प्राणाः यथा—ऽनुद्धरी कुन्थुः स हि चलन्नेव सम्भा-

व्यते न स्थितः सूक्ष्मत्वात् । पनक-उल्लिः स च प्रायः प्रावृषि भूमिकाष्ठभाण्डादिषु जायते यत्रोत्पद्यते तद्द्रव्यसमानवर्णश्च, नामं पन्नत्ते त्ति नामेति प्रसिद्धौ बीजसूक्ष्मं कणिका-शाल्यादिबीजानां मुखमूले नखिका-नहीति लोकरूढिः। हरितसूक्ष्मं पृथिवीसमानवर्णं हरितं तच्चाल्पसंहननत्वात् स्तोकेनापि विनश्यति । पुष्पसूक्ष्मं वटोदुम्बरादीनां तत्समवर्णत्वादलक्ष्यं तच्चोत्स्वा(च्छ्वा)सेनापि विराध्यते । अण्डसूक्ष्मं उद्दंशा-मधुमक्षिकामत्कुणाद्यास्तेषामण्डमुद्दंशाण्डं, उत्कलिकाण्डं-लूतापुटाण्डं, पिपीलिकाण्डं-कीटिकाण्डं, हलिका-गृहकोकिला ब्राह्मणी वा तस्या अण्डं हलिकाण्डं, हल्लोहलिआ-अहिलोडी सरडी कक्किण्डी इत्येकार्थाः तस्या अण्डं एतानि हि सूक्ष्माणि स्युः । लयनं आश्रयः सत्त्वानां यत्र कीटिकाद्यनेकसूक्ष्मसत्त्वा भवन्तीति लयनसूक्ष्मं, उत्तिङ्गा-भूअका गर्दभाकृतयो जीवास्तेषां लयनं भूम्युत्कीर्णगृहं उत्तिङ्गलयनं, भृङ्गः-शुष्कभूराजी जलशोषानन्तरं केदारादिषु स्फुटिता दालिरित्यर्थः, उज्जुए त्ति बिलं तालमूलकं-तालमूलाकारं अधः पृथु उपरि च सूक्ष्मं विवरं, शम्बूकावर्त्त-भ्रमरगृहं स्नेहसूक्ष्मं उस्स त्ति अवश्यायो-यो गगनात्पतति, हिमं-स्त्यानोदबिन्दुः, पिहिका-धूमरी, करका-घनोपला, हरतनुः-भूमिनिःसृततृणाग्रबिन्दुरूपो यो यवाङ्कुरादौ दृश्यते अष्टास्वपि से तं ति तदेतत् ॥ ४५ ॥

वासावासं पज्जोसविए भिक्खू इच्छिज्जा गाहा० भ० पा० नि० पविसित्तए वा, नो से कप्पइ अणापुच्छित्ता आयरियं वा उवज्झायं वा थेरं पवत्तिं गणिं गणहरं गणावच्छेयं वा जं वा

पुरओ काउं विहरइ, कप्पइ से आपुच्छिउं आयरियं वा जाव जं वा पुरओ काउं विहरइ, इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे गा० भत्त० पा० नि० प० ते य से वियरिज्जा, एवं से कप्पइ गाहा० भ० पा० नि० प०, ते य से नो वियरिज्जा एवं से नो कप्पइ भ० पा० नि० प० से किमाहु भंते! आयरिया पच्चवायं जाणंति ॥ ४६ ॥

व्याख्या—वासावासं प० इत्यादित आयरिआ पच्चवायं जाणंतीति पर्यन्तम्, तत्र एतत्सूत्रमेतत्सूत्रातिरिक्तानि चानन्तरवक्ष्यमाणानि त्रीणि सूत्राणि यद्यपि ऋतुबद्धवर्षालक्षणकालद्वयसाधारणसामाचारीविषयाणि तथापि वर्षासु विशेषणोच्यन्ते आयरिआ पच्चवायं जाणंति त्ति आचार्यः—सूत्रार्थदाता दिगाचार्यो वा, उपाध्यायः—सूत्राध्यापकः, स्थविरो—ज्ञानादिषु सीदतां स्थिरीकर्त्ता उद्यतानामुपबृंहकश्च, प्रवर्त्तको—ज्ञानादिषु पवर्त्तयिता तत्र ज्ञाने पठ गुणय शृणु उद्देशादीन् कुरु इति, दर्शने च दर्शनप्रभावकान् सम्मत्यादितर्कान् अभ्यस्येति, चारित्रे प्रायश्चित्तमुद्वहेति, अनेषणीयं—दुष्प्रत्युपेक्षितादि च मा कृथाः, यथाशक्ति द्वादशधा तपो विधेहीत्यादि, गणी—यस्य पार्श्वे आचार्याः सूत्राद्यभ्यस्यन्ति गणिनो वाऽन्ये आचार्याः सूत्राद्यर्थमुपसम्पन्नाः, गणधरः—तीर्थकृच्छिष्यादिः, गणावच्छेदको—यः साधून् गृहीत्वा बहिःक्षेत्रे आस्ते गच्छाद्युपष्टम्भार्थं क्षेत्रोपधिमार्गणादौ प्रधावनादिकर्त्ता सूत्रार्थोभयवित् यं चान्यं सामान्यसाधुमपि वयःपर्यायाभ्यां हीनमपि गीतार्थतया प्रदीपकल्पं पुरतः कृत्वा गुरुत्वेन गृहीत्वा विहरति, ते

अ से विअरिज्जा ते चाचार्यादयः से तस्स वितरेयुः—अनुज्ञां दद्युः, से किमाहु भंते त्ति प्राग्वत् आचार्य आह—आयरिया पच्चवायं जाणंति त्ति 'बहुवचनान्ता गणस्य संसूचका भवन्ती'ति न्यायात्, आचार्या इति आचार्यादयः प्रत्यपायं अपायं तत्परिहारं च जानन्ति, प्रतिकूलोऽपायस्य प्रत्यपाय इति विग्रहेण अपायपरिहारेऽपि प्रत्यपायशब्दोऽवगन्तव्यः, अनापृच्छ्य गतानां वृष्टिर्वा भवेत् प्रत्यनीकाः शैक्षस्वजना वा उपद्रवेयुः कलहो वा केनचित् आचार्यबालग्लानक्षपकप्रायोग्यं ग्राह्यं वाऽभविष्यत् ते चातिशयशालिनस्तत्सर्वं विदित्वा तस्मै अदापयिष्यन् ॥ ४६ ॥

एवं विहारभूमिं वा विआरभूमिं वा अन्नं वा जं किंचि पओयणं एवं गामाणुगामं दूइज्जित्तए ॥ ४७ ॥

व्याख्या—एवं विहारेत्यादितो दूइज्जित्तए त्ति पर्यन्तम्, तत्र विहारभूमिः—विहारो जिनसद्मनीति वचनात् चैत्यादिगमनं, विचारभूमिः—शरीरचिन्ताद्यर्थगमनं, अन्यद्वा प्रयोजनं लेपसीवनलिखनादिकमुत्स्वा(च्छ्वा)सादिवर्ज्जं सर्वमापृच्छ्यैव कर्त्तव्यमिति तत्त्वं, गुरुपारतन्त्र्यस्यैव ज्ञानादिरूपत्वात् गामाणुगामं दूइज्जित्तए त्ति हिण्डितुं भिक्षाद्यर्थं कारणे वा ग्लानादौ अन्यथा हि वर्षासु ग्रामानुग्रामं हिण्डनमनुचितमेव ॥ ४७ ॥

वासावासं प० भिक्खू इच्छिज्जा अन्नयरिं विगइं आहारित्तए, नो से कप्पइ अणापुच्छित्ता आयरिअं वा जाव गणावच्छेअयं वा जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छित्ता

व्याख्या—वासावासमित्यादितस्तं चेव त्ति यावत् सूत्रत्रयी, तत्र तेगिच्छं ति वातिक १ पैत्तिक २ श्लैष्मिक ३ सान्निपातिक ४ रोगाणां आतुर १ वैद्य २ प्रतिचारक ३ भैषज्य ४ रूपां चतुष्पदां चिकित्सां तथा चोक्तम्—"भिषक् १ द्रव्या २ ण्युपस्थाता ३, रोगी ४ पादचतुष्टयं । चिकित्सितस्य निर्दिष्टं, प्रत्येकं तच्चतुर्गुणम् ॥ १ ॥ दक्षो १ विज्ञातशास्त्रार्थो २, दृष्टकर्म्मा ३ शुचि ४ र्भिषक् । बहुकल्पं १ बहुगुणं २, सम्पन्नं ३ योग्य-४ मौषधम् ॥ २ ॥ अनुरक्तः १ शुचि २ र्दक्षो, ३ बुद्धिमान् ४ प्रतिचारकः । आढ्यो रोगी १ भिषक्वश्यो २, ज्ञापकः ३ सत्त्ववान ४ पि ॥ ३ ॥" आउट्टित्तए त्ति कारयितुं आउट्टिधातुरागमिकः करणार्थे ॥ ४९ ॥

तवोकम्मं ति अर्द्धमासिकादितपः अत्र प्रत्यपायान्—समर्थो वाऽसमर्थो वाऽयं वैयावृत्त्यकरो वाऽन्यो वा वैयावृत्त्यकरोऽस्ति नास्ति वा पारणकादियोग्यं क्षेत्रमस्ति नास्ति वेत्यादिकान् आचार्या एव विदन्ति ॥ ५० ॥

अपश्चिमं—चरमं मरणमपश्चिममरणं न पुनर्यत्प्रतिक्षणमायुर्दलिकानुभवलक्षणमावीचिकमरणं तदेवान्तोऽपश्चिममरणान्तस्तत्रभवा आर्षत्वादुत्तरपदवृद्धावपश्चिममारणान्तिका सा चासौ संलेखना च संलिख्यते—कृशीक्रियते शरीरकषायाद्यनयेति सा च द्रव्यभावभेदभिन्ना 'चत्तारि विचित्ताइं' इत्यादिकाऽपश्चिममारणान्तिकसंलेखना तस्या जूसण त्ति जोषणं—सेवा तया झूसिए त्ति क्षपितशरीरः अत एव प्रत्याख्यातभक्तपानः पादपोपगतः—कृतपादपोपगमनः अत एव कालं—जीवितकालं मरणकालं वाऽनवकाङ्क्षन्—अनभिलषन् विहर्त्तुमिच्छेत्, अत्र प्रत्यपाया—अयं निस्तारको न वा समाधिपानकं निर्यामका वा सन्ति न वेत्यादयः, क्षपकस्य ह्युदरमलशोधनार्थं त्वगेलानाग-

दत्ते बहिर्गन्तुं यावत्कायोत्सर्गेऽपि स्थातुं न कल्पते वृष्टिभयात्, यदि सन्निहितयतिस्तिम्यन्तमुपधि चिन्तयति तदा कल्पते चिन्तकाभावे तु जलक्लेदचौरहरणाप्कायविराधनोपकरणहान्यादयो दोषाः । स्थानं—ऊर्ध्वस्थानं तच्च कायोत्सर्गलक्षणं इमं ता इत्यादि इदं वसादि तावत् मुहूर्त्तकं—मुहूर्त्तमात्रं जानीहि—विभावय जावताव त्ति भाषामात्रं यावदर्थे स च सन्निहितसाधुः से तस्स उपधिचिन्तनेच्छाकारकर्तुः प्रतिश्रृणुयाद्—अङ्गीकुर्यात् वचनमिति शेषः । शेषं स्पष्टम् ॥ ५२ ॥

वासावासं प० नो कप्पइ निग्गंथाण वा निग्गंथीण वा अणभिग्गहिअसिज्जासणिएणं हुत्तए, आयाणमेयं अणभिग्गहिअसिज्जासणियस्स अणुच्चाकुइअस्स अणट्ठाबंधिअस्स अमिआसणिअस्स अणाताविअस्स असमियस्स अभिक्खणं २ अपडिलेहणासीलस्स अपमज्जणासीलस्स तहा तहा णं संजमे दुराराहए भवइ ॥ ५३ ॥

व्याख्या—वासावासमित्यादितः संजमे दुराराहए भवइ त्ति यावत्, तत्र अनभिगृहीतशय्यासन एवानभिगृहीतशय्यासनिकः स्वार्थे इकः तथाविधेन भवितुं न कल्पते—न युक्तं, वर्षासु यतिना मणिकुट्टिमेऽपि पीठफलकाभिग्रहवतैव भाव्यं, अन्यथा शीतलायां भूमौ शयने कुन्थ्वादिप्राणविराधनाऽजीर्णादिदोषाश्च स्युः, आसने तु कुन्थ्वादिसङ्घट्टनिषद्यामालिन्याप्कायवधादयः, आयाणमेअं ति कर्म्मणां दोषाणां वा आदानं—उपादानकारणं एतदनभि-

गृहीतशय्यासनिकत्वं, अथवाऽभिग्रहो निश्चयः स्वपरिगृहीतमेव शय्यासनं मया भोक्तव्यं नान्यपरिगृहीतम्, आदानत्वमेव द्रढयति—अणभिग्गहिअ इत्यादि सुगमम्। अणुच्चाकुइअस्स त्ति 'कुच परिस्पन्दे' अकुचा—ऽपरिस्पन्दा निश्चला यस्याः कम्बिका न चलन्ति, अदृढबन्धने हि सङ्घर्षान्मत्कुणकुन्थ्वादिवधः स्यात्, उच्चा हस्तादि यावत् येन पिपीलिकादिवधो न स्यात् सर्पादिर्वा न दशेत्, उच्चा चासौ अकुचा च उच्चाकुचा कम्बादिमयी शय्या, सा विद्यते यस्यासावुच्चाकुचिकः, न उच्चाकुचिकोऽनुच्चाकुचिकः—नीचसपरिस्पन्दशय्याकस्तस्य अणट्ठाबंधिस्स त्ति अनर्थबन्धिनः—पक्षमध्येऽनर्थकं—निष्प्रयोजनमेकवारोपरि द्वौ त्रींश्चतुरो वा वारान् कंबासु बन्धान् ददाति चतुरुपरि बहूनि वाऽङ्ककानि बध्नाति, तथा च स्वाध्यायपलिमन्थादयो दोषाः, यदि चैकाङ्गिकं चम्पकादिपट्टकं लभ्यते तदा तदेव ग्राह्यम्, बन्धनादिप्रक्रियापरिहारात् अमिआसणिअस्स त्ति अमित्तासनिकस्य—अवद्धासनस्य स्थानात् स्थानान्तरं हि मुहुर्मुहुः सङ्क्रामतः सत्त्ववधः स्यात्, अनेकानि वा आसनानि सेवमानस्य अणाताविअस्स त्ति अनातापिनः—संस्तारकपात्रादीनामातपेऽदातुः तत्र च पनकसंसक्त्यादयो दोषाः, उपभोगे च जीववधः, उपभोगाभावे चोपकरणमधिकरणमेवेति, असमितस्य ईर्यादिषु तत्राद्यतुर्यपञ्चमसमितिष्वसमितो जीवान् हन्ति, भाषाऽसमितः सम्पातिमान्, एषणाऽसमितो हस्तमात्रादावप्कायः परिणतो न वेति, अभीक्ष्णं अभीक्ष्णं—पुनः पुनरप्रतिलेखनाशीलस्य—चक्षुषाऽदृष्ट्वा अप्रमार्जनाशीलस्य—रजोहरणादिनाऽप्रमृज्य स्थानादिकर्त्तुः आभ्यां च दुःप्रतिलेखिते दुःप्रमार्जिते सङ्गृहीते

नञः कुत्सार्थत्वात् तथा तथा—तेन तेन प्रकारेण संयमो दुराराध्यो—दुष्प्रतिपाल्यो भवति, यथा यथा तानि तानि स्थानानि करोति तथा तथा संयमाराधना दुष्करा इत्यर्थः ॥ ५३ ॥ आदानमुक्त्वाऽनादानमाह—

अणायाणमेअं अभिग्गहिअसिज्जासणिअस्स उच्चाकुइअस्स अट्ठाबंधिस्स मियासणिअस्स आयाविअस्स समियस्स अभिक्खणं अभिक्खणं पडिलेहणासीलस्स पमज्जणासीलस्स तहा २ णं संजमे सुआराहए भवइ ॥ ५४ ॥

व्याख्या—अणायाणमित्यादितः संजमे सुआराहए भवइ त्ति पर्यन्तम्, तत्र कर्म्मणामसंयमस्य वाऽनादानमेतत् शय्यासनाभिग्रहवता भाव्यम्, उच्चाकुचशय्या कर्त्तव्या, अर्थाय सकृच पक्षान्तर्बन्धनीया अङ्ककानि चत्वारि कार्याणि, अथ संयमाराधनाय चत्वारि स्थानान्याह—कारण एवोत्थानाद्धद्धासनेन भाव्यम् १, संस्तारकादीन्यातापनीयानि २, ईर्यादिषु समितेन यतनावता भाव्यम् ३, प्रतिलेखनाप्रमार्जनाशीलेन च भाव्यम् ४, यथा यथा एतानि स्थानानि करोति तथा तथा संयमः सुखाराध्यः सुकरो भवतीति ततश्च मोक्षः ॥ ५४ ॥

वासावासं प० कप्पइ निग्गंथाण वा निग्गंथीण वा तओ उच्चारपासवणभूमीओ पडिलेहित्तए, न तहा हेमंतगिम्हासु जहा णं वासासु, से किमाहु भंते ! वासासु णं ओसन्नं पाणा य तणा य बीआ य पणगा य हरिआणि य भवंति ॥ ५५ ॥ वासावासं प० कप्पइ निग्गंथाण

**तं रयणिं उवायणावित्तए, अज्जेणं खुरमुंडेण वा लुक्कसिरएण वा होयव्वं सिया, पक्खिया आरोवणा, मासिए खुरमुंडे, अद्धमासिए कत्तरिमुंडे, छम्मासिए लोए, संवच्छरिए वा थेरकप्पे ॥ ५७ ॥**

व्याख्या—वासावासमित्यादितः संवच्छरिए थेरकप्पे त्ति यावत्, तत्र पर्युषणातः परं आषाढचतुर्मासकादनन्तरमासतां दीर्घा'धुवलोओ उ जिणाणं निच्चं थेराण वासासु'त्ति वचनात् गोलोमप्रमाणा अपि केशा न स्थापनीयाः, यावत्तां रजनीं भाद्रसितपञ्चमीं नातिक्रामयेत् तत्पञ्चम्या रात्रेरर्वागेव लोचं कारयेत्, इदानीं तु भाद्रसितचतुर्थ्या रात्रेरर्वागेवेति, अयं भावः—समर्थो वर्षासु नित्यं लोचं कारयेत् असमर्थोऽपि तां रात्रिं नोल्लङ्घयेत्, पर्युषणायां लोचं विनाऽवश्यं प्रतिक्रमणस्याकल्प्यत्वात्, केशेषु हि अप्कायविराधना तत्संसर्गाच्च यूकाः सम्मूर्च्छन्ति, ताश्च कण्डूयमानो हन्ति शिरसि नखक्षतं वा स्यात्, यदि च क्षुरेण मुण्डापयति कर्त्तर्या वा तदाज्ञाभङ्गाद्याः संयमात्मविराधना च यूकाश्छिद्यन्ते नापितश्च पश्चात्कर्म्म करोति अपभ्राजना च शासनस्य ततो लोच एव श्रेयान्, यदि वाऽसहिष्णोर्लोचे कृते ज्वरादिर्वा स्याद्बालो वा रुद्यात् धर्म्मं वा त्यजेत् ततो न तस्य लोचः कार्य इत्याह—अज्जेणमित्यादि आर्येण—साधुना क्षुरमुण्डेन वा लुञ्चितशिरोजेन वा भवितव्यं स्यात् लुक्क त्ति लुञ्चिताः शिरोजाः—केशा यस्य अपवादतो बालग्लानादिना क्षुरमुण्डेन उत्सर्गतो लुञ्चितशिरोजेनेत्यर्थः, तत्र च केवलप्रासुकोदकेनात्मना गृहीत्वा शिरः प्रक्षाल्य नापितस्यापि तेन करौ क्षालयति यस्तु क्षुरेणापि कारयितुमक्षमो व्रणादिमच्छिरो

व्याख्या—वासावासमित्यादितः से निज्जूहिअव्वे सिअ त्ति पर्यन्तम्, तत्र अहिगरणं वइत्तए त्ति अधिकरणं—राटिस्तत्करं वचनमप्यधिकरणं वइत्तए त्ति वदितुं अकप्पेणं ति हे आर्य ! अकल्पेन—अनाचारेण वदसीति वक्तव्यः, यतः पर्युषणादिनतोऽर्वाक् पर्युषणादिन एव वा यदधिकरणमुत्पन्नं तत्पर्युषणायां क्षामितं यच्च त्वं पर्युषणातः परमप्यधिकरणं वदसि सोऽयमकल्प्य इति भावः, निज्जूहियव्वे सिआ इति निर्यूहितव्यः—ताम्बूलिकपत्रदृष्टान्तेन सङ्घाद्बहिः

कर्त्तव्यः, यथा ताम्बूलिकेन विनष्टं पत्रमन्यानि पत्राणि विनाशयद्बहिरेव क्रियते तद्वदयमप्यनन्तानुबन्धिक्रोधाद्याविष्टो विनष्ट एवेत्यतो बहिः कर्त्तव्य इति भावः, तथा अन्योऽपि द्विजदृष्टान्तो यथा—खेटवास्तव्यो रुद्रनामा द्विजो वर्षाकाले केदारान् कृष्टुं हलं लात्वा क्षेत्रं गतो, हलं वाहयतस्तस्य गलिर्वलीवर्द्द उपविष्टस्तोत्रेण ताड्यमानोऽपि यावन्नोत्तिष्ठति तदा क्रुधाकुलेन केदारत्रयमृत्खण्डैरेवाहन्यमानो निश्वासरोधान्मृतः, पश्चात्स पश्चात्तापं विदधानो महास्थाने गत्वा स्ववृत्तान्तं कथयन्नुपशान्तोऽनुपशान्तो वेति महास्थानस्थैः पुरुषैः पृष्टे नाद्यापि ममोपशान्तिरित्युक्तेऽयोग्योऽयमनुपशान्तकषायत्वादपांक्तेयो द्विजैश्चक्रे, एवं वार्षिकपर्व्वण्यपि 'साहम्मिए अहिगरणं करेमाणे'त्ति वचनात्साधर्म्मिकैः सममधिकरणं कुर्वाणः सङ्घबाह्यो भवत्यत एव सापराधोऽपि चण्डप्रद्योतः साधर्म्मिक इति कृत्वा उदयनराज्ञा मुक्तः । तद्व्यतिकरस्त्वेवम्—सिन्धुदेशे महसेनप्रभृतिदशमुकुटबद्धनृपसेव्यमानो वीतभयपुराधिपतिरुदयनराजा, स हि विद्युन्माल्यर्पितदेवाधिदेवप्रतिमार्चकश्राद्धार्पितगुटिकाजाताऽद्भुतरूपाया देवदत्ताया दास्या अपहर्त्तारं चतुर्दशमुकुटबद्धराजसेव्यं मालवाधिपं चण्डप्रद्योतं सङ्ग्रामे बद्ध्वा पश्चादागच्छन् दशपुरस्थाने वार्षिकप-

वेणि कृतोपवासः सूपैः पृथक्भोजनाय पृष्टे विपभ्रान्त्या ममाप्यद्योपवासोऽस्तीति वदति धूर्त्तसाधर्मिकेऽन्यस्मिन् वद्धे मम कथं प्रतिक्रान्तिशुद्धिरिति विचिन्त्य तं मुक्त्वा क्षमयित्वा च मम दासीपतिरिति पूर्वलिखिताक्षरस्थगनार्थं भाले पट्टबन्धं दत्त्वाऽवन्तिदेशं दत्तवानिति । न पुनः कुम्भकारक्षुल्लकदृष्टान्तेन द्रव्यत एव क्षामणकं विधेयम्, स चैवम्—कश्चित् क्षुल्लकः कुम्भकारभाण्डानि कर्करैः सच्छिद्रीकुर्वन् मा कुर्वित्थं कुलालेन निवारितो 'मिच्छामि दुक्कडं' इति वाङ्मात्रेण वदन्नपि पुनः पुनः तथा कुर्वन् एकदा कुलालेन कर्णमोटनपुरस्सरं कथमहं पीड्ये त्वयेति भणन् 'मिच्छामि दुक्कडं' इति क्षुल्लकवत्पाठमात्रमुच्चरता शिक्षितः, एवं मिथ्यादुष्कृतं द्रव्यतो न देयम्, उपशान्तोपस्थितस्य च मूलं दातव्यम् ॥ ५८ ॥

वासावासं प० इह खलु निग्गंथाण वा २ अज्जेव कक्खडे कडुए विग्गहे समुप्पज्जिज्जा, सेहे राइणिअं खामिज्जा राइणिए वि सेहं खामिज्जा, (ग्रं० १२००) खमियव्वं खमावियव्वं उवसमियव्वं उवसमावियव्वं संमुइसंपुच्छणाबहुलेण होयव्वं, जो उवसमइ तस्स अत्थि आराहणा, जो उ न उवसमइ तस्स नत्थि आराहणा, तम्हा अप्पणा चेव उवसमियव्वं, से किमाहु भंते! उवसमसारं खु सामन्नं ॥ ५९ ॥

व्याख्या—वासावासमित्यादित उवसमसारं खु सामण्णमिति पर्यन्तम्, तत्र इह प्रवचने अद्यैव पर्युषणादिने

कक्खडः—उच्चैःशब्दः कडुको—जकारमकारादिरूपः विग्रहः—कलहः समुत्पद्यते, शैक्षोऽवमरात्निकः रात्निकं—रत्नाधिकं, यद्यपि रात्निकः प्रथमं सामाचारीवितथकरणेऽपराद्धस्तथापि शैक्षेण रात्निकः क्षामणीयः, अथ शैक्षोऽपुष्टधर्मा तदा रात्निकस्तं प्रथमं क्षमयति, तस्मात् क्षमितव्यं स्वयमेव क्षामयितव्यः परः, अव्यक्तत्वान्नपुंसकत्वं किं तस्या गर्भे जातमितिवत्। तथा उपशमयितव्यं—आत्मना उपशमः कर्त्तव्यः, उपशमयितव्यः परः—"जं अज्जिअं समीपत्तएहिं तव निअमबंभमइएहिं। मा हुतयं कलहंता, उछिंचह सागपत्तेहिं ॥ १ ॥ जं अज्जिअं चरित्तं, देसूणाए वि पुव्वकोडीए। तं पि कसाइअमित्तो, हारेइ नरो मुहुत्तेणं ॥ २ ॥" इत्यादिभिरुपदेशैः सम्मुइ त्ति शोभना मतिः रागद्वेषरहितता तत्पूर्वया सम्पृच्छना सूत्रार्थेषु ग्लानानां वा तद्बहुलेन भवितव्यं, रागद्वेषौ विहाय येन साकमधिकरणमासीत् तेन सह सूत्रार्थेषु सम्प्रश्नः कार्यः तदुदन्तश्च सोढव्यः, नन्वेकतरस्य क्षमयतोऽपि यद्येको नोपशाम्यति तदा का गतिरित्याह—जो उवसमइ इत्यादि य उपशाम्यति उपशमयति वा कषायान् तस्यास्त्याराधना ज्ञानादीनां, विपर्ययः सुगम एव, सामन्नं ति श्रमणभाव उपशमसारं—उपशमप्रधानं खु—निश्चये "सामण्णमणुचरंतस्स, कसाया जस्स उक्कडा हुंति। मन्नामि उच्छुपुप्फं व, निप्फलं तस्स सामण्णं ॥१॥" इति वचनात् उपशम एव श्रामण्यसारं(रः) मृगावत्या इव केवलज्ञानहेतुत्वात्, तच्चैवम्—अन्यदा श्रीमहावीरः कौशाम्ब्यां समवसृतः, तत्र सविमानौ चन्द्रार्कौ वन्दितुं समायातौ, चन्दना च दक्षत्वादस्तसमयं ज्ञात्वा स्वस्थाने गता, मृगावती तु स्वस्थानं गतयोश्चन्द्रसूर्ययोस्तमसि विस्तृते भीता सती द्रुतं साध्वीनामुपाश्रये गता, स्थानाङ्गवृत्तौ तु 'सह साध्वीभिरार्यचन्दनासमीपं गतेति'

तदनु च तत्रेर्यापथिकीं प्रतिक्रम्य शयनस्था प्रवर्त्तिनीं प्रणम्य क्षम्यतामयमपराध इत्युक्तवतीं मृगावतीं प्रति चन्दनाऽपि चन्दनशीतलाभिर्वाणीभिर्वदति स्म, भद्रे ! भद्रकुलोत्पन्ने तवेदृशं न युक्तम्, साप्यूचे 'मयका महदेतत् पातकं कृतम्, नेदृशं भूयः करिष्ये' इत्युक्त्वा पादयोः पतिता, तावता प्रवर्त्तिन्या निद्राऽऽगात्, तया च तथैव स्थितया शुभभावतः क्षामणेन केवलज्ञानं प्राप्तम्, सर्पव्यतिकरेण प्रबुद्धा सती कथं सर्पोऽज्ञायीति प्रश्नेन केवलज्ञानमवगम्य मृगावतीं क्षमयन्ती चन्दनाऽपि केवलज्ञानमापेति दृष्टान्तेन मिथ्यादुष्कृतं देयम् ॥ ५९ ॥

**वासावासं प० कप्पइ निग्गंथाण वा २ तओ उवस्सया गिन्हित्तए तं वेउव्विया पडिलेहा साइज्जिया पमज्जणा ॥ ६० ॥**

व्याख्या—वासावासमित्यादितः पमज्जण त्ति यावत्, तत्र वर्षासु उपाश्रयास्त्रयो ग्राह्याः संसक्तजलप्लावनादिदोषभयात्, तमितिपदं तत्रार्थे सम्भाव्यते वेउव्विआ कापि वेउव्विअ त्ति उभयत्रापि पुनः पुनरित्यर्थः, साइज्जिआ पमज्जण त्ति आर्षे 'साइज्ज धातुरास्वादने' वर्त्तते, तत्र उपभुज्यमानो य उपाश्रयः स च 'कयमाणे कडे' इति न्यायात् 'साइज्जिओ'त्ति भण्यते, तत्सम्बन्धिनी प्रमार्जनाऽपि साइज्जिआ, अयं भावः—यस्मिन्नुपाश्रये स्थिताः साधवस्तं प्रातः प्रमार्जयन्ति १, पुनर्भिक्षागतेषु साधुषु २, पुनः प्रतिलेखनाकाले तृतीयप्रहरान्ते ३ चेति वारत्रयं प्रमार्जयन्ति वर्षासु ऋतुबद्धे तु द्विः, यत्तु 'सन्देहविषौषध्यां वारचतुष्टयप्रमार्जनमुक्तं तदयुक्तम्' चूर्णौ—

वारत्रयस्यैवोक्तत्वात्, अयं च विधिरसंसक्ते संसक्ते तु पुनः पुनः प्रमार्जयन्ति शेषोपाश्रयद्वयं प्रतिदिनं प्रतिलिखन्ति–प्रत्यवेक्षन्ते, मा कोऽपि तत्र स्थास्यति ममत्वं वा करिष्यतीति तृतीयदिवसे पादप्रोञ्छनकेन प्रमार्जयन्ति अत उक्तं वेउव्विआ पडिलेह त्ति ॥ ६० ॥

वासावासं प० निग्गंथाण वा २ कप्पइ अन्नयरिं दिसिं वा अणुदिसिं वा अवगिज्झिय २ भत्तपाणं गवेसित्तए, से किमाहु भंते! ओसन्नं समणा भगवंतो वासासु तवसंपउत्ता भवंति तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा तामेव दिसिं वा अणुदिसिं वा समणा भगवंतो पडिजागरंति ॥ ६१ ॥

व्याख्या—वासावासमित्यादितः पडिजागरंतीति पर्यन्तम्, तत्र अन्नयरिं ति अन्यतरां दिशं पूर्वादिकां अनुदिशिं(शं)–विदिशमाग्नेय्यादिकामवगृह्य–उद्दिश्य अहममुकां दिशमनुदिशं वा यास्यामीत्यन्यसाधुभ्यः कथयित्वा भक्तपानं गवेषयितुं–विहर्त्तुं कल्पते से किमाहु भंते! त्ति किमत्र कारणं? आचार्य आह–ओसन्नं प्रायेण श्रमणा भगवन्तो वर्षासु तपःसंप्रयुक्ताः प्रायश्चित्तवहनार्थं संयमार्थं स्निग्धकाले मोहजयार्थं षष्ठादितपश्चारिणो भवन्ति, ते च तपस्विनो दुर्बलास्तपसैव कृशाङ्गा अत एव क्लान्ताः सन्तो मूर्च्छेयुः प्रपतेयुर्वा, तत्र मूर्च्छा–इन्द्रियमनोवैकल्यं प्रपतनं–दौर्बल्यात् प्रस्खलय भूमौ पतनं, तामेव दिशमनुदिशं वा श्रमणा भगवन्तः प्रतिजाग्रति–प्रतिचरन्ति गवेषयन्ति,

अयं भावार्थः—भक्ताद्यर्थं यस्यां दिशि विदिशि वा गच्छेयुस्तां गुर्वादिभ्यः कथयित्वा गच्छन्ति येन तेषां तत्र गतानां तपःक्लमादिमूर्च्छितानां प्रतिपतितानां वा पाश्चात्याः साधवस्तस्यां दिशि विदिशि वाऽभ्येत्य सारां कुर्वन्ति, अकथयित्वाऽनुगतानां दिगपरिज्ञानात् कथं ते तां कुर्युरिति ॥ ६१ ॥

वासावासं प० कप्पइ निग्गंथाण वा २ जाव चत्तारि पंच जोयणाइं गंतुं पडिनियत्तए अंतरा वि अ से कप्पइ वत्थव्वए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥ ६२ ॥

व्याख्या—वासावासमित्यादित उवायणावित्तए त्ति पर्यन्तम्, तत्र वर्षाकल्पौषधवैद्याद्यर्थं ग्लानसाराकरणार्थं वा यावच्चत्वारि पञ्च वा योजनानि गत्वा प्रतिनिवर्तेत—तत्प्राप्तौ तदैव व्याघुट्टेत न तु यत्र लब्धं तत्रैव वसेत्, स्वस्थानं प्रासुमक्षमश्चेत्तदान्तरापि वसेन्न पुनस्तत्रैव, एवं हि वीर्याचार आराधितो भवतीति, यत्र दिने वर्षाकल्पादि लब्धं तद्दिनरात्रिं तत्रैव नातिक्रमेत्, यस्यां वेलायां तल्लब्धं तस्यामेव वेलायां ततो निर्गत्य बहिस्तिष्ठेत्, कारणे तु तादृशे तत्रापि वसेदिति हृदयम् ॥ ६२ ॥ इति पर्युषणासामाचारीमभिधाय तत्पालनायाः फलमाह—

इच्चेइअं संवच्छरिअं थेरकप्पं अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं सम्मं काएण फासित्ता पालित्ता सोभित्ता तीरित्ता किट्टित्ता आराहित्ता आणाए अणुपालित्ता अत्थेगइया समणा निग्गंथा तेणेव भवग्गहणेणं सिज्झंति बुज्झंति मुच्चंति परिनिव्वाइंति सव्वदुक्खाणमंतं क-

रेंति, अत्थेगइया दुच्चेणं भवग्गहणेणं सिज्झंति जाव अंतं करेंति, अत्थेगइया तच्चेणं जाव अंतं करेंति, सत्तट्ठभवग्गहणाइं पुण नाइक्कमंति ॥ ६३ ॥

व्याख्या—इच्चेइअमित्यादितः पुण नाइक्कमंति त्ति यावत्, तत्र इतिः—उपदर्शने एनं—पूर्वोक्तं सांवत्सरिकं—वर्षारात्रिकं स्थविरकल्पं—यद्यपि किञ्चिज्जिनकल्पिकानामपि सामान्यं तथापि भूम्ना स्थविराणामेवात्र सामाचारीति—स्थविरकल्पमर्यादा यथासूत्रं—यथा सूत्रेण भणितं न सूत्रव्यपेतं, तथा कुर्वतः कल्पो भवति अन्यथा त्वकल्प इति यथाकल्पं, एवं कुर्वतश्च ज्ञानादित्रयलक्षणो मार्ग इति यथामार्गं, यत एव यथामार्गमत एव यथातथ्यं यथैव सत्यमुपदिष्टं भगवद्भिस्तथैव, तं च सम्यक्—यथावस्थितं काएण त्ति उपलक्षणत्वात्कायवाङ्मनोभिः अथवा कायशब्देनैव योगत्रयं व्याख्यायते तथाहि—कायेन—शरीरेण 'कैं गैं रैं शब्दे' इति धातोः कायते उच्चार्यते इति कायो—वचनं तेन, कं—ज्ञानं तदेवात्मा—स्वरूपं यस्य तत्कात्म मनो बुद्ध्यात्मकत्वान्मनसः तेन ततश्च कायवाङ्मनोभिरित्यर्थः, स्पृष्ट्वा—आसेव्य, पालयित्वा—अतिचारेभ्यो रक्षयित्वा, शोधयित्वा शोभयित्वा वा विधिवत्करणेन, तीरयित्वा—यावज्जीवमाराध्य यावज्जीवमाराधनेनान्तं नीत्वा, कीर्त्तयित्वाऽन्येभ्य उपदिश्य, आराध्य—न विराध्य यथावत्करणात्, आज्ञया—भगवदुपदेशेन अनुपाल्य—अन्यैः पूर्वं पालितस्य पश्चात्पालनेन, तस्यैवं पालितस्य फलमाह—अत्थेगइअ त्ति सन्त्येकेऽत्युत्तमया तदनुपालनया तस्मिन्नेव भवग्रहणे—भवे सिध्यन्ति—निष्ठितार्था भवन्ति, बुध्यन्ते—केवलज्ञानेन, मुच्यन्ते—भवोपग्राहि कर्म्मांशेभ्यः परिनिर्वान्ति—कर्म्मकृतसकलसन्तापपरिहाराच्छीतीभवन्ति, किमुक्तं भवति सर्वदुःखानां—

एवं प्रज्ञापयति—अनुज्ञापितस्य फलं ज्ञापयति, एवं प्ररूपयति—दर्पणतल इव प्रतिरूपं श्रोतॄणां हृदये सङ्क्रमयति, इदानीमाख्येयस्य नामधेयमाह—पज्जोसवणाकप्पो नाम अज्झयणं ति पर्युषणा—वर्षास्वेकक्षेत्रनिवासस्तस्याः कल्पः—सामाचारी साधुसाध्वीराश्रित्य विधिप्रतिषेधरूपाणि कर्त्तव्यानि तदभिधेययोगात् अध्ययनमपि पर्युषणाकल्पस्तथा च पर्युषणाकल्पनामाध्ययनं भूयो भूय उपदर्शयति विस्मरणशीलश्रोत्रनुग्रहार्थमनेकशः प्रदर्शयति, द्विर्वचनं निकाचनार्थमिति सम्बन्धः, सअट्ठं ति सार्थं—प्रयोजनयुक्तं न पुनरन्तर्गडुकण्टकशाखामर्दनवदभिधेयशून्यं तथाविधवर्णानुपूर्वीमात्रबद्धं, सहेउयं ति अननुपालयतोऽमी दोषा इति दोषदर्शनं हेतुः अथवा हेतुः—निमित्तं यथा 'सवीसइराए मासे वइक्कंते पज्जोसवेअव्वं' इत्युक्ते किं निमित्तं 'पाएणं अगारीणं अगाराइं' इत्यादिको हेतुस्तेन सहितं सहेतुकं, तथा सकारणं कारणं—अपवादः यथा 'आरेणावि कप्पइ पज्जोसवित्तए' इति तेन सहितं सकारणं, ससूत्रं सार्थं सोभयमिति प्रतीतं, अथ सार्थत्वं कथमध्ययनस्य न ह्यत्र टीकादाविवार्थः पृथक् व्याख्यातोऽस्ति ? सत्यं सूत्रस्यार्थनान्तरीयकत्वाददोषः, तथा सव्याकरणं—पृष्टापृष्टार्थकथनं व्याकरणं तत्सहितमिति, इति भद्रबाहुस्वामी स्वशिष्यान् ब्रूते, नेदं स्वमनीषिकया ब्रवीमि किन्तु तीर्थकरगणधरोपदेशेनेति अनेन च गुरुपारतन्त्र्यमभिहितमिति ॥ ६४ ॥

इति श्रीमत्तपागणगगनाङ्गणनभोमणिश्री ६ हीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्मसागरगणिविरचितायां श्रीकल्पकिरणावल्यां सामाचारीव्याख्यानपद्धतिः समाप्ता ॥ तत्समाप्तौ च समाप्ता श्रीपर्युषणाकल्पे तृतीयवाच्यव्याख्यानपद्धतिः ॥

व्याख्योपयोगिनिश्शेषवाच्यरुच्या वचस्विना । स्फूर्त्तिकर्त्री सदस्येषा, श्रीकल्पकिरणावलिः ॥ १ ॥
विक्रमादष्टयुक्षट्क-शशाङ्काङ्कित ( १६२८ ) वत्सरे । दीपोत्सवदिने दृब्धा, राजधन्यपुरे पुरे ॥ २ ॥ युग्मम् ।
अनुष्टुभोऽष्टचत्वारिंशच्छतानि चतुर्दश । षोडशोपरि वर्णाश्च ग्रन्थमानमिहोदितम् ॥ ३ ॥

॥ इति श्रीकल्पकिरणावलीनाम्नी वृत्तिः समाप्ता ॥

श्रीवर्द्धमानप्रभुशासनाभ्र-प्रभासने नव्यसहस्रभानोः । लीलां दधानोऽपि सुधैकधामा, सुधर्मनामा गणभृद्
बभूव ॥ १ ॥ तत्पट्टपूर्वाचलचित्रभानवो-ऽनेके बभूवुर्भुवि सूरिशेखराः । सम्प्राप्नुवन्तो गुणजां नवां नवां, गच्छस्य
संज्ञां किल कौटिकादिकाम् ॥ २ ॥ बृहद्गणाम्भोनिधिचन्द्रसन्निभाः, श्रीमज्जगच्चन्द्रगुरूत्तमाः क्रमात् । तेषामशेषा-
गमपारगामिनः, समुद्बभूवुर्भुवनैकभूपकाः ॥ ३ ॥ तपोभिर्दुस्तपैः प्रापु-र्ये तपा इति विश्रुतम् । बिरुदं बाण ५ नागेन्द्र ८
द्वि २ चन्द्रां १ कित १२८५ वत्सरे ॥ ४ ॥ ततः प्रभृति गच्छोऽयं, तपागच्छ इति क्षितौ । विख्यातोऽभूज्जनानन्द-
कन्दकन्दलनैकभूः ॥ ५ ॥ तत्परम्परया श्रीमदानन्दविमलाह्वयाः । सूरीन्द्राः समजायन्त, जगदानन्ददायिनः ॥ ६ ॥
मिथ्यामततमःस्तोम-समाक्रान्तमिदं जगत् । पतत् श्वभ्रे समुद्दध्रे, यैः क्रियोद्धारपूर्वकम् ॥ ७ ॥ तत्पट्टकुम्भिकुम्भ-
स्थलैकसिन्दूरपूरसङ्काशाः । श्रीविजयदानसूरी-श्वरा बभूवुर्जगद्विदिताः ॥ ८ ॥ तेषां पट्टे सम्प्रति, विजयन्ते हीरविजय-
सूरीशाः । ये श्वेताम्बरयति(ती)नां, सर्वेषामाधिपत्यभृतः ॥ ९ ॥ कलिकालेऽपि प्रकटी-कृततीर्थङ्करसमानमहिमानः ।
सङ्गीयन्ते सकलै-रद्भुतमाहात्म्यदर्शनतः ॥ १० ॥ तेषां विजयिनि राज्ये, राजन्ते सकलवाचकोत्तंसाः । श्रीधर्म-

सागराह्वा, निखिलागमकनककषपट्टाः ॥ ११ ॥ कुमतिमतङ्गजकुम्भ—स्थलपाटनपाटवेन सिंहसमाः । दुर्दमवादि-विवादा—दपि सततं लब्धजयवादाः ॥ १२ ॥ श्रीकल्पसूत्रगतसंशयतामसाली—नाशे नवीनतरणेः किरणालिकल्पा । एषा विशेषरचना रुचिरा वितेने, तैरत्र कल्पकिरणावलिनामवृत्तिः ॥ १३ ॥ यावत्तिष्ठति मेरु—र्यावज्जिनशासनं जगन्मध्ये । तावत्तिष्ठतु शिष्टै—र्निरन्तरं वाच्यमानाऽसौ ॥ १४ ॥ श्रीमदहम्मदावाद—वास्तव्यः सङ्घनायकः । सहज-पालनामाऽऽसीत्, पुण्यप्राग्भारभासुरः ॥ १५ ॥ सतीजनशिरोरत्न—मंगा इति तदङ्गना । कुंअरजीति सन्नामा, तयोः पुत्रोऽभवत् पुनः ॥१६॥ आबाल्यादपि पुण्यात्मा, धर्मकर्मपरायणः । सप्तक्षेत्र्यां वपन् वित्तं, स चक्रे सफलं जनुः ॥१७॥ तथाहि—श्रीविजयदानसूरीणां, समीपे समहोत्सवम् । प्रतिष्ठां कारयित्वासौ, प्रतिष्ठां प्राप भूयसीम् ॥ १८ ॥ विमानप्रतिमानं स, प्रतिश्रयमचीकरत् । स्थितये धर्मराजस्य, राजधानीमिवोत्तमाम् ॥ १९ ॥ स च सङ्घपतीभूय, यात्रां सिद्धगिरेर्व्यधात् । ततः सङ्घपतिख्यातिं, विशेषाल्लब्धवान् भुवि ॥ २० ॥ शत्रुञ्जयमहातीर्थे, पद्यावन्धपुरस्सरम् । स चैत्यं कारयामास, यशःपुञ्जमिवात्मनः ॥ २१ ॥ तालध्वजोज्जयन्ताद्रि—नाम्नोः प्रथिततीर्थयोः । जीर्णोद्धारं स चक्रेऽष्टा—पदे भरतभूपवत् ॥ २२ ॥ ज्ञानावरणकर्म्मोत्थ-ध्वान्तध्वंसविधित्सया । गुरूणामुपदेशेन स सङ्घपतिरादरात् ॥ २३ ॥ पदमाईप्रियापुत्र—विमलदाससंयुतः । अलेखयत् स्वयं वृत्ते—रमुष्याः शतशः प्रतीः ॥ २४ ॥

॥ इति प्रशस्तिः ॥



॥ इति श्रीकल्पसूत्रं किरणावलीवृत्तिसहितम् ॥